१८५० शकाब्दे १०म-वर्षस्य

# संस्कृतसाहित्यपरिषत्

संस्कृतसाहित्यपरिषदो मासिकं मुखपत्रम्

कलिकाता श्यामबाजारस्थ—
संस्कृतसाहित्यपरिषद्भवनात् प्रकाश्यते




सम्पादकः—श्रीकालीपदतर्काचार्य्यः

सह-सम्पादक.—श्रीदुर्गामोहनभट्टाचार्य्यः एम्. ए.

---

वार्षिकमूल्यम्—२) रूप्यकद्वयम्

## दशमवर्षीयसंस्कृतसाहित्यपरिषत्पत्रिकायाः-

## विषयसूची—

---

## चित्रसूचिः



---


प्रकाशको मुद्रापकश्च—श्रीदुर्गामोहनकाव्यसांख्यपुराणतीर्थ एम्. ए.
संस्कृतसाहित्यपरिषत्, श्यामबाजार, कलिकाता।
मुद्रापणस्थानम्—सिद्धेश्वरप्रेस, २९ नन्दकुमारचौधुरीसेकेण्डलेन,
कलिकाता।



म १२५७ वङ्गाब्दे पौषे

पण्डितप्रवरः स्वर्गीयशशधरतर्कचूडामणिः

ब्राह्मणसभापत्रिकासौजन्यात् प्राप्तम् ।

मृत्युः १३३४ वङ्गाब्दे फाल्गुने

# संस्कृतसाहित्यपरिषत्

इयं संस्कृतसाहित्यपरिषत् प्रतिभा रवेः ।
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम् ॥

१८५० शकीये वैशाखे ११श वर्षस्य १म-संख्या


## मतिमञ्जरी

**नववर्षः ।**—प्राप्तोऽद्यप्रभृत्येवायं नूतनः संवत्सरः संस्कृत-साहित्यपरिषदः । नूतन इति यत् सत्यं कोऽत्र सन्देहावसरः । स्वर्गतः पशुपतिनाथः, तदनु च तद्वियोगव्यथामसहमान इव गोष्पति-काव्यतीर्थोऽपि हा हन्त मासद्वयाभ्यन्तर एवान्तरितः चितितलात् ।

पाठकमहाभागाः । कथमपि वयं यतमाना अपि तयोर्व्विस्मर्तुं न प्रभवामः । सर्व्वमस्याः परिषदो द्रव्यजातं तयोरेवानारतं स्मृति-मुद्दीपयति । के वा पूर्व्वं जानीयुर्यदेतौ सम्पादकौ कर्म्मान्तराणीव महाप्रयाणमपि परस्परं सम्मन्त्र्येवानुष्ठास्यतः, कथमन्यथा सम्पूर्ण-माकस्मिकतयोपलभ्यमानं स्वल्पमग्रपश्चाद्भावमङ्गीकृत्य परलोकं प्रातिष्ठत म् ।

अस्मास्वकालवत् प्रतीयमानेऽपि विधातृविहिते काले भागीरथी-तीरे एव तत्रभवतोर्मृत्युरभूदिति सत्यप्याश्वासस्थाने साधारणे, गोष्पति-काव्यतीर्थप्रवृत्तिमुपधार्य्य विदीर्य्यन्त इव नो हृदयानि, यतः स हि महात्मा गङ्गावरनगरीमुपसङ्गम्य तत्र प्रोषितुमभिवाञ्छन्नस्माभि-

रन्तरा सम्पादकान्तरमरणभोरुभि. कलिकातायामानीतो दैवेनोपरतश्च। अत्र च स्वधुंनीमणिकर्णिकयोः कालीघट्टशूलिघट्टयोरदृष्टविशेषजनकताया लाघवगौरवे न वयं विमृशामः, परं यदस्माभिरविमृष्यकारिभिः स भवात् समीहितादवरोपितस्तदेवास्मानतिमात्रं पीडयति।

सहृदयाः! "पूरोत्पीडे तडागस्य परीवाहः प्रतिक्रिया। शोकक्षोभे च हृदय प्रलापैरेव धार्य्यते" इति महाजनवचनमनुस्मृत्य विलापेन बन्धुजनेभ्यः सविभागेन च दुर्व्वहं शोकभार लघूकरिष्यतामस्माकमयमायासो मा तावद् विराग जनयेदिति सप्रणयमनुनीयन्ते तत्रभवन्तः। वर्षसञ्चितकर्म्मणा विष्णौ निवेदनाशयेव वर्षशेषे महाविषुवसङ्क्रान्त्या विष्णुप्रीतये ब्राह्मणेभ्यो जलपूर्णान् घटान् ददति स्वाचारनिष्ठाः सनातनधर्म्मिणः। अस्माकं पुनर्भग्नौ मङ्गल कुम्भाविति केवलनेत्राम्बुसम्भारेण अचिरपरेताभ्या सम्पादकाभ्यामावर्ज्जिता निवापाञ्जलय'। आस्तां तावदत्रैव शोकप्रलाप, यतो वर्षसहस्रं रोदनेनापि नास्माकं शोकलाघवं, न वा तत्रभवतोः पुनरावृत्तिश्च भविष्यत इति अश्रान्तमुद्गतामश्रुधारां नयनयोरेव निगृह्य वक्तव्यान्तरमनन्तरोक्रियमानमुपक्षिपामः।

पर्य्यायपातिनो सुखस्य दुःखस्येत्यय वैधात्रो विधिः, तेन च यातेऽपि चन्द्रसूर्य्ययोरकालग्रासे ज्योतिषदन्तर परिषदन्तरोत्तमलङ्कुर्वंदस्मानानन्दयतीति ज्ञापितपूर्वमपि पुनर्विज्ञापयामः।

तच्चेदं वृत्तम्,—पशुपतेः श्मशानवासमुपलभ्य दुर्गा परिषद निरवसादामापादयितुमुद्युञ्जानैस्तत्परिचालकै श्रीमानमरेश्वरठाकुरवेदान्तशास्त्री एम् ए महोदयः सनिर्बन्धमनुरुद्धः। स चापि महात्मा अपरिक्षीणप्रणयाना तेषा गुरुत्वमनुरुध्य सम्पादकत्वमङ्गीकृतवान्।

विश्वविद्यालयस्यान्यतमाध्यापकोऽयमध्यापनाया यशस्वितमः, चारित्रे मनस्वितमः, अधीतशास्त्रविषये च प्राज्ञतम इति सुविदित-

भिज्ञत्वाना विदिततत्त्वानां जनानाम्। इतः पूर्व्वमेते पाटलीपुत्रीय-वि एन् महाविद्यालयेऽध्यापकपदं विश्वविद्यालयसभायाञ्च सभ्यपद मध्यासीनाः प्रावीण्यमतिमात्र तत्तत्कर्म्मसु प्रादर्शयन्। एवमत्यल्पकालं सम्पादकपदमाश्रितास्ते यथा कर्म्मकौशलमपि प्रादर्शयन् तेन सर्वेषामेव परिषदभ्युदयकामिना मनांसि समावर्जयन्निति साटोप वक्तुमर्हामः।

एतेषां कर्म्मकुशलताया प्रत्ययादेव गोष्पतिकाव्यतीर्थमरणानन्तरमपेक्षित सम्पादकान्तरमपि निराकृतवन्त. प्रवीणाः कार्य्यनिर्वाहकसभास्ताराः। यदि च तत्रभवता कर्म्मणता किञ्चिदलघुसञ्चारापि भवेत्, तथापि "भवति विज्ञतमः क्रमशो जनः" इति नास्माकमुद्वेगकारणमल्पीयोऽपि परिलक्ष्यते। न ह्यतीतैरपि सम्पादकैरेकपद एव पद कर्म्मठतायामधायोति ध्यायन्तु तदानीन्तनाः समदर्शिनः। वैमतिको वेतण्डिकञ्च कर्म्मप्रारम्भ काण्डे पुनरनुमोदनं विरुद्धबुद्धीनामपि लभते इति च भूयोदर्शनमस्मानाश्वासयति।

यद्यपि योगः क्षेमश्चेत्युभावेव कार्य्यमात्रमुपकुरुतः, तथापि परिषदः साम्प्रतिकोमार्शिकावस्थां भित्तेश्च सुदृढभूमिकत्वमनुभूय सम्भावयितुं शक्यते यत् केवलक्षेमचमेरैवेयं परिचालयितुं शक्यते किं पुनरुभयभावनाचतुरैरमरेश्वरसदृशैर्विबुधैरिति।

सन्ति च तथाविधाः केचन सहसम्पादका, ये पूर्वतनसम्पादकच्छायामाश्रित्य अधीतज्ञातव्यविशेषाः साम्प्रतमपि परमेण प्रेम्णा परया च कर्म्मनिष्ठया परिषदं परिचरन्त समुपलभ्यन्ते। अतीतसम्पादकाना जीवद्दशायामपि त एव सहसम्पादका प्रायेण कार्य्यभारं बिभ्रति स्मेति दृष्टचरी तेषां कुशलता न नः शङ्काकारणमणुमात्रमपि समर्थयते।

तत्र च श्रीचिन्ताहरणकाव्यतीर्थः एम् ए, श्रीरामकृष्णचक्रवर्त्ती एम् ए, श्रीवामाचरणकाव्यतीर्थः, श्रीदीनबन्धुसाहित्यशास्त्रिप्रमुखा भवतामतिमात्रं परिचिता इति नामतः समुल्लिख्यन्ते।

अनुग्राहकाः ग्राहकाः । सम्प्रति पत्रिकाविषयिणीं काञ्चन वाचो-रचनां विनिवेद्य भवता सकाशादवकाशमासादयिष्यामहे । एवंविध एव दुर्विपाको दैवस्य, यदद्य नववर्षप्रारम्भे भवद्भ्यो यथायोग्य सम्भा-षणसम्माननालिङ्गनप्रणामादीन् सप्रसादं वाङ्मात्रेणापि कर्त्तुं नावसरं लभामहे । जाने शोकक्षुब्धा वय बन्धुभिः क्षमार्हा भवेमेति ।

कर्म्मान्तरं वाहुल्येनार्थसाध्यमपि पत्रिकासम्पादनं न तथेति सुप्र-काश विशेषविदुषाम् । अस्याश्च जीवनं निबन्धा' केवलमेकव्यक्तिकाश्चेत् न पत्रिकाशरोरमुपकुर्वंते न वा पाठकाना सन्तोषाय प्रभवेयुरित्यतो भवितव्यमेभि प्रतिव्यक्तिविश्रान्तैः । तत्र च भवन्त एव सुतरां शरणमिति सप्रश्रयं साञ्जलिबन्धमनुरुध्यन्ते यत् त्वरतां तत्रभवन्तः सुरचितानां सुचिन्तिताना विविधरसभाविताना‌ञ्च प्रबन्धसमूहानामर्पणेन पत्रिका-मिमामतिमात्र गौरवयितुम् । पत्रिकान्तराणि च सुरभारतीमयानि भारते वर्षे उत्थायोत्थाय प्रायेण विलोपभाञ्जि प्राच्यविद्वत्समाजाना कलङ्क प्रथयन्ति । केवलमियमेकैव सम्प्रत्यपि भवता नयनपथे पात्याय-माना यथा स्वामभिख्यामक्षुषा कर्त्तुमर्हेत् तथा भवद्भिरात्मविभवा-नुसारेण यत्नः कर्त्तव्य इति प्रार्थयामहे । अस्मदायत्त बहिःसौन्दर्य्य-मस्माभिर्यथाशक्ति सम्पाद्य भवता पुरत' समुपस्थाप्यते परमान्तरं सौन्दर्य्यं भवदायत्तमित्यतः "का नाम आसिका अन्येषु गच्छत्सु" इति न्यायात् भवन्तोऽपि तत्र यतेरन्निति अस्त्यस्माकं सुमहान् आशाबन्धः ।

प्रियपाठकमहाभागा । एवं सर्वतः पर्य्यालोचनया यथा दृश्यते तथास्याः पत्रिकाया. अस्याश्च संस्कृतसाहित्यपरिषत्सभाया न किमपि परिहीयमाणमनुभूयते, प्रत्युत परमाशास्महे यत् तदा न चिरेणैवानयोः समुन्नतिः सर्वातिशायिनी भारतीयविद्वद्वृन्दानामानन्द-सन्दोहप्रवर्द्धनाय सम्पत्स्यते—"वैरोभवेद् यदि न दैवमस्प्यमानम्" इति शम् ।

**कृतज्ञताविज्ञापनम् ।**—परिषत्पत्रिकायाः १३३४ वङ्गाब्दीयाया दशमवर्षीयैकादश-पञ्चपतिसंख्यायामादौ यच्चित्रं "संस्कृत-साहित्यपरिषदन्यतरसम्पादकः पशुपतिनाथः" इत्याख्यमुपनिबद्धं, तदाधारफलकम् "कलिकाता रिभिउ" इत्याख्यपत्रिकाध्यक्षा-दासादितमित्यतस्तत्परिचालकानां सौजन्यं जोघुष्यते परिषत्परि-चालकधुरीणैः । उपकृता वयमेभिः सुजनसमाजैरिति प्रमुक्तकण्ठं ब्रूमहे । यद्यपि तत्संख्यायामेव तत्प्रकाशयितुमुचितमासीत् तथापि भ्रमवशात्तन्न पारितमस्माभिरिति पुनः सलज्जमार्य्यमिश्रेभ्यो विज्ञा-पयामः ।

---

## गीतवसन्तम्

[ निबन्धकः—श्रीनरेन्द्रनाथविश्वासः ]

कश्चिन्निर्झरिणीकुले मुकुलिते चूते वसन् कोकिलः
प्रोन्निद्रः सहसा निशान्तपवनैश्चन्द्रांशुभिर्नन्दितः ।
गातुं प्राक्रमतासकृत् कृतकुहुर्व्याधूनयन् काननं
पश्चादेवमवोचतां वनचरो नद्याश्च केवर्त्तकः ॥
क्लान्ताः सम्प्रति नन्दना विरसनान्निद्रा गता भार्य्यया
वायुर्वाति सुखावहः शशधरस्तारागणैर्भासते ।
श्रान्तस्खेदमगान्मुधा मम दिनं याति क्षपा शेषतां
प्राणास्त्वद्ध्वनिशीतला विहग हे कान्तं पुनर्गीयताम् ॥
चन्द्रोऽयं नितरामधश्चरति खे स्वल्पस्थितिं सूचयन्
आर्द्राङ्गं पुनरार्द्रयन् मुहुरहो वाति क्षपान्तानिलः ।
याता मे रजनी श्रमैः कथमपि श्रान्त्या क्षणं शय्यते
कण्ठस्ते विरहावहो विहग हे मा गाय भूयः कुहुः ॥

चूतेऽस्मिन् विगते मधौ फलभृते किञ्चित्प्रभातात्यये
कूजन् क्रान्त इतः कुतः प्रतिवनं मोघं मया मृग्यसे ।
सञ्जातश्रवणज्वरेण विरहैर्दृष्टोऽसि चेत् साम्प्रत
प्राणास्त्वध्वनिशीतला विहग हे कान्तं पुनर्गीयताम् ॥

अस्मादेव विशालमञ्जुलतरो कैश्चित् स्वनैर्विश्रुते-
र्निष्क्रान्तस्य नदीतटे तरिरिव बद्धा हृता स्रोतसा ।
भ्रान्त्या मे सकलं दिनं निरशनं यातं यथा स्मर्यते
कण्ठस्ते विरहावहो विहग हे मा गाय भूयः कुहूः ॥

सुप्तो गायसि कीदृशैर्विलसितैरन्तःसुखैराकुलः
धुन्वन् कण्ठमकुण्ठितं ह्यविरलं मुग्धा दिशो ध्वानयन् ।
सद्यः पुष्पविकाशतः प्रमुदितः पुष्पाकरो दृश्यता
प्राणास्त्वध्वनिशीतला विहग हे कान्तं पुनर्गीयताम् ॥

कीदृग् यातनयाकुलः कृतकुहुस्तारस्वरं गायसि
क्लिष्टा रोदिति दिग्वधूः प्रतिरवैर्भीतस्तरुः स्पन्दते ।
लोलेयं परिबाधते कुमुदिनी क्लान्तोऽपि संलक्ष्यसे
कण्ठस्ते विरहावहो विहग हे मा गाय भूयः कुहूः ॥

सङ्गीतं मृदु ते मधु प्रतनुते रोमाञ्चनं स्यायते
भग्नं तु स्वमिवावहत्यविरतं सौख्यान्मनोरञ्जनम् ।
क्लान्तः पास्यसि पुष्पसञ्चितरस चन्द्रार्चिरालोकित
प्राणास्त्वध्वनिशीतला विहग हे कान्तं पुनर्गीयताम् ॥

शान्तं गायसि वा क्षणं विरमसि व्यर्थं सुखं वाञ्छसि
गायन् पञ्चमरागमुन्नमयसे निद्रालसे चक्षुषी ।
इत्थं मज्जन आकुलं विरहतो नूनं प्रिया दह्यते
कण्ठस्ते विरहावहो विहग हे मा गाय भूयः कुहूः ॥

इत्थं दासनिराकृतो वनचराङ्गतश्च कूजन् पिक-
स्तस्माच्चूततरोरगान्मन इवोद्विग्नोभयोस्तद्वनात् ।
लोकानामिह ये विदन्ति चरितं जानन्तु ते चिह्नत
भेदं सम्प्रति सुस्फुटं पिकवरस्यामञ्जुगीतस्वनैः ।

---

## कैलासाधिपतेः पञ्चमवङ्गाभिगमनम्

[ निबन्धकः—श्रीभवभूतिविद्यारत्नः वि ए ]

कैलासाधिपतेः पञ्चमवङ्गाभिगमनकथामाकर्ण्य संस्कृतसाहित्य-परिषत्पत्रिकापाठकमहोदयैः पूर्व्वंकृतमितरत्तदभिगमनचतुष्टयमजा-नद्भिरयमत्र पार्व्वतीपतेर्हरिणप्लुतत्वमाशङ्क्येत, तदुच्यते, वाग्देवीवर-पुत्रेषु "विद्योदय"प्रवर्त्तकमहोदयैर्व्वैहिकलोकादवसृत्य स्वर्लोकं प्रस्थितेषु परिगृहीतपत्रचालनभारयोस्तदपत्ययोरेव स्वायोग्यतया दृष्टतमोमयदिङ्मण्डलस्विराधमजनतारणै राक्षसासुरकुलसदानुकूलैः कैलासाधीश्वरैः स्वप्नदशासु स्ववङ्गाभिगमनकथाज्ञापनेन प्रदत्तरचना-वलप्रसादो विद्योदये यथाक्रमं तत्कथाचतुष्टयं प्राकाशयत्, ततः काल-क्रमेण विद्योदयपरिचालकवपुर्विहाय प्राक्तनवशाज्जठरचिन्तानिरय मग्न सत्तदप्यनवाप्ततत्स्वप्नप्रसादो बहुतिथानन्तरमिदानीं पशुपतेः कृपया तन्निरयारम्भककर्म्मक्षयात् समुद्भाव्यमानरचनावासनाहारो भक्तिनिष्ठया स्वप्ने पुनर्दत्तदर्शनेन तद्देवेन ज्ञापितस्वाभिनवाभिगमन-कथाविषयः पूर्व्वचतुर्भ्यः परमेतत् पञ्चममिति तत्पदेनैव विशिष्य प्रबन्धमेनं तदादेशात् संस्कृतपरिषत्पत्रिकाया प्रकाशाय प्रेषयति। अत परमेतत् "पञ्चम"पदानुशीलनोत्पीडनेन नोर्व्वरमस्तिष्कै पाठक-महोदयैः स्वचित्त पञ्चत्वं प्रापणीयमित्यलम् ।

अथ कथारभ्यते।

कैलासपृथ्व्यां शङ्करचरणसंवाहनरतो नन्दी सकुतूहलमपृच्छत्—"प्रभो, देवमुखादसकृदाकर्णितं कलौ वस्तूनां विपर्य्ययो भविष्यतीति। किंविधः स विपर्य्ययः ? किं गिरिसमुद्रवनस्थलीनां यथाक्रमं विलधरित्रीमरुभूरूपेण, उत विबुधमर्त्त्यमानवपशूनां मर्त्त्यविबुधपशुमानवरूपेण, अथवा जीवेन्द्रियभूतानां पाय्वादीनां व्यापारविशेषैर्वदनादिरूपेण ? कलिस्तावत् प्रागेव प्रारब्धः। यदि द्वितीयविकल्पान्तर्गतो विपर्य्ययः परमविधातुर्नियमो भवेत्, एतां दुःखकल्मषलेशरहितां चिरशान्तिमयीं तुषारधवलां कैलासभूमिं परित्यज्य किम्भूतमर्त्त्यजीवरूपेण परिवर्त्तितः प्रभुरशान्तिबहुलां पापतापदग्धां मर्त्त्यभूमिमधिष्ठास्यति, दासोऽपि तत्किङ्कररूपेण ततोऽपि हीनतरो नियतक्लेशकठोरं नूतनजीवितं धारयिष्यतीति चिन्तोर्म्मिसमाकुलितं चित्तं भृशं व्यथते। तत् कथय, देव, किम्भूतोऽसौ कलिदेवकृतो विपर्य्यय" इति।

शार्दूलत्वग्रचितकोमलशयनो मृदुसंवाहनकृतसुखानुसेवनः पञ्चाननस्तन्द्राच्छन्नोऽपि सहसा नन्दिप्रश्नेन प्रबोधित ईषदुन्नमितशिरोधरो वेल्लितभुजतलन्यस्तकपोलः सविहासमूचे—"वत्स, अलमेतेन कलिशासनदुष्परिणामचिन्तनेन। यतो देवगणान्तर्भूतः स न कदापि सजातीनेवं विपर्य्ययेण पीडयेदथवा तपःप्रकर्षसिद्धेषु विबुधेषु न विद्यते कोऽपि तस्य प्रभाव.। यस्य खलु विपर्य्ययस्य विषय त्वयाहं पृष्टः, मर्त्त्यजनेषु स प्रागेव समारब्ध। भूतलं नाभिगतयोरावयोर्बहुदिनानि समतीतानि, तत् पुनरिच्छामि तत्रोपस्थाय तान् कलिविहितविकारान् समक्षमवलोकयितुमि"ति। ततो नन्दिना परमौत्सुक्यं स्वगमनाभिलाषं ज्ञापितः शङ्करः प्रणयिजनरीत्या गृहीतगृहिण्यनुमतिस्तेन सह मर्त्त्याभिमुख प्रययौ।

आदितस्तावेकदेशदर्शनेन बहुदेशपरिज्ञानमभिलषन्तौ स्वस्वव्यापारनिरतानेकधर्म्मजातिव्यक्तिसमाजं प्रकृतिलीलाचैत्रं शस्यश्यामलं

वङ्गदेशमभिगन्तुकामौ लोकचक्षुरन्तरालवर्त्तिनौ चलितुं प्रवृत्तौ। अत्युग्रपार्वत्यदेशानतिक्रम्य पादपराजिसमलङ्कृतायां कोमलवङ्गभूमौ कृतपदौ तावयासिष्टां सुमहत् तृप्तिसुखम्। ततः परमकुतूहलतयैतस्ततो भ्रमन्तावेकं समृद्धाधिष्ठानं प्रविष्टौ, श्रुतवन्तौ च बधिरीकृतश्रवणं कर्कशं वामाकण्ठस्वरं कस्माच्चित् पौरभवनात् समुत्थितम्। ततो नन्दिना तत्कारणं पृष्टो महादेवस्तत्सहितस्तद्गृहं गतः। तत्र तौ ददृशतुः कच्चिदाश्रवजनोचितवदनानतिं पुरुषं सावलेपवचनैर्मुहुरङ्गसञ्चालनं तर्जयन्तीमेकामुद्धताकृतिं रमणीम्। तस्याश्च तर्जनवचांसि खल्वेवमासन्,—"भो मानुष, * त्वमेतावान् पशुः सञ्जातो यत् स्वनेत्रमस्तक भक्षयता † त्वया न दृष्टं—श्वशुरय शयनोपरि त्यक्तमलोऽवतिष्ठत इति। न वा मनोमस्तकमदता ‡ विचारितं—मादृशपेलवजीवितस्यावलाजनस्य प्रत्यूषसि स्वीयनिद्रां § विहाय सुखशयनात् समुत्थानं कीदृक् पीडाकरमिति। तत् रासभ इव बुद्धिलेशरहितो मामेव जागरयितुं प्रवृत्तोऽसि। यदीदृशं दुःखप्रदान ते परमाभीप्सितमासीत्, तत् कथ परिणयद्वारेण प्राज्ञां न पर्य्यग्रहीः? नतशिरा मदादेश पालयन् यदि मां विविधसेवनविधिभिः सादरमत्र रचेस्तर्ह्येव मया सुस्थिर स्थातव्यमन्यथा पितृगृहं गन्तव्यमेतत् पापागारं विहाये"ति।

चिराभ्यस्तपार्वतीमधुरसम्भाषो नन्दी स्त्रीजनमृदुतायां जातप्रत्यय इदानीं नारीमुखादेतादृशं परुषरवमाकर्ण्य दृष्ट्वा च तस्या एवमस्वाभाविकं निष्ठुराचरणं परमनिर्वेदमवादीत्—"भगवन्, पतिचरणसेवनैकसौभाग्यस्य नारीजनस्येदृक् पतिनिर्य्यातनं सम्यगमर्षणीयम्।

---

* "मिन्से" इति भाषा।

† "चोखेर माथा खेये" इति भाषा।

‡ "मनेर माथा खेये" इति भाषा। § "स्वीय घुम" इति भाषा।

त्वा धिक्। एवंविधाया भार्य्याया. समुचितशासनमनादृत्य धृतनारी-स्वभाव एष पुरुषः स्थाणुवन्निश्चेष्टं वर्त्तमान एतान्युपालम्भवचनानि हेलया परिपचती"ति ¶ शङ्करो विहस्याह—"वत्स, एष हि कलिदेवकृत एकविधो विपर्य्ययो येन पुरुषः स्वप्रकृत्या योषिद्रूपेण परिणमितो योषिच्च पुरुषरूपेणे"ति।

ततस्तत्स्थानाद् वहिर्गत्य तौ पुनर्भ्रमितुमारेभाते। कियद्दूरञ्च गतौ, दृष्टवन्तौ तावेकस्मिन् गृहे समासीनौ द्वौ पुरुषावनावृतकायौ तद्गृहस्वामिरूपेण लक्ष्यमाणावपि तत्रत्यभृत्यजनैर्न्न तावन्मान्यमानौ। सहसा प्रविष्टे तत्रैकस्मिनुदात्तजनोचित महार्घनेपथ्ये यवीयसि जने, प्रायेण सर्व्व एव ससम्भ्रमसुत्थितास्तं सवहुमानं सभाजयामासु', परं द्वौ ज्यायांसौ न समुत्थितौ, तथापि तं तरुणजनमवलोक्य तौ किञ्चित् त्रस्तभावौ सञ्जातौ।

"एतावन्तं वेलातिक्रममवलोक्य त्वमिदानीमपि विपणिमगतः सेवकजनैः सम्भाषणे रतो वर्त्तसे? न जानासि विपणित आनीतद्रव्याणां पाकानन्तरं मम भोजनं, ततश्च मे नियमितकर्म्मस्थलगमनं भविष्यती"ति मधुरवचनपरम्पराभिस्तं वर्षिष्ठं जनं परितप्यापरं वर्षीयांसं व्याजहार "त्वयाप्यलस समासीनेन नाधुनापि गतं तस्य मित्रवरस्य भवनं, यस्यात्रागमनमितो वहुपूर्व्वमेवावश्यकमासी"दिति।

निशम्यैतत् सर्व्वं नन्दो प्राह—"देवदेव, ज्यायांसावेतौ जनौ तरुणजनाकृतिसाम्येन तस्य परमात्मीयतया प्रतीयेते। तत् कथमयं भद्रकुलसम्भूत स्वयं शिक्षितोऽप्यशिक्षित इवैतयोः प्राचीनजनयोर्वयोमर्य्यादामेतैः कठोरादेशवाक्कुठारैः संतक्षती"ति। तच्छ्रुत्वा शङ्करः पुनर्विहस्य तमूचे—"वत्स, मान्यथा मंस्था एवं कलिकृतविपर्य्ययमन्तरेण। अयं प्राचीनतमः शुभ्रकेशो जनोऽस्य तरुणस्य जन्मदाता,

---

¶ 'हजम करछे'" इति भाषा।

अपरश्च सितासितकेशलक्षणः प्रौढकल्प एतस्याग्रजः। द्वावेव पूर्व्वं-रीत्यनुसारिणौ प्राच्यविद्यानिपुणाव गृहीतपराधीनवृत्ती केवलपैतृक-विषयाद्यवेक्षणपरावल्पवित्तार्जकौ भवतः। तृतीयश्चायं युवकस्तत्-साहाय्येनैव कृतपाश्चात्यशिक्ष इदानीं सौभाग्यवशाल्लब्धोच्चराजकर्म्मा प्रभूतवित्तार्जकतया दम्भप्रचण्ड' पितरं पुत्त्रभावेनाग्रज चानुजभावेन पश्यन्नेतयो कीदृक् प्रभवति तत् त्वया दृष्टम्। मा निन्दीर्वत्स, एन-मेवैतदनुचितविपर्य्ययहेतु' विचिन्त्य, एष हि कालिदेवकृतोऽपरो-दुष्परिणाम" इति।

ततः पथि गच्छन्तौ तौ ददृशतुरेकं परुषभाषित पुरुष कनीयास-मपर खञ्जजनं रोरुध्यमान निष्कर्म्मत्वादिदोषारोपणेनात्मनः पालना-सामर्थ्य विज्ञाप्य निष्ठुरं कर्णविमर्दं च गृहान्निष्काशयन्तम्। तदव-लोक्य कौतूहलिना नन्दिना "किमेतदि"ति जिज्ञासितो भवनाथस्त' किमप्यनुक्त्वा तद्गृहाभ्यन्तर निनाय। नीतेन च नन्दिना परिदृष्टा-स्तत्रैका तु बद्धपरिकरा नारी सूपादिरन्धनरता, कतिचिद् बालाश्च विविधक्रीडारता एकस्मिन् गृहप्रकोष्ठे च कश्चिद् युवा जनः कयापि युवत्या सह विश्रम्भालाप-रत.। "के एते जना" इति नन्दिना सौत्-सुक्य पृष्टः शङ्करः प्राह—"वत्स, गृहद्वारे येनासौ खञ्जो निष्काश्य-मानो दृष्टः, सोऽमुष्याग्रज., पादवैकल्यव्याहारितपाटवमर्थविषयभागिन-मप्यनुज केवलान्नध्वंसकर विचिन्त्य तद्विरोधिन्या तदन्नपाकश्रममसह मानया स्वपत्न्या पुनःपुनरनुरुद्ध एव निष्ठुरमाचरितु' प्रवृत्तः। गृह प्रकोष्ठस्थितोऽसौ युवक एतस्य श्यालकप्रवर. स्वभगिन्या सादरमाम-न्त्रितः सपुत्त्रदयिता गृहमेतदधितिष्ठन्नौ कदुन्नभपरान्नपूरितोदरः पुष्ट-कलेवरो निश्चिन्तो नितरा तरुणहृदयेश्वरीसम्भाषसुखमुपभुङ्क्ते। यासौ पुनर्वसनाञ्चलपिनद्धकटिदेशा रमणी रन्धनरता वर्त्तते, सा ह्येतस्य वल्लभा, गृहस्यैतस्याधिष्ठात्री च। पश्य, वत्स, असहाय-दुर्व्वलदेवरस्यैकक्षुद्रोदरपूरणार्थमन्नपाकमात्मनः परमदुःखकरं मन्य-

मानाऽपि, इदानीमसौ स्वभ्रातु. सपरिवारस्यानेकोदरपूरणायाव-लोलया कोदृशक्लेशमङ्गीकरोतीति। पश्य पुनस्तदीङ्गितचालितः पति-पुङ्गव एकानुजस्य हितोर्विंत्तास्रचयात् स्वानिष्टमाशङ्कमानोऽपि नीरवो बहुपरिजनस्य श्यालकरत्नस्य कृते तत्त्वयं समीचीनं मन्यते” इति।

तद्वाक्येन प्रजनित प्रबलकोपावेगमङ्ग विचेष्टितेन प्रकटयितुं प्रवृत्ते नन्दिनि, शिवस्तं निवार्य्य प्रशान्तवदनोऽवादीत्—“वत्स, अल-मेतेन विबुधजनानर्हामर्षप्रकाशेन। अन्यविधोऽयं कलिदेवताकृतो विपर्य्ययः, येन हि श्यालकेन भ्रातृजनोचितः समादरो भ्राता च श्यालकोचितं कर्णमर्दनमवाप्येत इति।

अथैतद्विपर्य्ययहेतुभूतकलिदेवदुराचरणं दूषयता नन्दिना सह पुनश्चलितु प्रवृत्तः शङ्करः, क्रमेणोपागतश्च शोभनसौधोद्यानसमलङ्कृत-मविरलचलद्-यानघर्षरनादितपथं विविधपण्यवीथिकासनाथं जन-कोलाहलमुखर कर्म्मदेवतयेव प्रापितचेतन्यमपरमेक नगरम्। तदु-पशल्ये स्थितं सुबृहदेकं भवन प्रवासिजनस्थित्यभिज्ञापकलेखलाञ्छन-तोरणमवलोक्य शिवो नन्दिन प्राह—“आवामपि कैलासादागतौ नगरेऽस्मिन् प्रवासिनौ सञ्जातौ। तदेहि वत्स, एतदभ्यन्तरं प्रविश्य पश्यावोऽस्मद्विधेष्वेतेषां कोदृशसमाचरणं भवतीति। ततः शिवो विप्ररूपेण नन्दी च तत्सेवकरूपेण तत्र प्रविश्य परमादरमभ्यर्थितौ केनापि कर्तृभूतेन जनेन। ततस्तौ दृष्टवन्तावुपवीतिलक्षणमपि शूद्रवर्णगठन क्लिन्नचीवरावृतगुप्ताङ्गमात्र कण्डूविमण्डितगात्रमङ्ग-विशेषोपचयसूचितजलदोषप्रकर्षं नित्यत्वग्घर्षणोद्गमितसर्व्वाङ्गसुख-हर्षमेकसुल्कलवास्तव्यं जनं पाचकतयावतिष्ठमानम्। तमवलोक्य नन्दिना पृष्टं—“देव, पवित्रविप्रकुलोद्भवो जन एतावद्दोनाकारतया न परिदृश्यते। तत् पृच्छामि “किमयं ब्राह्मण, किं वा ब्राह्मणवेशो कोऽपि हीनजातिरिति”।

महादेव आह—“वत्स, सम्यगवधारितम्। एष हि नीचरजक-

नन्दनः सुश्यत्वास्पृश्यत्वविचारनिरपेक्ष भोजनभार्थं सम्यङ्मानयन् स्वग्रामे विप्रकुलप्रभावादलब्धतद्देवार्चनावसरो ब्रह्मपापादन्तर्हित स देव इत्यवधार्य्य तद्दर्शनकामनया परमभक्त इव गृहीतानशनव्रत इतस्ततो बहु पर्य्यटन् कालक्रमेणैतन्नगर समागतस्तद्देवकृपया च लब्धदिव्यदृष्टिरेतदाचारवर्जित स्थान तदुदारदेवतया साम्प्रतमधिष्ठित विलोक्यात्रैव विप्रविहितः पूजाविधिर्दैवतानां सर्व्वथा प्रीतिकर इति गृहीतब्राह्मणकञ्चुक एव तदाराधने प्रवृत्त" इति। तदन्तरे केचिद् ब्राह्मणकुलसम्भूताः प्रवासिन कृतस्नानाः स्ववर्णोचितमाह्निककृत्यमकृत्वैवाभ्यवहाररता आसन्। तद्दृष्ट्वा शिव पुनरुवाच— "वत्स, पश्य पश्यैतान् विप्रतनयान् स्वकुलाचाररहितान् शूद्रभावेनेव शूद्रान्न ग्रसमानान्। वत्स, योऽत्र शूद्रजकस्य वेशतो ब्राह्मणरूपेण, ब्राह्मणानां चाचारत शूद्ररूपेण परिणामो दृश्यते, स हि कलिविहितविपर्य्ययाणामन्यतमो मन्तव्यः। एतत्प्रदर्शनार्थमेव मयात्र त्वं समानीत" इति।

नगरप्रवेशारम्भत एवेदृश चित्तनिर्वेदकर व्यापारमवलोक्य नन्दिनान्यत्र गन्तु कामनातिशयं ज्ञापित शङ्करस्त्वरया तन्नगरलङ्घनव्यपदेशेन द्रुतं चलितुमारेभे। प्रागेव तौ मर्त्यरूपविहानेन धृतारूपदेहौ लोकदृष्टेरन्तराले स्थितौ। गमनमार्गे तावद्राष्टामेकं विप्रबहुलभद्रजनसमाकीर्णं विशालप्राङ्गणम्। तत्रैकः किञ्चिदुन्नतासनाधिरूढः स्वाङ्गसमवेतब्रह्मराजन्यमूर्त्तिर्विशालवपु पुरुषः शिरःसञ्चालं यान्यवदत्, तत्रत्या ब्राह्मणाः शिखासञ्चालं समुच्चजयनिनादैस्तान्यभ्यनन्दयन्। अपरे च जना विमुग्धचित्तास्तत्र समर्पितश्रोत्रा आसन्। तदवलोक्य नन्दी शिवमपृच्छत्—"देवदेव, के एते? किमर्थं वास्मिन् प्राङ्गणे सम्मिलिता" इति। शिवेनोक्तं—"वत्स, एषा हि सनातनधर्म्मरक्षिणी सभा, कालेऽस्मिन् सनातनधर्म्मस्य परलोकप्राप्तिमाशङ्कमानैरेतैः कतिपयसनातनधर्म्मरसिकैस्तदुज्जीवनकामैः संघ

टिता। उच्चासनं यः समलङ्करोति, स ह्येतत्सभापतिर्भारतीयनृपतीना-मन्यतमो ब्राह्मणकुलावतंसश्रियविलासाङ्कपालितोऽपि साधारणैः परमास्तिकतया ख्यातो मानवर्षभ" इति। ततः क्रियत्क्षणमवहित-चित्तो गिरिनिःसृता मधुरजलधारामिव तस्य मनोज्ञवचनश्रेणीं समाकर्ण्य परमप्रीतो नन्दी प्राह—"भगवन्, एतेषां जनानां निदा-रुणकलिशासन न प्रभवतीति मन्ये" इति।

अथ परिनिष्ठितेषु सभाकार्य्येषु जनमण्डलमेकैकशोऽपसर्त्तुमारेभे। तत्परिषत्कर्त्तृभूताः कतिमात्रा जनाः सभानायकं सबहुमानमासना-दुत्थाप्यैकं सज्जितगृहप्रकोष्ठं निन्युः। तत्र च कलिप्रभावापक्षपातिनो नन्दिनश्चित्तं काष्ठागत-हर्षमभूद् यदा सोऽद्राक्षीत् जनवृन्देन सयत्नं समाहृतानि विविधपक्वमधुराहार्य्यद्रव्याणि स्वास्तिक्यव्याजेन परि-वर्ज्य केवलं तन्मानरक्षार्थं गङ्गोदकपूतान् विशुद्धब्राह्मणकरस्पृष्टा-नत्यल्पमात्रानिक्षुच्छेदान् भक्षयन्तं नृपतिवरम्। "भवनाथ, अस्मिन् कलिकल्मषकलुषिते काले एतद्विधोऽप्याचारवान् परिलक्ष्यते" इति मुक्तवदन स्तुतराजप्रशस्ति नन्दिन किमप्यनभिधाय तं ततो नाति-दूरस्थमपरमेकं रम्यहर्म्यमनैषीत्। तदभ्यन्तरे चैका कामिनी नव यौवनशालिनीं यवनीवेशधारिणीं स्वाङ्गकान्तकान्त्या भुजङ्गमनो-हारिणीं रूपवस्मरचित्तवृत्तिवारिणीं प्रेमोच्छ्वासतरङ्गिणी सुरतरङ्गिणी रजतपर्य्यङ्कोपरि सलीलशयानामवलोक्य नन्दी साकूतमप्राक्षीत्—"भूतनाथ, कस्यैतद् भवनं, का वैषा यवनी"ति। महादेवो विहस्या-ब्रवीत्—"वत्स, एतद्गृहं हि तत्सनातनधर्म्मरक्षिणीसभापतेरवस्थितये सभ्यगणैरवधारितम, एषा यवनी च धर्म्मध्वजिनस्तस्य प्रणयाधिष्ठात्री देवी"ति। तदाकर्ण्य क्रोधभरारक्तलोचने नन्दिनि यवनीसङ्गदूषितस्य नरपतेः कपटवृत्तमुद्दिश्य किञ्चिद् वक्तुमुद्यते, तं परिसान्त्वयन् शङ्करः पुनरुवाच—"मर्षय, वत्स, मर्षयैतद्राजाचरण कलिविहितापर-विपर्य्ययत्वेन परिगणय्य। कलिप्रभावादिदानीं प्रच्छन्नघोरनास्तिक्यं

वाह्योत्कटास्तिक्यरूपेण प्रतिभाति। सा च सभा एवं हीनकपटि-जनं सनातनधर्म्मरक्षकत्वेन निर्व्वाचयता तत्सभ्यजनानां वालिश्यम्। यद्यपि तेषु कतिचिदल्पसंख्यका परबुद्धिचालिताः सरलचित्ता मूढा वर्त्तन्ते, तथाप्यन्तर्दृष्ट्या यदि पश्ये, तेषां बहूनां बहिराचारवतामपि निगूढदुष्कृतिशीलत्वमवलोक्य कोटरयोग्यजनैर्योग्यतरो जनः सभा-पतित्वेन निर्द्धारितस्तत् सम्यगवधारयितुं शक्यसो"ति।

ततश्चित्तक्षोभाज्झटित्येव तत्स्थानादपसृत्य सत्वर नगरातिक्रम-क्रमेण तदुपान्तमुपगतौ तावालोकयामासतुरपरमेकं सुमहत् सभा-स्थल"मार्य्यधर्म्मरक्षक"लेखाङ्कितप्रवेशद्वार सभ्यताभिमानिभिर्विलासि जनैरवाकीर्णम्। तत्र च सम्यग्विडम्बितपाश्चात्यवेशभावानामन्तरा म्लेच्छजनपरिवेशितसधूमतरलपाणीय*पानरताना सभापतिसभ्यपद-स्थाना मानवाना हुङ्कारसहिता विविधम्लेच्छधर्म्मदूषणारब्धा विधवो-द्वाहास्पृश्यत्ववर्जनादिम्लेच्छधर्म्माचारसमर्थनशोषितामार्य्यधर्म्मरक्षण-वचनपरम्परां निशम्य सविस्मयो नन्दी प्रोवाच—"नीलकण्ठ, नाव-धारयितुं शक्नोमि किमेतेषामद्भुतजीवाना वास्तवलक्ष्यस्थलमिति। भाववेशतो नैते म्लेच्छेभ्यो न्यूनतराः प्रतीयन्ते। म्लेच्छकरस्पृष्ट पानीय-मपि निःसङ्कोचं पिवन्ति। वचनैरप्यार्य्यविरुद्धान् म्लेच्छाचारान् समर्थयन्ते। तत् केवलैः रिक्तम्लेच्छदूषणैः किमेते वाञ्छन्ति संयम-कठोरार्य्यधर्म्मरक्षणमि"ति।

पशुपतिनोक्तं—"वत्स, आवाल्यादधिगतपरविद्याः खल्वेते अनधी तात्मधर्म्मशास्त्रतया स्वधर्म्मकर्म्मानभिज्ञा कर्म्मादिप्रसङ्गेन नियत म्लेच्छसहवासात् तद्भावैरनुप्राणिता आर्य्योचितमाध्यात्मिकोत्कर्षमूलकं सन्तोषशीलत्वं परिवर्ज्य म्लेच्छानुकरणेनैहिकसुखं नितरां कामय माना अपि केवलवाग्वोर्य्यतया तदर्जनशक्तिरहिताः स्वचेतसा तदन-

---

* 'चा'

वासिमूलकं प्रबलस्त्रच्छ विद्वेष पोषयन्तः कापुरुषवत्तन्निन्दनाय प्रवर्त्तन्ते, आत्मनस्तत्त्वविमूढबुद्ध्या च म्लेच्छजनानां तांस्तानाचारानेव तेषामैहिकोत्कर्षहेतुत्वेन निर्णीय स्वधर्म्मविरोधिनोऽपि तान् सजातिषु धर्म्मरक्षणच्छलेनैव प्रवर्त्तयितुं चेष्टन्ते।

म्लेच्छानुकारिभिरेतैर्नरमर्कटैयदैहिकसुख परमाभोष्सिततया मन्यते, अप्राप्ततया न ज्ञायते स्वेषां पवित्रोदारधर्म्मेण तत् कीदृक् तुच्छतया परित्यक्तमिति। चित्तमौढ्यान्नाप्यवबोद्धुं शक्यते स्वाचारमूलक एको धर्मो न कदापि धर्मान्तराचारैः संरक्ष्यत इति। तदलं चित्तविक्षोभकरैर्णतेषां वाग्विधिविरोधस्यालोचनप्रसङ्गेन। तद्विरोधहेतु रेषा मतिविपर्य्यय एव। स च कलिदवेन विहित" इति।

ततः कलिकलितदुर्गतिसमाकुलनगरदर्शनविमुखेन नन्दिना पल्लीस्थलानि तद्वेशासनवहिर्भूतानि भवेयुरिति तत्राभियानाय सनिर्बन्धमनुरुद्धः पिनाकपाणिनगरं त्यक्त्वा सुविरलजन प्रच्छायशीतलं पल्लीपथमवललम्बे।

बहुवनोपवनकान्तारसरःपल्वललोकालयातिक्रमेण तौ ग्राममेक मुपगतौ, ददृशतुस्तत्रैक सुमहदविरतजनसमागम शिवायतनम्। पल्लीवास्तव्यानामोदृशीं स्वाभीष्टदेवतार्च्चनरतिं निरीक्ष्य प्रागेव नगरपराङ्मुखचित्तस्य नन्दिनः प्रकर्षं गतः पल्लीपक्षपातः। अतः प्रीतिप्रफुल्लवदनः स पार्व्वतीनाथं प्राह—"प्रभो, स्थानेऽस्मिन् बहुलजनैरनुष्ठीयमान देवार्च्चनविधि विलोक्य मन्ये कलिप्रभावोऽत्र लेशतो न विद्यत इति। शङ्करस्तत्कथाया किमप्युत्तरमददानो धीरपदविक्षेपस्तं मन्दिरद्वारं निनाय। तत्र च प्रभोरादेशव्याजेन देवदिदृक्षुभक्तजनेभ्यः प्रभूतशुल्क गृह्णतोर्द्वारस्थितयोर्मूर्त्तचण्डसुतकिङ्करयोरिव प्रचण्डविग्रहयोर्लगुडहस्तयोः पुरुषयोस्ताभ्याञ्च निष्ठुरं निःसारितानां शुल्कदाना क्षमदरिद्रभक्तानां रभसा मन्दिराभ्यन्तर प्रविष्टु चेष्टमानानामन्योन्यविघट्टनेन सकलकलं खण्डयुद्ध संवृत्तम्। तद्दृष्ट्वा नन्दी ससम्भ्रमपृच्छत्

—"भगवन्, एतौ द्वाररक्षकौ यस्य प्रभोरादेशव्यपदेशेनैवं ते भक्तजना नेवं निर्य्यातयतः, को नाम स प्रभुजन इति। महादेवेनोक्तं—"वत्स, निखिलभारतभूमौ यत्र यत्र स्थानेषु यानि मेऽनादिलिङ्गानि विद्यन्ते, तेषां सम्यग् रक्षार्थं तत्तत्स्थानेषु प्रतिष्ठापितानि मठगृहाणि केनचित् परिचालकभूतेन यतिसम्प्रदायेन, तन्नियुक्तः कोऽपि मोहान्तनामधेय-पुरुषश्चिरकौमार्य्यव्रतो यतिधर्म्मपालको मठस्यैतस्याधीश्वरो भवति" इति।

तदन्तरे तावौचित्यवन्तौ द्वे कनकलताकान्ती नवयौवने कुलाङ्गने शुल्कहीने अपि ताभ्यां प्रचण्डद्वाररक्षकाभ्यामत्यादरेण मन्दिरगृहं प्रवेश्यमाने। तद् दृष्ट्वा नन्दी साकूतमाह—"देवदेव, किमेतत्तरुण्यो-रबाधप्रवेशनं तत्प्रभुना समादिष्टमि"ति। "अथ किमि"ति शिवे-नाभिहिते, स पुनर्विहस्याभाषत—"ततो मन्ये स प्रभुर्न केवलं शिव-भक्तः, एतादृशगौराङ्गीसमनुरागाद् गौरीभक्तोऽपि भवतीति।"

अथ तेन तत्प्रभुदर्शनाभिलाषं निवेदितो धूर्जटिः त तन्मठान्तर्गत-प्रासादस्यैकं शोभनप्रकोष्ठमनैषीत्। तत्र चेकसुपानत्सन्नद्धचरणं विडम्बितविट्प्रसाधनं गन्धानुलेपसुरभीकृतविलम्बितकुन्तलकलाप-मविरतमादकधूम*नलार्पितचारुवदनं महार्घरजतासनसमासीनमेकं दीर्घवपुषं पुरुषमङ्गुलीसञ्चालं प्रदर्श्य शिवस्तं मठाधीशत्वेन व्यजिज्ञ-पत्। "अहो। एष गृहीतविलासिवेशः केनैव विधिना प्रतिपाल-यति सुकठिनं सन्न्यासिधर्म तन्निर्द्धारयितुं न शक्नोमी"ति विषादभरा प्लुतकण्ठं जल्पितवति नन्दिनि, शङ्करस्तं मोहान्तप्रवरस्य स्वधर्म्मपालन-विधिप्रदर्शनमिषेण प्रत्यासन्नं सुरम्यस्थलमेकं निनाय। तत् खलु स्थानं "प्रमोदपण्यवीथिकेत्य"भिधानं विचित्ररत्नहीरकैरिव हंससारसो-त्पलादिरागशबलनीलिमजलसरोभिः, फुल्लत्कुसुमराजिलतिकातरु-पुञ्जकुञ्जैः, शिल्पकरकारनैपुण्यनिकषायमाणश्रेणीबद्धरुचिरविलासा-

* Tobacco-Pipe

गारैश्च ग्रथितावयव, मधुररणितैरिव मधुपानविह्वलभृङ्गगुञ्जनैः पादपविटपलग्नविहङ्गकूजनैर्विलासगृहोत्थितरमणीजनकण्ठगीतस्वनैश्च शब्दितं तदग्रहारलक्ष्म्या अङ्गाभरणमिवासीत्। तत्सौन्दर्य्याकृष्टचित्तो नन्दी कियत्क्षणमनिमेषनयन स्थितः तत्रत्यानि विलासभवनानि नृत्यगीतहासपरिकर्म्मचतुरैर्युवतीवृन्दैरध्युष्यमाणान्यवलोक्य सकुतूहलं बभाषे—"भगवन्, प्रभोरेतदधिष्ठानक्षेत्रं दृष्ट्वा किं कतिभिर्भक्तकिन्नरीजनैर्हिमदु सहवासं कैलासं परिहृत्यात्र स्थितये समागतमि"ति। "न हि नह्युत्युत्तरदानप्रवृत्ते शङ्करे, पृष्ठतः श्रुतो कोऽपि लोकसञ्चारशब्दः। वदनपरावर्त्तनेन तौ प्रेक्षितवन्तौ विरलविट्परिजनैरनुगम्यमानं वदननिःसृतसुतीव्रगन्धं मदिरोन्मत्ततयाक्रमविन्यस्तचरणमस्फुटाक्रमनिरर्थभाषितं तं मठनायकं मोहान्तं पञ्चशरशरपीडितं विलासगृहमेकमभिसरन्तम्। यतिजनस्यैवंविधं गर्हिताचरणमसहिष्णौ नन्दिनि रोषवशात् किञ्चिदक्रमुपक्रान्ते, पशुपतिराह —"पश्य, वत्स, तदयतिप्रवरस्यैतं धर्म्मपालनविधिम्। किं फलं वा किन्नरीणां पवित्रकैलाससुखस्थितिं विहायैतत्पापपुर्य्यागमनेन? एतद्धि वाराङ्गनाविहारक्षेत्रं प्रभूतयत्नेन प्रतिष्ठापितं नित्याभिनवरमणीभोगभाग्यलुब्धेनामुना यतिशार्दूलेन। पश्य पुनः कीदृशनायकरीत्यासौ प्रक्रमते प्रणयभाजनं कमपि पुंश्चलीजनमभिसर्त्तुमि"ति।

शिववचनवातेन संधुक्षितकोपानले नन्दिनि "अहो! मोहान्तोऽप्येतावन्मोहान्धः संवृत्त" इति परुषकण्ठमुच्चार्य्य तत्ताडनार्थं रचितमुष्टिबन्धे, परमेश्वरः कराकर्षणेन तं निवार्य्य प्रोवाच—"वत्स, अलमेतेनामर्षाचरणेन। अवेह्येनमपरविधं कलिविपर्य्ययं, येन हि संयतमतिवृत्तमुच्छृङ्खलविषयिवृत्तत्वेन परिणमितमि"ति।

तदाकर्ण्य नन्दी किञ्चित्त्रस्तमना उवाच—"चैतन्यरूपस्य देवस्याप्येतज्जड़प्रस्तररूपेण परिणतिं विलोक्य, कलिशासनं देवानां न प्रभविष्यती"ति यदुक्तं, तस्मिन् सम्यगहमप्रत्ययः सञ्जातः। अन्यथा

कथमेतत् सुदुःसहं मोहान्तपापहत्त निर्विकारमानसं मर्षयता देवेनात्राधिष्ठानं क्रियत" इति। तच्छ्रुत्वा शिवो विहस्य प्रोचे—युक्तमभिहितं वत्सेन। न मया मोहान्तदुष्कृत चममाणेन स्थानमेतदधिष्ठीयते, किन्तु द्वाररक्षकनिर्य्यातनेन समुद्घाटितरत्नमर्म्मद्वाराणां दीनभक्तानां कातरभक्त्युच्छ्वासं परमप्रियतया समाकर्णयता। अयं मोहान्तोऽपि मया मर्षितो नास्मै अनुचितपक्षपातं प्रदर्शयता, अपि तु प्रभूतशुल्कादानरूप-वित्तसञ्चय साधनाभिरतेन प्रसादितेन मद्भक्त-प्रवरेण धनाधिपेनैतद्भाण्डागाराधिष्ठितेन पुनः पुनरेतद्रक्षणार्थमनुरुध्यमाने"ति।

प्राङ्नगरविमुखो नन्दीदानीं ग्रामदुर्गतिदर्शनेन तद्विरक्तचित्तः पुनर्भ्रमणमनभिलषन् पार्व्वतीपतिमुवाच,—"प्रभो, अलमलमेतेन मर्म्मनिर्व्वेदकरेण भूपर्य्यटनेन, मर्त्त्येषु कलिना यादृशविकारा घटितास्ते वङ्गदर्शनमात्रेण निर्णीयन्ते, तदिदानीं कैलासं प्रत्यागन्तुमिच्छामो"ति।

भक्तवत्सलः शिवोऽपि तन्निवेदितदत्तकर्णस्तेन सह स्वपुराभिमुखं प्रस्थितः।

---

## शिवाजिचरितम्

[ निबन्धकः—श्रीकालिदासविद्याविनोदः ]

हा धर्म्म मर्म्मनिहतः क्व गतोऽसि दूरे
त्वं भारते चिरतरं विहरन्निदानीम्।
सर्वं विहाय ननु भारतवासि-सङ्घ-
स्त्वामेव सेवत इदं किमु विस्मृतं ते॥
त्वां सेवितुं पितृपदार्चनया हि भीष्म-
स्तत्याज राज्यमथ दारपरिग्रहञ्च।

कर्णः स्वपुत्रमतिथिः परिसेवनार्थे
छित्त्वा ददौ निजकरेण तथैव पत्न्या ॥
त्वं श्येनरूपधर एव यदागतोऽभू-
र्धर्म्मप्रियं शिविमविप्लुतराजधर्म्मम् ।
ज्ञातं तदेव शरणागतवत्सलत्वं
तस्य स्वदेहनिरपेक्षकपोतरक्षा ॥
तद् रामचन्द्रचरितं स्मर धर्म्म सर्वं
त्वां रक्षितुं किमिव दुःखमकारि तेन ।
राज्याभिषेकमपहाय वनं जगाहे
प्राणाधिकामपि जहौ स विदेहपुत्रीम् ॥
स्वाधीनतामथ विधर्म्मिकरात् स्वधर्म्म-
रक्षां विधातुमिह भारतराजपुत्राः ।
प्राणात्ययेऽपि न जहुर्निजहिन्दुधर्म्मं
त धर्म्मविक्रममनुस्मर धर्म्म सर्व्वम् ॥
सिंहप्रतापमथ संस्मर तं प्रताप-
सिंहं समुन्नतशिरोधरमार्य्यवीरम् ।
देशात्मधर्म्ममभिरक्षितुमात्तशस्त्रं
शैले स्थितं सह कलत्रसुतैः पदातिम् ॥
आदित्यसंख्यकसुविक्रमभौमिकानां
वङ्गेषु यः प्रथितकीर्त्तिरतिप्रतापः ।
आदित्यवत् स्वकरनिर्जितसर्वलोकः
कालीं भजन्नकृत सैनिकचालयित्रीम् ॥
त्वा धर्म्म रक्षितुमहो वत भारतेऽस्मिन्
किं नाकरोद् वद विभो रमणीगणोऽपि ।
केशैर्धनुर्गुणकृतैरपि युध्यमानः
प्राणांस्त्यजन्नपि ररक्ष च जातिधर्म्मौ ॥

मा मां स्पृशन्तु यवना इति वीरपत्नी-
वर्गो विहीनपतिपुत्त्रसमस्तवन्धुः ।
प्राणान् जुहाव च सुखेन हुताशितायां
साध्वीव्रते चिरचिते ननु भारतीये ॥

धर्म्मार्थमिन्द्रियविनिग्रहणं तपो वा
पत्यौ मृते च मरणं व्रतपालनं वा ।
धर्म्म त्वमेव वद पश्यसि कुत्रचिद् वा
तद् भारताद् वहिरहो रमणीजनस्य ॥

वर्णाश्रमौ प्रति विधिर्विहितश्चतुर्धा
त्वा धर्म्म संविभजते मनुजेषु धाता ।
सर्व्वे परार्थघटकाः परतुष्टितुष्टा
दृष्टास्त्वया किमुत भारतवर्षभिन्ने ॥

ये भारतं परित एव सुसभ्यदेशा-
स्तेष्वस्ति किं परसुखार्थकमात्मदानम् ।
भिक्षाप्रदानमथ तद् ग्रहणं निषिद्धं
कारार्पणं भवति यद् व्यवहारशास्त्रे ॥

यद् भारते प्रतिदिनं प्रतिलोकगेह
हाहा महासुखकरः सुमहोत्सवोऽभूत् ।
दुर्भिक्षराक्षसपरिग्रहभीतभीते
तत्राधुना विकटरोदननाद एति ॥

यत्रातिथेयपरमा गृहिणो नृयज्ञं
सम्यग्विधाय विविधैर्घृतपायसाद्यैः ।
अन्नैरनन्यशरणानथ भूतसङ्घान्
सन्तर्प्य शेषभुज एव सुखं विजह्रुः ॥

हिन्दोर्गृहे नियतमेव च पञ्चयज्ञ-
संस्कारयज्ञसुखमाहुतियुक्तकर्म्म ।

गव्यं विना नहि भवेदिति सर्वसिद्धं
तद् गव्यमद्य किल दुर्लभमेव जातम् ॥
गव्यं घृतं भवति सर्पवसाविमिश्र
दुग्धं न दोहनविनिर्गतमद्य दृष्टम् ।
पापप्रणालिकमभक्ष्यपदार्थमिश्रं
हा हा न धर्म्म भवतः स्थितिरार्य्यगेहे ॥
गोपालनाय भगवान् हरिरध्वरेशो
वृन्दावने स्वजनगोपगृहे स्थितोऽभूत् ।
त्वां धर्म्म रक्षितुमय निजघान कंसं
धर्म्मे स्थिते भवति भारतवर्षरक्षा ॥
गोचर्म्मणा भवति शिल्पमनेकरूपं
जीवद्गवामपि च चर्म्म विशेषदक्षम् ।
यस्या भवेल्लवणशर्करिकादिशुद्धि-
र्हा हा तथापि न जहाति विदेशि वस्तु ॥
हा कृष्ण पश्य तव भारतमद्य कीदृक्
गोहत्यया कलुषितं निजधर्म्महीनम् ।
चूर्णीकृतश्च यवनैर्हृतसर्व्वसारं
दग्धीकृतं सकलदेवगृहं सशास्त्रम् ॥
हा कृष्ण संस्मर निजं चरितं वचश्च
हंहो यदा भवति भारतधर्म्महानिः ।
आत्मानमेवमवतारयता तदैव
धर्म्मो विधर्म्मिकरतः स्वयमुद्धरिष्ये ॥
हा कृष्ण किं चिरयसि वत शीघ्रमेहि
अस्मात् परापि भविता किमु धर्म्महानिः ।
कालप्रतीक्षणमते न तवास्ति कार्य्य
कारास्थितौ स्वपितरौ प्रति तद्धि दृष्टम् ॥

कर्म्मानुरूपफलदः सुखदुःखदाता
सृष्टिस्थितिप्रलयकृज्जगतस्त्वमेव ।
त्वं धर्म्ममूलमिति शास्त्रविदो वदन्ति
विश्वास एष सुदृढोऽस्ति हि भारतेऽस्मिन् ॥

पृच्छामि तत्रभवतः सविधेऽद्य किञ्चि-
दुत्थानपातनियम विदधासि यत्त्वम् ।
सार्व्वत्रिकः स ननु भारतवर्षतो न
नो पक्षपात उचितो जगदीश्वरस्य ॥

दुःखात्परं सुखमहो सुखतोऽपि दुःखं
रात्रेर्दिनं दिवसतश्च तथैव रात्रिः ।
वभ्रम्यमाणमखिल सुखदुःखचक्रम्
किं भारतस्य हतभाग्यतयान्यथेति ॥

यद् भारते प्रथमसभ्यतया प्रसिद्धे
साहित्यमस्य जगतः प्रथम हि वेदाः ।
ल्याटीनग्रीक्प्रमुखसभ्यप्रतीच्यभाषा-
माता हि संस्कृतमयी ननु देवभाषा ॥

विज्ञानदर्शनकलागणितादि-शास्त्रा-
ण्याविष्कृतान्यथ यदा वत भारतीयैः ।
सर्व्वात्मशान्तिसुखदं शुभसामगानं
आदर्शभूतमिति भारतमामनन्ति ॥

आचार्य्यवर्य्यमधुसूदनशङ्कराद्यै-
रध्यात्मशास्त्रपरिशीलितसूक्ष्मतत्त्वैः ।
आविष्कृतं यदयनं चिरशान्तिदायि
देहात्मवादनिरता अवजानते तत् ॥

प्रत्यक्षतः सकलवस्तुगुणान् प्रमाय
यद् भेषजं प्रकटितं गुरु भारतीयैः ।

आर्य्यान्वयेश्वरकसुश्रुतवाग्भटाद्यै-
र्दीर्घायुषः समभवन् भुवि तेन लोकाः ॥
संक्रामकैर्विविधशोणितदोषकारि-
रोगैः सदा सततसन्ततकज्वराद्यैः ।
दारिद्र्यहृद्बवल यक्ष्मविसूचिकाद्यै-
रद्य प्रयान्ति वहवो युवका अकाले ॥
दारिद्र्यदुःखपरिपीडितदुर्बलेऽस्मिन्
हा हान्नमन्नमिति वादिनि च क्षुधार्त्ते ।
दासेऽपि भारतजने तव चेद्दया नो
कस्त्वां जनार्द्दन वदेत् करुणामयेति ॥
हा हा स्यमन्तकमणिः शतसूर्य्यतेजा-
स्तेजः प्रदर्श्य जितजाम्बुवता त्वयाप्तः ।
यस्ते वभौ हृदयवाञ्छितरत्नभूतः
कृष्ण त्वमानय मणिं पुनरार्य्यगेहम् ॥
तच्चन्द्रसूर्य्यकुलमद्य विशीर्णवीर्य्य-
मार्य्यप्रतापमहिमा हिमरश्मिसूर्य्यः ।
यद्वद्द तथा नहि परस्तपतामुपैति
हा भारतं कुहकिनां कुहकैरिवान्धम् ॥
पराधीनान् दीनानतिविपुलदुःखान्धतमसे
चिरं लीनान् हीनान् सकलसुखसौभाग्यविभवैः ।
जगत्प्रेमाधार ! प्रणयनिगडैर्भारतजनान्
इमानेकप्राणान् कुरु करुणया दीनधनिनः ॥
विरहितनिजधर्म्मं स्वीयशास्त्रे विरक्तम्
अविरतपरभाषावेशधर्म्मानुरक्तम् ।
अवनतक्षषिशिल्पं दासभावेन तुष्टं
परपदनतमेतद्द भारत रक्ष कृष्ण ॥
इति श्रीशिवाजिचरिते काव्ये द्वितीयः सर्गः ।

# भक्ति-विजयम्

## नाटकम्

( पूर्वतोऽनुवृत्तम् )

[ निबन्धकः—श्रीधूर्जटिप्रसादकाव्यतीर्थः ]

येनातिक्रान्तमर्य्यादो बाधते गुरुशासनम् ।
तन्मूलदाहदम्भोलि सोऽहं त्रैलोक्यराज्यभाक् ॥

( साटोपम् ) ममापि नाम त्रिभुवनपते प्रतिपक्षकः ? ( आकाशे )

अरे रे मायाच्छन्नविग्रह ! कलङ्किन् ! विष्णो !

स्वाराज्यार्णवमन्दरोद्धतमहादोर्दण्डयुग्मार्जित-
त्रैलोक्यैश्वरिष्ठनिष्ठितपदस्त्रीब्रीजसामाश्रयः ।
विष्णो मायिकवेशधारणपटो ! तीक्ष्णासिना त्वामहं
निर्घर्षाम्यवनीतले रणमहोल्लासप्रमत्तान्तरः ॥

( इत्युद्धतं परिक्रामति )

प्रह्लादः—( उपगम्य ) तात ! दुर्व्विणीतः प्रह्लादः प्रणमति भवन्तम् ।

दैत्यराजः—( निर्व्वर्ण्य ) ननु प्रह्लादोऽसि ? तदुच्यतां केनोपायेन त्वमम्भोनिधितलात् संरक्षितोऽसि ? केन वायं मे प्रियसखः सेनापतिर्निहतः ?

प्रह्लादः—तात ! किमन्यद्वक्ष्यामि,—

क्षीराम्भोनिधिमध्यशेषशयने योऽसौ शयानः पुरा
विष्णुर्नाभिसरोजशोभितविधिर्लक्ष्म्या चिरं सेव्यते ।
यः सृष्टिस्थितिनाशकारणमतिक्रम्याखिलं वर्त्तते
तेनाहं परिरक्षितो विनिहतस्तेनैव वा शम्बरः ॥

दैत्यराजः—ननु सत्यं ? यदुच्यते ।

प्रह्लादः—तात ! किमत्र मृषावाग्वैदग्ध्येन फलमस्ति ।

दैत्यराजः—( स्वगतम् ) अरे रे देवकुलकलङ्क ! न किल नाम न जानासि ?—

उच्छिन्नमूलेषु यथा द्रुमेषु
शुष्यन्ति शाखाः सह पत्रपुष्पैः ।
त्वां दुष्ट ! हत्वाखिलकर्ममूलं
त्वत्स्तावकान् हन्मि सुखेन पश्चात् ।

तदलं शासनेनास्य प्रह्लादहतकस्य, यावदधुनास्माद्विदित केशवाश्रयः प्रागेव विनाशयाम्येनं निर्जरापसदम् । ( प्रकाशम् ) वत्स !—

त्वं मे पुत्रवरो गुणाधिकतया तातोऽस्मि ते स्नेहवान्
जातो दैत्यमहान्वयेषु भगवद्भक्तो विनीतः सुधीः ।
यस्मोत्तादृक्शासने निपतितस्तेनास्म्यहं लज्जित-
स्त्वं कर्त्तव्यधिया चिरस्थिरमतिर्वर्त्तस्व धर्म्ये पथि ॥

प्रह्लादः—कथमेवं ब्रुवन्ति तातपादाः । मयि यदनुष्ठितं गुरुशासनं राजधर्मे स्थितस्य ते विधिमनुचरतो नास्ति तत्र क्वापि त्रपा ; मम तु पुनर्भगवच्चरणदर्शनसौभाग्यमुपजातम् । तथा च विपद्धि सौभाग्यमानयति, नहि सम्पद्विपदमन्तरेण शोभते ; तथाहि,—

चन्द्रो रात्रिमृते न भाति न जनुर्मृत्युं विना शोभते
सृष्टिर्वा प्रलयं विना नहि सुखं दुःखैर्विना लभ्यते ।
राजन्ते नलिनानि नैव सरसोऽसत्क्षाम्बुधारामृते
ध्यानं सिध्यति नापि शासनमृते यच्चापवर्गप्रदम् ॥

दैत्यराजः—श्रुतम्, अथ पृच्छामि राजकुमारस्त्वं यन्मायापहृत-मानसस्तद्दास्यमपि कर्त्तुं प्रवृत्तः कच्चिन्न ते तत्र क्वापि नीचता ?—

इन्द्रादयो यत्पदकाङ्क्षयामी महासदासायितमात्रवृत्ताः ।
तेषां यतो दासवदेषि तत्त्वा धिग् दासदासस्य चिराय दासम् ॥

प्रह्लादः—तात ! सत्यमेवमस्मि ,

ध्यानेन योगी भजनेन भक्तः प्रेम्णा प्रियो वा लभते यथा तम्।
तद्दासदासस्य च दासभूतो धन्यश्चिरं तत्पदसेवकोऽस्मि ॥

दैत्यराज.—धिगनार्थ्य । अपि जानासि स खल्वनात्मज्ञः कुत्र कदा वा विद्यत इति ?

प्रह्लाद —तात । स खलु भगवान् विश्वमूर्त्तिः सृष्टि सर्व्वत एव वोक्ष्यते किन्न पश्यन्ति भवन्तः ?

सूर्य्येन्दू नयने यशः सुमनसः केशा नभोनोलिमा
ह्लादिन्यो मणिदाम चाखिलजगज्जीवाश्च यश्चेतना।
वाक्च सज्जनवाक् च नूपुररुत भृङ्गा मराला पिका
धैर्य्यौऽत्यगभीरतादिकगुणा भूभूं भृदम्भोनिधिः ॥

दैत्यराजः—आ । अथ पृच्छामि किन्नु खलु पुरतः समन्ताच्च यद् यदवलोक्यते स हि तत्र तत्रैव विद्यत इति प्रवक्तु समर्थः ?

प्रह्लादः—तात । किमन्यद्वक्ष्यामि,—

रसे स्नेहो वीजे तरुरथ घने वारि च यथा
शरीरे प्राणा वै कुसुमनिकरे सौरभमिव ।
सुधाया सुस्वादो हरिगुणकथाया मधुरता
तथैवास्ते विष्णुस्त्रिजगदधिपो व्याप्य निखिलम् ॥

दैत्यराजः—अयञ्च प्रासादस्फाटिकस्तम्भोऽपि वर्त्तते ?

प्रह्लादः—भगवन् । विश्वपते । प्रसीद । यन्मन्यन्ते तातपादास्तथैवास्तु । ( चिरं स्तम्भ निर्व्वर्ण्य ) तात । तात । कच्चिन्नावेक्षते भवान् पुरतः प्रतिविम्बित स्फाटिकस्तम्भे भगवद्विग्रहम् ?—

तथा पदाब्जं तदुरः शुभ तथा
तथाङ्गद नूपुरमुत्तमं तथा ।
तथा मणिर्दीप्यति किन्तु हन्त भोः
पञ्चास्यवक्त्रं किल भीमदर्शनम् ॥

दैत्यराज—( दृष्ट्वा सरोषम् ) निष्ठुरे । वातुल ! अलं प्रलापेन, सत्य-
मुच्यतामत्र वर्त्तते न वा ।

प्रह्लादः—तात ! वर्त्तते । ( इति साश्रुनयनः पश्यति )

दैत्यराजः—( सरोषं कोषादसिं निष्क्रम्य ) अरे रे प्रच्छन्नमायाप्रपञ्च !
दुरात्मन् ! चिराद्दृष्टोऽसि, क्वेदानीं गम्यते । भो भो ब्रह्मरुद्र-
वासवपुरःसरा निर्जरप्रधानाः ! रक्षत रक्षतेदानीं मङ्क्षु जपिञ्जरा-
न्तर्गतमिमं गोर्वाणहतकम् ?

सूर्य्य ! द्वादशरश्मिभिस्तनु करं कम्पस्व घोरं जगत्
शोभध्वं विकरालकालजलदा वाताः प्रवाताधुना ।
केतो ! व्योमनि राजतां लय ! महोत्पातैः सरोऽत्पूयतां
भो विष्णो ! स्मर तूर्णमिष्टमिह तं त्राणाय योऽसौ क्षमः ॥

तदिदानीम् ;—

विश्वग्रन्थिविकर्त्तनार्द्रगरिमव्यासङ्गतोक्ष्णोज्ज्वलः
सापत्नप्रविदारशोणितसरित्स्नातावमेध्याङ्कः ।
वीरच्छागकदम्बवन्धनकृतौ यूपायमानो महा-
खङ्गस्ते चिरमार्द्रकोष्णधमनोरक्ताशनस्तृप्यतु ॥

( सवेगं निष्क्रान्तः )

नेपथ्ये स्तम्भभङ्गसिंहनादाः ।

ततः प्रविश्यत्यपटीक्षेपेण नृसिंहो दैत्यराजं क्रोडे कृत्वा
वक्षो विदारयति गर्जति च, तदवलोक्य
चण्डालाः पलायिताः ।

दैत्यराजः—हा हतोऽस्मि हा हतोऽस्मि । प्रह्लाद ! प्रह्लाद ! पितृबध-
महापातकिन् !

दैत्यार्णवोच्छोषणवाडवाग्ने ! महाकुलध्वंसकधूमकेतो ! ।
प्रह्लादन ! द्वेषणपक्षवर्तिना प्रह्लाद ! तातं विनिहसि दुर्मते ! ॥

प्रह्लादः—भगवन्! भगवन्! किमेतत्, भवता व्यापादितो मत्पुरत एव मे जनयिता, जातश्चाहमपि पितृहन्ता। हा तात! पुत्रवत्सल! वीरप्रधान! क्वासि, देहि मे दर्शनम्। (इति मूर्च्छति)

नृसिंह—वत्स! हिरण्यकशिपो! नात्रापराध्यति वत्सोऽयं प्रह्लादः; प्रभवति चात्र स्वकर्मपरिपाक' कुमारस्य, तवापि।

दैत्यराजः—आम्, (इति मूर्च्छति)

ततः प्रविशन्ति ब्रह्मेन्द्ररुद्रा लक्ष्मीश्च।

ब्रह्मा—भगवन्! प्रसीद, प्रसीद,—

क्रोधं संहर रक्ष रक्ष भुवनं पश्याकुलं कम्पते
वातः स्तब्धगतिर्न भाति तपनो लुप्ता भयाद्दिग्गजाः।
गर्भो विच्यवते तलस्थितमहासिन्धौ धरा ढौकते
दन्दग्धि प्रकृतिः स्खलन्ति परितः क्वच्युतास्तारकाः॥

इन्द्र—भगवन्! प्रसीद, प्रसीद;—

यतो विश्वं सृष्टं त्वमसि किल धातेति विदितो
यतो निघ्नन् दुष्टानखिलजनभर्त्ता च भरणात्।
यतो धत्से मूर्त्तिं प्रतियुगमिमां विश्वमवितुं
तुरीयायै मूर्त्त्यै तव खलु नमः संहर रुषम्॥

रुद्र—भगवन्! सकललोकैकशरण्य! नारायण! प्रसीद, प्रसीद;—

एकः सृष्टिविवर्त्तनेन बहुधा यो व्याप्य विश्वं स्थित-
स्तत्त्वातीतवरेण्यविग्रहधरो यो योगभोगातिगः।
व्यक्ताव्यक्तजनुर्जगत्प्रसविता पाता निहन्ता च य-
स्तस्मै श्रीपुरुषोत्तमाय हरये तुभ्यं नमः साम्प्रतम्॥

अहो! दुर्दर्शनीयोऽयं भगवतो नृसिंहमूर्त्तिपरिग्रहस्तथाहि—

ऊर्द्धोत्क्षिप्तविशालकेशरतडित्संछन्ननीलाम्बरः
पिङ्गोग्राक्षिपुटः करालदशनव्यात्ताननो भीषणः ।
आवक्षःप्रविलम्बमानरसनो हुङ्कारघोरस्वरो
दैत्येशान्तकदम्बदम्भितवपुर्देवो नृसिंहो ह्ययम् ॥

तत् का शक्तिरस्माकमस्य पुरस्ताद्गमनाय । ( लक्ष्मीं प्रति ) भवति !
कमले ! त्वमेव प्रसादय भगवन्तम् ।

लक्ष्मीः—देव ! प्रसीद, प्रसीद ,—

नाथ ! त्वच्चरणाश्रिता त्वमसि मत्प्रेमामृताम्भोनिधि-
स्त्वं प्राणा वपुरस्मरश्च परमं ध्येयं हि मे दैवतम् ।
आशाभङ्गविधौ त्वमेव च परा शक्तिर्भये साहसं
तद्रूपं चिरसौम्य ! धत्स्व भुवनध्येय शिव सुन्दरम् ॥

ततः प्रविशति देवर्षिः ।

देवर्षिः—अहो को नामाय नवावतारो भगवतो महाप्रलयशङ्कामुप-
जनयति विश्वस्य । तथाहि,—

दैत्याधीशाननाडीचयवलयवलत्पाशवद्धोर्द्धकायो
हुङ्कारस्फोटिताशो निखिलभुवनभङ्गनिर्गताचिर्दयाग्निः ।
दीप्यज्ज्योतिष्कबिम्बच्छुरितनिजजटाभारभीमाग्रमूर्द्धा
सोऽयं कल्पान्तशङ्कां जनयति जगतां यस्य तुर्य्यावतारः ॥

अहो ! इदमपि महदाश्चर्यं दृश्यते । यत् किल,—

अर्द्धेन भाययन् लोकानङ्गेनार्द्धेन पालयन् ।
अपूर्व्वो नृहरिर्देवः प्रोद्वेजयति पाति च ॥

तत्का शक्तिरन्यस्य भक्तप्रधानमिमं प्रह्लादमन्तरेणास्य सान्निध्यमुप-
गन्तुम् । ( दृष्ट्वा ) अरे ! वत्सोऽयं प्रह्लादो मूर्च्छित इहास्ते
भक्तिचन्दनोक्षित कुसुमाञ्जलिरिव विष्णोश्चरणारविन्दतले ।

( प्रह्लादमुद्दिश्य ) वत्स ! प्रह्लाद ! समाश्वसिहि, समाश्वसिहि !
इति कमण्डलूजलेनासिञ्चति )

प्रह्लादः—( प्राप्तसंज्ञः समुत्थाय ) हा तात ! हा पुत्रवत्सल !

नानुष्ठितं किञ्चन जातु ते प्रियं
न वा श्रुतं तात ! च ते हितं वचः ।
त्वत्पादपूजा न कदापि मे कृता
तवाहमस्यास्तु निदानमापदः ॥

देवर्षिः—समाश्वसिहि वत्स ! न कालः शोकस्य नाधुना ।
पश्य प्रकम्पते विश्वं महाप्रलयशङ्कया ॥

तदवलोकय सर्व्वतो ब्रह्मादयो देवा भगवतो नरसिंहस्य कोपप्रशमनाय समन्तात् कृताञ्जलयः स्तुवन्ति भगवन्तं, न तु ते तत्सान्निध्यमुपगन्तुमुत्सहन्ते । तदलं शुचा, भगवत्कोपदहनप्रशमनाय त्वमेवैकः पीयूषीभव ।

प्रह्लादः—( समाश्वस्य समन्तादवलोक्य च ) अहो सर्वे एव देवाः समन्तात् परिलक्ष्यन्ते, मेदिनी च मुहुर्मुहुः कम्पते । तत्किमिदानीं करोमि, भगवन् ! प्रपन्नार्त्तिहर !

न ज्ञानं नापि भक्तिर्न खलु मम तपो नास्ति शिक्षा न दीक्षा
नास्था धर्मेषु काचिन्न च जपनिरतिः प्राक्तनं नास्ति कर्म्म ।
नित्यं भोगेषु रागः क्षणमपि न भवद्ध्यानयोगे प्रसक्ति-
र्मां देव त्राहि बालं चरणनिपतितं कम्पमानञ्च विश्वम् ॥

( अस्मिन्नवसरे सहसान्तर्हिता नृसिंहमूर्त्तिः
ततः प्रविशति पटीक्षेपेण विष्णुः )

विष्णुः—वत्स ! प्रह्लाद ! अलमलं विषादेन, समाश्वसिहि ; पश्य सर्व्वत एव निर्व्विघ्नो निष्कम्पश्च जीवलोकः । अपि च—

तातः शापविमोहविस्मृतधिया गीर्वाणशत्रुः पुरा
यश्चासीद्विजयाभिधो मम चिरं वैकुण्ठदौवारिकः ।
प्राप्यास्मत्स्मरणं स शापकवलान्मुक्तः पिता दैत्यराट्
तत् किं वत्स ! शुचा प्रशाधि भुवनं तातेन यच्चार्जितम् ॥

परमार्थतस्तु—

का माता जनकश्च कः परिजनाः के पार्थिवं किं धनं
तत्सर्वं हि शरीरभाववशतः सम्बन्धवत् संसृतौ ।
सिन्धौ पल्लवयोजनेव मिलति प्रेत्यान्यतः कालतो
नित्येऽनित्यविभावना च किमिह त्वं वत्स ! सन्दूयसे ॥

( इति प्रह्लादस्य नयने मार्जति )

प्रह्लादः—( सविस्मयं ) अहो ! किमेतत् अहो ! किमेतत् !

मोहो मेघ इवापयाति सहसा विद्याप्रवाहोदयाद्
अन्तःसद्गसहस्रचक्रकमले पश्यामि कृष्णालिकम् ।
वात्याताडितशुष्कपर्णचयवन्माता पिता सम्पदो
दूराद्दूरमपेरिताश्च परितः पश्याम्यजस्रं विभुम् ॥

सर्वथा कृतार्थोऽस्मि सिद्धकामोऽस्मि संवृत्तः । भगवन् ! तदिच्छामि चिराय भगवत्पादान्तिकवासप्रसादम् ।

विष्णुः—वत्स ! नाद्यापि ते भोगकालः समतिक्रान्तः । अतो यावज्जीवदिदं पैतृकराज्यमुपभुज्यताम् । सत्यवसरे वैकुण्ठधामनि तव वासो निर्दिष्ट एव मया । हंहो ! देवाः ! भवन्तोऽप्येवास्मिन्नभिषेकानुष्ठानेऽनुरज्यन्तु । ( लक्ष्मीं प्रति ) देवि ! त्वदङ्कदुर्ललितं वत्समेनं परिसान्त्वय साम्प्रतम् । (लक्ष्मीर्विष्णुपार्श्वस्था तथा करोति ) आक्रियन्तामिदानीं सर्वाण्यभिषेकद्रव्याणि । तथाहि,—

शङ्ख यच्छतु वारिधिः सितशुभच्छत्र निशाधीश्वरः
शैलश्चामरमम्बर सुरतरु' पुष्पाण्यरण्येश्वरी ।
वायुश्च व्यजन शुभाय विबुधा' स्व स्व ददत्वायुध
मम्भोद सुधयाभिषिञ्चतु सदा राज्याभिषेकेऽस्य च ॥

अयि भोः परिजनाः ! आनोयतामत्र सिंहासनम् ।

( परिजना' सिंहासनमानयन्ति, विष्णुःप्रह्लादं सिंहासने
समुपवेशयति, देवाः यथोक्तं कुर्व्वन्ति, ब्रह्मा
कमण्डलुजलेनाभिषिञ्चति । )

( नेपथ्ये दुन्दुभिशङ्खवेणुध्वनिः पुष्पवृष्टिश्च )

विष्णुः—वत्स ! तत् केवलमिदमाशास्महे,—

भक्तिरेका विजयते या च शक्तेः पर स्थिता ।
साध्यतामद्य ते वत्स ! शक्तिविंजयसाधिका ॥

परमार्थतस्तु,—

कीर्त्तिर्भातु गुणेन राजतु गुणो धर्म्मेण धर्म्मो धनैः-
स्तैस्तैः सिध्यतु कामना किल तया शक्तिश्चिर साध्यताम् ।
लक्ष्मीसत्यदयातपांसि च तथा गच्छन्तु वृद्धिं मुदा
सञ्चारिन्नाममपेक्षते च सरलं त्याज्यं न तज्जात्वपि ॥

तदुच्यतां किन्ते भूयः प्रिय करवाणि ।

प्रह्लादः—देव ! किमतः परमपि प्रेय. श्रेयो वा विद्यते ? तथापि देयं
चेन्मन्यते भगवांस्तदिदमस्तु, यत् किल—

स्वाराज्ये त्रिदशाधिपो नरपतिः क्षौणीं तथा चासुराः
पाताल परिपालयन्तु सततं स्वे स्वे च धर्मे स्थिताः ।

वर्णो धर्म्मधनो निषेव्य विषयान् मुक्तौ सदोत्तिष्ठतां
सद्भक्तश्च कवेरियं विजयतां वाणी विशुद्धात्मिका ॥

( इति पटीक्षेपानन्तरं सर्व्वे प्रस्थिताः )

इति षष्ठाङ्कः समाप्तः ।

समाप्तमिदं भक्तिविजयनाटकम् ।

---

## हरिश्चन्द्रकथा

( दशमवर्षीयचैत्रसङ्ख्यातोऽनुवृत्ता )

[ निबन्धकः—श्रीकालीपदकाव्यतीर्थसूत्रविशारदः ]

अथ तावत् कथान्तरं हरिश्चन्द्रस्य सर्वस्वदानमधिकृत्य प्रचलितं प्रस्तूयते। कथैषा मार्कण्डेये, देवीभागवते च—इति पुराणद्वये एव प्राप्यते, अन्यत्र क्वापि न लक्ष्यीकृतास्माभिः। चण्डकौशिकं नाम नाटकमपि इमामेव कथामालम्ब्य असकृत् पारिषदानां मनांस्या-वर्जितवदिति ज्ञातमेव। अत्र मार्कण्डेयपुराणीया कथा एव मुख्यत आलम्बिता, विशेषाश्च तत्र तत्र स्थाने वक्तव्याः ॥

कदाचिद् राजा हरिश्चन्द्रो मृगयार्थं वने भ्राम्यन् रुदतीः स्त्रियः काश्चित् ददर्श। तास्तु स्त्रीरूपधराः सिद्धयो विश्वामित्रेणायत्तो-करणाय आकृष्टाः। ता अजानन् राजा रक्षितुं व्यवसायं मन्वानो तस्य तपसो विघ्नमकरोत्। विश्वामित्रेणापि तपसो विघ्नमालोक्य राज्ञश्च परिचयं, तथा तस्य ब्राह्मणाय दातुकामतां ज्ञात्वा

ससागरां धरामेतां स-भूभृद्ग्रामपत्तनाम्।
राज्यञ्च सकलं वीर रथाश्वगजसंकुलम् ॥
कोष्ठागारञ्च कोषञ्च यच्चान्यद्विद्यते तव। •
विना भार्य्याञ्च पुत्रञ्च शरीरञ्च तवानघ ॥

धर्म्मञ्च सर्वधर्मज्ञ यो यान्तमनुगच्छति।
बहुना वा किमुक्तेन सर्वमेतत्प्रदीयताम् ॥ इत्युक्तम्।

राज्ञापि ओमित्युक्ता तद्वचन तथैवानुष्ठितम्।

अत्र देवीभागवते—तपोविघ्नसम्पादनात् परतः कालान्तरे पुण्ये तीर्थे पुत्रविवाहस्य कृते अर्थहेतुर्विश्वामित्रेण प्रार्थितो हरिश्चन्द्रः आत्मनो दानभूयिष्ठतां वर्णयित्वा सर्वस्वमृषये ददावित्यनुसन्धेयम्।

विश्वामित्रस्तु प्रतिग्रहं स्वीकृत्य दानानुरूपां दक्षिणां, तथा राज्ञश्च स्वराष्ट्रात् प्रवासनमादिशत्। राजा तु राज्यं परित्यज्य सदारापत्यो मानुषराष्ट्रात् बहिष्ठ वाराणस्यां मन्यमानस्तामेव पुरीं गत्वा दक्षिणायाः कृते माससमात्रमप्रार्थितवान्। विश्वामित्रोऽपि मासान्ते आगम्य दक्षिणां प्रार्थयामास। राजा तु अर्थमलब्ध दृष्ट्वा अनृणीभवितुं प्रथमतः पत्नीं मातरमनुधावन्तं रुदन्त रोहितञ्च कस्यचिद्वृद्धस्य ब्राह्मणस्य व्यक्रीणीत। अत्र देवीभागवते विश्वामित्र एव ब्राह्मणरूपधृक् सन् हरिश्चन्द्रमनोरमां शैव्यां तत्सुतं रोहितञ्च क्रीणाति स्मेति प्रपञ्चितम्।

विक्रयलब्धं धनञ्च विश्वामित्र' स्तोकं मन्वानो असदृशीयं दक्षिणेति राजानं शप्तुमियेष। राजापि भूयो दक्षिणां दातुकामः आत्मानं विक्रेतुं मनश्चकार। तदा राज्ञो भाविनीं क्लेशपरम्परा-मवगम्य धर्म्मः स्वयमेव चण्डालवेशमास्थाय तं क्रेतुमागच्छत्। राजा तु चण्डालभावभीतो विश्वामित्रस्य दास्यमेव स्वीचकार। विश्वा-मित्रस्तु चण्डालरूपाय धर्म्माय एव विदिततद्भावो हरिश्चन्द्रं दत्त्वा यथाभीष्टं जगाम। हरिश्चन्द्रोऽपि वाराणस्यां श्मशाने चण्डालकर्म्म कुर्व्वन् दुर्विषहदुःखानलेन दग्ध इव द्वादश मासान् कथमपि निनाय।

अथ कदाचित् रोहितोऽहिना दष्टो ममार। शैव्या तं क्रोडे कृत्वा रुदती श्मशानालयं सम्प्राप्ता। अथ तस्या विलापं शृण्वन् स्मृतपधर्म्मा राजा तां शैव्यां बुद्धा विलपितुमारेभे। तस्य च विलापेन

प्रकटितात्मभावो हरिश्चन्द्रः शैव्यया प्रबोधितः। तदा राजा राज्ञी च धर्म्मं धिक्कृत्य दैवं दूषयित्वा कुमारेण सममेव चितामारोढमीषतुः।

अत्र देवीभागवते,—कदाचित् स्वामिनो विप्रस्य कृते समित्कुशादिकमाहरन् रोहितः सर्पेण दष्टो मृतश्च। तमर्थं ज्ञात्वा विलपितुमारभमाणां तपस्विनीं शैव्यां ब्राह्मणो भृशं भर्त्सयामास। समाप्ते च निखिलगृहकर्म्मजाते निशीथे एकाकिनी मृतं बालकमादाय पुत्रशोकेनोत्क्रोशन्ती शैव्या श्मशानाभिमुखं जगाम। अथ राजपथे अत्यर्थमुत्क्रोशन्तीं विलपन्तीं स्त्रियं दृष्ट्वा नगरवासिनस्तां बालघातिनीं राक्षसीं मन्वाना बलाद्धत्वा श्मशानाधिपतये चण्डालाय समर्पयामासुः। चण्डालोऽपि हरिश्चन्द्रे तस्या वधभारं निदधे। राजा तु स्त्रीणां हननायोग्यत्वं विचार्य्य तस्या वधमनीप्समानश्चण्डालभृशमनुनिनाय। चण्डालस्तु अकरुणः खड्गं हरिश्चन्द्रायैव दत्त्वा तस्या हननमादिशत्। शैव्या तु "बालकं मे दग्ध्वा मम प्राणान् गृहाण" त्युवाच। हरिश्चन्द्रोऽपि बाढमित्युक्त्वा तस्थौ। अथ शैव्या पुत्रशोकातुरा विलपन्ती राज्ञा अभिज्ञाता। सर्वां दशापरम्परामालोच्य राजापि हा वत्स रोहितेति विललाप इति विचित्रा कथा सन्न्यस्ता।

एतस्मिन्नन्तरे धर्म्मपुरोगमा समेता सर्वे देवा, विश्वामित्रादयश्च ऋषयः, राजानं प्रशस्य सभाजयामासुः। तदा देवराजोऽमृतवर्षेण रोहितं सञ्जीव्य हरिश्चन्द्रं प्रति—

सभार्य्यस्त्वं सपुत्रस्त्वं प्राप्स्यसे सद्गतिं पराम्।
समारोह महाभाग निजाना कर्म्मणा फलैः॥ इत्युवाच।

राजा तु स्वामिनश्चण्डालस्य निष्कृतिमदत्त्वा सुरालयमपि प्रवेष्टु नैच्छत्, ततो धर्म्म आत्मनः श्वपाकभावं प्रख्यापयामास। अथ राजानं पुत्रोपमाः प्रजा विहाय न क्वापि जिगमिषुं दृष्ट्वा सर्व्वाभिः प्रकृतिभिरेव तमिन्द्रोऽमरावतीं निनाय। इत्येषा द्वितीया कथा।

अत्रेदं चिन्त्यं यत् कथं नाम खलु भगवता विश्वामित्रेण विश्व-

त्वयैणापि मैत्रीं कुर्वता हरिश्चन्द्रे अकारण ताद्दशमकरुणम् आचरित-मिति। अत्र देवीभागवतीयकथा यत्, कदाचित् सुधर्मसभायां वशिष्ठं बहुधनसम्पन्नं दृष्ट्वा विश्वामित्रस्तद्धनागमवृत्तान्तमपृच्छत्, वशिष्ठस्तु तद्धनं हरिश्चन्द्रस्य सकाशात् लब्धवानिति भूयो भूयो राजानं प्रशशंस। तत्प्रशंसामसहमानो विश्वामित्र ऊचे—

एवं स्तौषि नृप मिथ्यावादिनं कपटप्रियम्।
वञ्चितो वरुणो येन प्रतिश्रुत्य वरं पुनः॥
मम जन्मार्जित पुण्यं तपसः पठितस्य च।
त्वदीयं वातितपसो ग्लहं कुरु महामते॥
अहं चेत्तं नृप सद्यो न करोम्यतिसंस्तुतम्।
असत्यवादिनं काममदातारं महाखलम्॥
आजन्मसञ्चितं सर्वं पुण्य मम विनश्यतु।
अन्यथा त्वत्कृतं सर्वं पुण्यन्त्विति पणावहे॥ इति

ततः प्रभृत्येव विश्वामित्रो हरिश्चन्द्रमसत्यवादिनं कर्त्तुमयतत। तस्मा-देव सप्तमस्कन्धे ऊनविंशाध्याये—

दक्षिणायाः सुवर्णं मे दत्त्वा गच्छ नराधिप।
नाह दास्यामि वा ब्रूहि मया त्यक्त सुवर्णकम्॥

तथा तत्रैव विंशाध्याये—

कुतस्ते भविता राजन् धनप्राप्तिरत परम्।
गतं राज्य तथा कोषो बलञ्चैवार्थसाधनम्॥
वृथाशा ते महीपाल धनार्थे किं करोम्यहम्।
निर्धनं त्वाञ्च लोभेन पीडयामि कथ नृप॥
तस्मात् कथय भूपाल न दास्यामीति साम्प्रतम्।
त्यक्ताशा महतो कामं गच्छाम्यहमत. परम्॥
यथेष्ट व्रज राजेन्द्र भार्य्यापुत्रसमन्वितः।
सुवर्णं नास्ति किं तुभ्यं ददामीति वदाधुना॥ इति च

निष्करं विश्वामित्रेण हरिश्चन्द्राय उक्तम्। राजा तु क्लेशेनापि महता स्वस्य आनृण्यं सम्पादयामास। अपरञ्च विश्वामित्रो हरिश्चन्द्रेण तपसः प्रतिषिद्ध इति तस्य वैरं न एकान्तमसमीचीनम् इति देवीभागवतीया कथैवानुसन्धेया।

परं मार्कण्डेयपुराणे एतत्क्लेशपरम्परा "राजसूयविपाकोऽयं हरिश्चन्द्रस्य भूपते"रिति निर्दिष्टम्। अन्यत्र क्वापि तु तत्पुराणे हरिश्चन्द्रस्य राजसूयकर्तृत्वं नोपलक्षितम्। यदि च देवीभागवते तस्य राजसूयकर्तृत्वं दिङ्मात्रेणोपदिष्टं तथापि कथमेष विपाकस्तस्मात् सम्भवेदिति नाधिगम्यते। पुराणान्तरेषु तस्य राजसूयकर्तृत्वं संज्ञामात्रेणैव लभ्यते। ऐतरेयब्राह्मणे तथा शाङ्खायनश्रौतसूत्रे शौनःशेप कथाया—"स ( हरिश्चन्द्रः ) तथेत्युक्त्वा राजानमामन्त्रयामास। अनेन ( शुनःशेपेन ) त्वा यया इति। तथेति। श्रेयान्वै ब्राह्मणः क्षत्रियादिति। तस्मात् एत राजसूय यज्ञक्रतुं प्रोवाच। स एतं राजसूये पुरुष पशुमालेभे।" इति यच्छ्रूयते तदेव वरुणयज्ञ हरिश्चन्द्रस्य राजसूयानुष्ठानमिति मन्तु शक्यते। अथ कथमस्य विपाकात् हरिश्चन्द्रस्य भार्य्यापुत्रविक्रयः, तथा चण्डालदासत्वप्राप्ति सम्भवेताम्? राजसूयस्य फलादेव तस्य नैरुज्यमिति तु दृष्टेः सम्पूर्णतां सूचयति। परं मन्यते निर्विघ्नसमाप्तिराहित्यादेव हरिश्चन्द्रस्य तथाविधा क्लेशपरम्परा समुपस्थितेति। ( क्रमशः )

---

## मासिकसभा

सौरवैशाखस्य त्रयोदशदिवसे बृहस्पतिवासरे सायं सप्तमघटिकाया परिषदो विगतवर्षीयदशमैकादशाधिवेशनद्वयो सुनिष्पन्ना जाता। तत्र च श्रीमतामक्षयकुमारशास्त्रिमहोदयानामाध्यक्ष्यमासीत् सभाकार्य्यसम्पादनविधौ निर्व्वाचित सदस्यसमवाये। कीर्त्तितेषु च

सम्पादकमहोदयैर्नूतनसभ्याना नामसु श्रीमन्निश्चिन्ताहरणकाव्यतीर्थ-वर्त्तमानवर्षीयकार्य्यपरिचालकनामान्युत्कीर्त्तितानि, प्रगृहीतानि च सर्वसम्मतिक्रमेण।

ततश्च श्रीमन्निर्दक्षिणारञ्जनशास्त्रिभिः एम् ए महोदयैः स्वरचितो 'लोकायतमतम्' इति शीर्षक प्रबन्धः पठितः। श्रीमन्निश्चिन्ताहरण-काव्यतीर्थ एम् ए महोदयैश्च श्रीयुक्तवेणुधरतर्कतीर्थविरचितो 'मागधे-शवरीपूजन'मिति शीर्षकः प्रबन्धो वाचितः। श्रीमद्भिर्भुवनमोहन-साङ्ख्यतीर्थप्रमुखैर्वक्तृभिर्विशेषेण प्रबन्धसमालोचना कृता। प्रायेण रजन्या दशमघटिकाया सभापतेर्धन्यवादानन्तर गृहीतसत्यनारायण-प्रसादैः ( तद्दिने परिषदो नूतनगृहप्रवेशमङ्गलार्थं सत्यनारायणार्चन-मभूत् ) ससदस्यैः सभापतिभिः सभाभङ्गो व्यधायीति।

---

## चित्रपरिचयः

येषामालेख्यमूर्त्तिर्वीक्ष्यतेऽस्मिन् व्यलीकप्रतिपच्चभूतेव पत्रिका-वक्षस्य क्षीणप्रतिभोज्ज्वला विद्वज्जनमण्डलीभि', ते हि प्रख्यातनामानो भारतविसारिप्रभूतकीर्त्तयः स्वर्गीयाः शशधरतर्कचूडामणिमहोदया।

वङ्गविषयान्तर्गतफरिदपुरजिलाया कोटालीपाडानाम्नीयाग्रामे सुप्रसिद्ध' काश्यपान्वयस्तत्रभवता शशधराणा क्षीरोदधिरिव प्रभव-स्थानमभूत्। यत्र दार्शनिकधुरीणा. पारमहस्यवर्त्माश्रयिणो गीता-भाष्याद्वैतसिद्ध्यादिकृतो मधुसूदनसरस्वतीपादा' समुदयन्तः कुलमिद-मुज्ज्वलमकार्षुः। विद्वदग्रेसराणाममीषामिव सरस्वतीपादानां पदवी-क्रमानुरोधादपरे च केचन प्राज्ञसम्मता विद्वास' प्रोद्यत्प्रतिभानभानवो मानवानामज्ञानतमस्तोममपोहितुमत्रैवोदपद्यन्त। चिरप्रनष्टाना तेषा तेषा महात्मना कृपालवपुष्टे यस्मिन् वंशेऽद्यापि प्रजायन्ते स्मृतिन्याय-दर्शनपारदृश्वानस्ते ते नचिरोन्नताः कुरीरधुरन्धराः। तत्र हि प्रमोदन-

पुरन्दरनाम्नः कस्यचिद्विपश्चित्प्रवरस्य श्रीनाथचूडामणियादवानन्द-न्यायाचार्य्यौ द्वौ पुत्रौ, तत्रभवान् शशधरतर्कचूडामणिः कनिष्ठस्य यादवानन्दस्य वंशधरः। एतत्पूर्वजाताः कदाचित् कोटालिपाडं परिहृत्य प्रथममिदिलपुराख्यं पत्तनमुपेताः क्रमेण परिहृत्यैतदपि पत्तनं मुगडोवाख्यं ग्रामं जग्मुः। कालेन च तमपि प्रहाय स्वयं चूडामणिमहोदयाः प्राणपुरग्रामे वासस्थानं कल्पितवन्तः। वर्त्तमाने पुनस्त एव स्वधुनीप्रवाहोच्छ्रितप्रतीरमहीरुहे वहरमपुरनगरे द्वितलप्रासादमुपकल्प्य निर्जनवाससुखमन्वभवन्। तस्मादेवातिकाम्यादात्मभवनादेषां परलोकप्राप्तिरभूत्।

सोऽयं बाल्ये विक्रमपुरवासिना प्रसिद्धवैयाकरणेन स्वर्गीयविश्वेश्वरतर्कपञ्चाननमहोदयेन सविधेऽधीतवान् व्याकरणशास्त्रम्। समनन्तरञ्च नैयायिकप्रवराणां स्वर्गत-दुर्गाप्रसादतर्कालङ्काराणामन्तेवासित्वमुपेत्य न्यायशास्त्रमध्यगमत्, सांसारिकभावविपर्य्यासेन च पञ्चतात्मभूत्तस्य न्यायशास्त्राध्ययनम्।

कालान्तरे चायं वाराणस्यां श्रीमद्विश्वानन्दस्वामिनो गुरुभ्रातु श्रीमद्विश्वरूपस्वामिनः सकाशादुपनिषदमधीतवान्।

कदाचिदेकतो खृष्टियानधर्म्मप्रभावादपरतश्च ब्राह्मधर्म्माभ्युदयाद्विलोपमुपगच्छत्स्विव वर्णाश्रमधर्म्मेष्वयमेव महात्मा केषाञ्चन वर्णाश्रमप्रणयिना साहाय्यकेन वर्णाश्रमधर्म्माणामुपयोगितां श्रेय साधनतामितरधर्म्मेभ्यः श्रेष्ठत्वञ्च प्रकटयामास जनसमाजे। तत्प्रणीताः "साधनप्रदीप" "धर्म्मव्याख्या" प्रभृतयो ग्रन्थास्तस्य पाण्डित्यप्रकर्षस्यात्युज्ज्वलं निदर्शनम्। संक्षेपतः पुनरिदमेव वक्तव्यं यत्तथाविधा स्वाचारनिष्ठा स्वधर्म्मानुरागोऽजस्वितामनस्वितादयो गुणा अद्यत्वे नास्माभिः परिलक्ष्यन्ते कुत्रापि। तदभावाद्वर्णाश्रमधर्म्माणां सुदुष्पूरा क्षतिरतिचिरायैवास्मानुत्पीडयिष्यतीति शङ्कामहे।

---




संस्कृत-साहित्य-परिषदोऽन्यतरः सम्पादकः प्रतिष्ठापकश्च

स्वर्गीयगीष्पतिरायचतुर्धुरीणकाव्यतीर्थः

[ काशीभारतीसमितेः प्राप्तम् ]

# संस्कृतसाहित्यपरिषत्

## ग्रीष्मतिसंख्या

इयं संस्कृतसाहित्यपरिषत् प्रतिभा रवेः ।
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम् ॥

१८५० शकीये ज्यैष्ठे ११श-वर्षस्य २य-संख्या

### मतिमञ्जरी

**विशेषसंख्यारहस्यम्**—सभाजनीयाः सामाजिकाः ! अलं तावद्विदितवेदितव्यानामत्रभवतामापातरम्य मुखपातं प्रधानार्थ-तिरोधायकमभिधायामूल्य समयमतिपातयितुम् । आदित एव वक्त-व्यार्थमुपक्षिपामः ।

अस्माकमधन्यतया स्वर्धुनीरोधःसम्कुचितवक्त्रो दैवेन भस्मशेषतां नीते पशुपतौ परिषदं प्रति तस्यात्यन्तिकं स्नेहबन्धं परमोपकारित्व-ञ्चानुस्मृत्यैतेषां कथञ्चिद्गुणानुकरणार्थं तन्नामाङ्किता काचिद् विशेष संख्या संस्कृतसाहित्यपरिषत्पत्रिकायाः प्रकाशनीयेति कार्य्यनिर्व्वाहक सदःसदस्यैर्व्यमृश्यतेति । प्रकाशितपूर्व्वा च तन्निर्देशादिशेव सा संख्या नूनमिदानीं ग्राहकाणां समुद्दीपितशोका लज्जयेव प्रन्नकागदमध्य-मध्यास्ते । सा च विशेषसंख्या पशुपतिविषयमात्रोपजीव्य-

त्वेन वैशिष्ट्यमादधानापि द्वादशपत्रिकाभ्यो वार्षिकीभ्यो नातिरिच्यते नामेत्यतिरोहितमनुसन्धित्सूना पत्रिकाग्राहकाणाम्। तत्र चैवं कारणानि प्रदर्श्यन्ते ,—कालप्रभावात् पत्रिकाप्रकाश्याना निबन्धाना भूयानभावः खेदयति पत्रिकाप्रकाशकानां मनांसीत्यभियुक्ताः प्रमाणतामध्यासते। तत्र यदि काचित् सङ्ख्या व्यपदेशान्तरेण प्रयासाद्दृते प्रकाशयितुमर्हति तदा के नामात्यविवेका अपि तत्रोदासीरन्नित्येवाद्यं कारणम्। श्लोकसङ्ख्यानिबन्धाश्च बहुविषये दुर्लभतां नाददते इति प्रत्यक्षमस्मादृशामपि प्रबन्धदरिद्राणा सम्पादकहतकानाम्। द्वितीयतश्चाप्राणपातं परिश्रम्यापि प्रतिकूलदैवप्रभावादिदानीमपीमां यथाकालमसमर्थाः प्रकाशयितुमिति क्षीणक्षीणा एवोपतिष्ठामो भवतामन्तिके। अस्याश्चातिरिक्ततायां पुनर्विलम्बभूमा सामयिकप्रायामपीमामतिदूरं हरेदिति द्वितीयो हेतुर्वितन्यते। तृतीयतश्चैकान्तमनपेक्षितमपि सम्पातायातमर्थसङ्क्षेपं नैवोपेक्षणीयमीक्षन्ते सचेतसः कार्यनिर्वाहकसदस्यसमवायाः। मा तावद्वाचकैः साचीक्रियन्तामाननान्यनतिरिच्यमानामिनामवलोक्येति प्रयासोऽयं वाचा विस्तरस्य। परमासीदस्माकमेषा कल्पना यद्, ये तावत् श्लोकनिबन्धाः समेष्यन्ति प्रदेशविशेषात् तान् प्रकाशयितुं यदीयं पत्रिका द्वैगुण्यमपीच्छेदवयवसम्पत्त्या तथापि वयम् अकुण्ठिता सानन्दमेवाभिनन्दिष्यामस्तदिति। परं यद्यप्यनेकप्रदेशेभ्य एवाभ्यागतास्ते ते निबन्धा नैकान्ततो न्यूनतामुपयन्ति, तथापि न ते अस्मदाशानुरूपा इत्यनिच्छन्तोऽपि प्रस्तावमिममुपस्थापयामः।

एवमपि पशुपतिसंख्यापरसंख्याभ्यः किञ्चिद् गुरुत्वमुरीकरोति स्मेति नातिरोहितमनुग्राहकाणाम्। अत्र च प्राप्तकालमात्मनीना काचिन्न्यूनता विन्यस्यते सता पुरतः, तथाह्यागतेषु निबन्धेषु केचिदेवं समयातिक्रमेणागता यत्प्रयत्नशतेनापि तत्पशुपतिसंख्या लम्भयितुमसमर्थाः परसंख्यायामेव न्यवेशयामेति। केचिच्च ततोऽप्यर्वाचीनाः सारस

मन्थरगमनाश्च तामपि संख्यामतिक्रम्य समागच्छन्तो नास्माभिरनभिलसद्भिरप्यशक्यन्त प्रकाशयितुमेवास्मत्पत्रिकायाम्। एतदर्थञ्च तान् निबन्धप्रेरकान् वाग्भिरभिमुखीकृत्य शिरसा प्रसादयामो यदेताननिच्छाकृतदोषान् समोक्ष्यकारिण' क्षमन्तामक्षमाणामस्माकमिति।

गोष्पतिसख्याप्यस्माभिः पूर्व्वनिर्दिष्टक्रमेण तत्तत्कारणवाटोपस्थापनेन च ज्येष्ठसख्यायामेवान्तर्भावितेति प्रेक्षावन्तः प्रतियन्तु। एतच्च केवलं संक्षेपबुद्धेरेवानुष्ठितं न कारणान्तरेणेत्यामुक्तकण्ठमुद्घोषयाम'। मृतमहात्मद्वयमस्माकं किमिवासीदिति ज्ञातपूर्व्वमेव सर्व्वेषामतोऽत्र पुनस्तदुल्लेखेन पिष्टं पेषयन्तो न भवतः खेदयामः।

**गोष्पतिप्रयाणे पत्रिकाभिमतिः**—तत्रभवता गोष्पतिकाव्यतीर्थमहोदयाना परलोकप्राप्तौ विभिन्नपत्रिकासु प्रकाशितानां वङ्गभाषामयशोकनिबन्धाना साराशाः केचित् सङ्कलय्य निवेद्यन्ते ग्राहकाणा विज्ञापनाय।

**वङ्गवासोपत्रिकायाम्**—पञ्चपञ्चाशद्वर्षे वयसि गोष्पतिकाव्यतोर्थः परलोकं प्रातिष्ठत ·······ते च पुरुषपरम्परया आनुष्ठानिकहिन्दुधर्म्मावलम्बिनः। · ···अद्यत्वे केचन ब्राह्मणपण्डिता अपि आङ्गलशिक्षायै पुत्रान् प्रलोभयन्ति। गोष्पतिजनकस्तु पुत्रं काव्यतीर्थोपनामकं संसाध्यानन्तरं यथेच्छशिक्षायै अन्वमोदत। तेषामयमाशयः—सस्कृतेन भित्तौ निर्म्मिताया पिण्डलोपस्य भयमपगमिष्यतीति। तत्फलेन गोष्पतिकाव्यतोर्थोऽपि आचारेण चारित्रेण च तथैवाभूदिति। संस्कृतसाहित्ये तस्यासाधारणपाण्डित्यमासीत्, सस्कृतभाषायां सरलमधुरसंगीतरचनायामासोत्तस्य भूयसी क्षमता। संस्कृतसाहित्यपरिषदोऽन्यतमप्रतिष्ठापकस्यास्य नेतृत्वगुणेन तत्सभासदस्यैरनेककृत्वः केषाञ्चित् संस्कृतनाटकानामभिनयेन ख्यातिविशेषः समुपार्जित ।·········नवीनमतविमुखोऽयं सर्वथा प्राचीनपथमेवाध्यतिष्ठत् इति।

**हितवादीपत्रिकायाम्—**विगते ( १३३४ बङ्गाब्दीय ) सौरचैत्रस्य पञ्चदशमितबुधवासरे पण्डित गोष्पतिकाव्यतीर्थमहोदयः पञ्चपञ्चाशन्मात्रपरिमिते वयसि लोकान्तरं प्रातिष्ठत। वयमस्य "हितवादी"पत्रिकायाश्चिरहितैषिणोऽकालमृत्युना मर्म्माहता वर्त्तामहे। गोष्पतिकाव्यतीर्थः स्वर्गीय कालीप्रसन्नकाव्यविशारदमहाशयस्य सव्यबाहुरिवासीत्। ··अस्य वाग्मिताशक्तिरसाधारणी शृण्वतः सामाजिकान् मन्त्रमुग्धानकार्षीत्।···—१३०६ बङ्गाब्दे गोष्पतिकाव्यतीर्थः "दाशोडाहितैषी"नामधेयस्य वार्त्तावहस्य सम्पादनभार परिगृह्य विशेषयोग्यतया स्वकर्त्तव्यमव्याहतमपालयत्।······ बङ्गीयैकोनाशीत्यधिकद्वादशशताब्दे सौरश्रावणमासे खुलनाजिलान्तर्गत टाउनश्रीपुराख्यग्रामे सुविख्यातभूस्वामि रायचतुर्धुरीणवंशे तत्रभवान् गोष्पतिकाव्यतीर्थो जन्म परिगृहीतवान्। तत्पितामहेन तत्रभवता तारकचन्द्ररायचतुधुरीणमहोदयेन स्वग्रामे विविधदेवदेवीना मूर्त्तिप्रतिष्ठा, कालिघाटे गङ्गातीरे घट्टस्थानमेकञ्च निरमायेताम्। · पिता चास्य भुवनमोहनरायचतुर्धुरीणमहोदयः संस्कृतभाषाया सुपण्डित आसीत्। तद्रचिते "छन्दःकुसुम" "पाण्डवचरित" नामके पुस्तके वङ्गभाषामये अवर्त्तेताम्। · ···

कलिकातानगर्य्यां प्रतिष्ठापितायाः यस्याः खलु संस्कृतसाहित्य परिषदः ख्यातिरधुना वङ्गदेशे वङ्गदेशाद्वहिरपि प्राचरत्, गोष्पतिरस्याः प्रतिष्ठातृष्वन्यतम आसीत्।

स्वर्गीय पशुपतिनाथशास्त्री गोष्पतिकाव्यतीर्थश्चेत्युभावेव प्रथमत स्तस्या. परिषद. सम्पादकपदमलंकुर्वन्तौ ता वर्त्तमानायामुन्नती पदमकारयताम्। दुर्भाग्यभूमा परिषदो यत्, शास्त्रिमहोदयस्य मृत्योरेकमासाभ्यन्तर एव गोष्पतिकाव्यतीर्थोऽपि तत्पदमन्वसरत्। संस्कृतसाहित्यपरिषत्सदस्यैर्यानि संस्कृतनाटकान्यभिनीतानि तत्रायं नाट्या-

चाश्चिलमग्रहीत्। कर्त्तव्यनिष्ठयोरेतयो सम्पादकयोरकालमृत्युना समुत्पन्ना क्षतिर्दुरपनेयैव प्रतिभाति संस्कृतसाहित्यपरिषद ।

**दैनिकवसुमतीपत्रिकायाम्**—वयं गभीरदुःखेन विज्ञापयामो यन्नास्तीह जगति वङ्गविषयस्य तेजस्वी वाग्मिप्रवरः साहित्यिको गोष्पतिकाव्यतीर्थमहोदयः। स हि दुर्द्दैवेनातिसारेणाक्रान्तो विगते बुधवासरे ( १५६ चैत्र ) दशमघटिकायामनन्तलोकं प्रस्थितः। कियद्दिनात् पूर्वं वाराणसीत कलिकातायामागत्य तत्रभवान् कायस्थसम्बन्धिनं कञ्चित् ग्रन्थं पूर्वप्रक्रान्तं समापयितुमभिलाषमकरोत्। रचितकियदंशोऽयं ग्रन्थः सम्पूर्णतां नागमत् .... ('वसुमती' पत्रिकायाः अपरसंख्यायामपि तद्विषयणी काचन रचना प्रकाशितासीत्।)

**आनन्दवाजारपत्रिकायाम्**—संस्कृतसाहित्यपरिषदोऽन्यतमप्रतिष्ठाता सम्पादकश्चान्यतरस्तत्रभवान् गोष्पतिकाव्यतीर्थो विगते बुधवासरे (१५ चैत्र) वेला-दशमघटिकाया परलोकमुपागमत् ......तस्यौजस्विनी वाग्मिता श्रोतृमण्डलीमुद्दीपयामास।· संस्कृतसाहित्यपरिषदः सदस्यान् गोष्पतिकाव्यतीर्थस्य परिजनांश्च वय मस्माकमान्तरिकी गभीरवेदना वेदयामः।

**सम्मिलनीपत्रिकायाम्**—अस्माकमकृत्रिमं प्रियसुहृद गोष्पतिकाव्यतीर्थमहोदय विसृज्य वयं यथा मर्म्माहता जाता न तद्भाषया प्रकाशयितुं शक्यते। · 'सम्मिलनी'पत्रिकायाः अतीव दुर्दिने तत्रभवतो गोष्पतिकाव्यतीर्थस्य तदीयसुयोग्यसहोदर-श्रीयुक्त भूपतिकाव्यतीर्थमहोदयस्य च समवेदना तथा साहायकमन्तरेणास्याः कैवावस्थाभविष्यत्तन्न कथयितुं शक्यते...... ।

---

संस्कृतसाहित्यपरिषदन्यतरसम्पादकानां गोष्पतिरायचतुर्धुरीण-
काव्यतीर्थमहोदयानां महाप्रयाणे—

## व्यथितविलापः

[ परिषत्पक्षतः—श्रीभुवनमोहनसांख्यतीर्थेन लिखितः ]

अहो सुरनरश्वतोरमविशेषदग्धात्मनां
विषादविषदूषितः समय एष दुःखाय नः ।
परो विबुधबान्धवो गुरुगभीरभावोन्नत
स गोष्पतिरुदारधीस्त्रिदिवशासमासेदिवान् ॥ १

विधातृविधिदारुणा परिषदोऽद्य सम्भावना
विभीषयति मानसं किमिव हन्त सम्पत्स्यते ।
विहाय यदिमामसौ विरहदुःखतीव्रव्रणो
गतं पशुपतिं पुरः समनुसृत्य दूरं गतः ॥ २

न यावदियमृच्छति प्रथमशोकनिर्वापणं
द्वितीयमिदमुत्थितं विरहदुःखमभ्येति ताम् ।
कथं परिषदो दशां व्यसनभारपर्य्याकुलां
विधाय ननु गोष्पते धृतिमुपैषि देशान्तरे ॥ ३

कलयोपचितः समग्रया परिपूर्णां प्रतिपत्तिमुद्वहन् ।
तमसेव शुभद्विषा शशी विधिनास्तं गमितोऽसि गोष्पते ॥ ४

शतशः प्रतिघातमञ्जसा सहमानेन सता स्ववर्चसा ।
परिषत् सुरभारतीरतिच्छितिरेषा भवता प्रतिष्ठिता ॥ ५

तनयामिव देहशोणितैः परिपोष्य प्रणयात् समेधिताम् ।
वद कस्य करे समर्पयन्नसि सुस्थः सुरराजसद्मनि ॥ ६

भवतो विरहेण कातरा परिषत् शोकमलीमसान्तरा ।
विभवैर्भवतैव भावितैरपि नो विन्दति हन्त निर्वृतिम् ॥ ७

अयि ते सुहृदां सकर्म्मणा परमेतत् परितापकारणम् ।
परिपुष्टकलेवरामिमा नहि यत् स्निग्धदृशा त्वमीक्षसे ॥ ८
तव चारुतरान् गुणोत्करान् व्यवहारान् समदृष्टिसुन्दरान् ।
स्मरतामनिशं पदे पदे वत सोदन्त्यितमां मनांसि नः ॥ ९
कृतवेदितया कृतात्मना नियतं वाक्पटुतानुवर्त्तिना ।
भवता प्रतिभावता गुणैर्गुणवान् को न वशीकृतो जनः ॥ १०
सुरवागसुरप्रवृत्तिभिर्मृतकल्पेति जनैः कदर्थ्यते ।
भवता तु तथाप्रतापिना परिवादः सुतरां विलोपितः ॥ ११
प्रथितान्वयलब्धजन्मना गुरुसारस्वतसेवनव्रतम् ।
चिरमाचरता निवेदित तव वंशानुगुण समोहितम् ॥ १२
अभिनये भवतो गतिरुत्तमा मतिमता मनसा प्रियकृत्तमा ।
भुवि विसारि ततो विमलं यशः कुसुमिता इव भान्ति ततो दिशः ॥१३
विधिवशेन विलोपमिवागते सुरगिराभिनये वत भारते ।
मधुरसंस्कृतनाट्यकलाश्रयामिह पुनस्तनुषे स्म समुन्नतिम् ॥ १४
तदिह वङ्गभुवस्तव शिक्षया भवति संस्कृतरङ्गसमुन्नति ।
विलसता स्मृतिरत्र शुभस्मृते स्थिरमुपेहि सुखं दिवि गीष्पते ॥ १५

---

## गीष्पतेस्तत्त्वलाभः *

[ निबन्धकः—श्रीसतीन्द्रचन्द्रव्याकरणतीर्थः ]

हंहो प्रियसदस्याः । श्रोतारो महानुभावाः ।

"एकस्य दुःखस्य न यावदन्तं तावद्द्वितीय समुपस्थित मे" इत्याक्षेपप्रत्यक्षमभोक्ष्यामुपजातमिह न. क्रमश एव कतिपयमहात्मप्रयाणादमूल्यरत्नसहारादिति ।

---

* काशीस्थभारतीसमितिअधिवेशे वाचित ।

पुरन्दरपुरसुन्दरमन्दारमन्दिरातिथिभूतानामतुलगुणगणानामेतेषां न प्रायशो गुणसमता समालोक्यते। एकैकस्मिन्—एवमसाधारणो गुणः, शक्तिश्चानन्यदुर्लभा, विविधमुपकर्तृत्वञ्च विलक्षणं, नापरस्मिन्, तादृश्येव महात्मनि तानि समुपलभ्यन्ते। परन्तु तेषां प्रत्येकमेव भारतवर्षनिवासिनां प्रोज्ज्वलमौलिविलसन्महामूल्यमुकुटान्तरदरादरधृतविविधरत्नं परस्पराशेषविशेषविलक्षणगुणग्राम्यहो! प्राधान्यमलभत चैकैकस्मिन् विषये।

हाहा हन्त! यद्येकोऽप्येवमिह नो नयनगोचरीभूतो भवेत् तेषामणुमपि गुणमादाय प्रादुर्भूतो भारतभुवि तदा तमासाद्य विलोक्य च भविष्यदाशया अन्तःकरण-निखात-शोकशल्याघातविषहृदावदुःखं क्षणमपि निर्विषमहो! शक्यते मन्तुम्।

अहो नु हन्त!! हाहा हतविधे! विलसद्वङ्गरत्नानामेतेषामन्यतमं महद् रत्नं परश्रीकातरैरमरनिकररतिमहदनुमाय हृतमितो गीष्पतिकाव्यतीर्थाभिध विगते सौरचैत्रस्य पञ्चदशदिवसे बुधवासरे पञ्चपञ्चाशद्वार्षिकमकस्मादकाले विधाय च हृतसर्वस्वामहह! वङ्गवसुन्धरामगाधदुःखजलधौ निःक्षिप्य।

अयि भोः प्रियश्रोतारो महाभागाः! माननीयाः सदाशयाः—सभ्यसत्त्वाः! आशीराशिस्नेहैकनिलयाः! शान्तिप्रीतिनिकेतनीभूताश्चायुष्मन्तः! जाने, न भवतामेतदविदितं—

"स जातो येन जातेन याति देशः (वंशः) समुन्नतिम्।
परिवर्त्तिनि संसारे मृतः को वा न जायते॥"

इति हितोपदेशीयोपदेशवाक्यम्। हाहा! नियतमेव विपरिवर्त्तमाने भुवनेऽस्मिन्ननिशमुत्पद्यन्ते विपद्यन्ते च कतिशो लोकाः, परन्तु तेषां मध्ये प्रविरल एव कोऽप्येवंविधो जायते, यस्य हि नाम चरित्रं सर्व्वसाधारणार्थमादरणीयमनुकरणीयञ्च भवेदिति, अवि-

श्रान्त-दिगन्तगामियशोराशिभिश्च धन्यम्मन्या चोच्चैरवस्थिता सकल-भूमि-समर्च्चिता च भवेन्माटभूमिः।

परन्तु, ये खलु बहुशः सौभाग्यादीदृशाः कतिपये महानुभावाः समासादिता भारतभुवि, तेषामन्यतमोऽयमालोच्यचरितो गीष्पति-काव्यतीर्थं सर्व्वेषामेवार्य्याणामनार्य्याणाञ्च भारतविषयवासिना-मादरणीयानुकरणीयचरित्र इति।

चतुर्नवत्याधिकसप्तदशशततम ( १७९४ ) शके शौरश्रावणे मासि 'खुलना'-नगरान्तःपाति श्रीपुरग्रामे कायस्थवंशावतंस-तारकचन्द्रसूनो-र्भुवनमोहनरायचतुर्धुरीणमहोदयस्य देहादुद्भूतो वङ्गालङ्कार-भूतोऽङ्ग,तपस्विसम्पन्नोऽभूतपूर्वं इव प्रभूत-प्रभावो भवभक्तो वरेण्यः सत्कर्म्मण्यग्रगण्यः पुण्यकर्म्मायं गीष्पतिनामधेयः।

* अथ यथाकालं गीष्पतेरध्ययने वैमत्यमुपस्थितमात्मीयानाम्। तत्राप्यनेक एव कालप्रभावमालोक्य इराजीविद्याध्ययनमेव सुष्ठु मन्यमाना झटिति तदेव समभिदधति स्म भुवनमोहनं पाठशालाया प्रेरयितुं गीष्पतिम्। न च सत्यनुष्ठिते तद्भाषाभ्यासे, स्वधर्म्मेषु रति-र्न स्थास्यतीति वाच्यं गुरुदासवन्द्योपाध्यायादौ व्यभिचारात्। अत्र च गीष्पतेस्तातोत्तरं—"ननु जाने न कोऽपि प्रायः त्रि चतुस्तलप्रासादा-न्निपतितो जीवतीति, दैवाच्च जीवन्त तथावस्थ कमप्यालोक्य तातः सन् कथमपि तनय न त्रि-चतुस्तलान्निपातयितुमुत्सुकः कोऽपि स्याद् वसुन्धराया विवेकी। गुरुदासादयो हि नाम पुराकृत-सुकृतप्रभावा न्न कालप्रवाहपतिताः पतिता अभवन्निति,—असौ च तत्र पतन् जीवितः स्यादित्यत्र को नाम निश्चय इति वादीदानीं निरस्तः।

तातोऽप्यतो गीष्पतेः प्रथमत एव स्वयमेव समाददे भारमध्या-पनायास्तनययोः। समतीते च कियति काले पितुः प्रयत्नेन सम

* गीष्पतिमुखादवगतम्।

धीतव्याकरणं सहोदरयुग्मं भूपति-गोष्पतीत्यभिधया प्रसिद्ध साहित्यादेरध्ययनार्थं पितुरनुमत्या क्रमप्यध्यापकत्वेनाङ्गीचकार।

सम्भाव्यते सुविदितमेतदस्ति भवतां पारस्यादिविजातीयभाषानिष्णातोऽपि धर्म्मासनसस्थितोऽपि ✓भुवनमोहनः स्वधर्म्मपरायणो विद्योत्साही संस्कृतभाषायामपि लब्धप्रतिष्ठो विद्वत्प्रियः प्रायः संस्कृतशास्त्रालोचनयैव शेष-जीवनमतिवाहयति स्मेति। साधारणाना छन्दोज्ञानार्थमनेन 'छन्द'कुसुमे'ति तत्परिशिष्टरूपेण च "पाण्डवचरिता"भिधं किमपि वङ्गभाषया निरमायि काव्यं,—यो हि नाम निबन्धो नानाच्छन्दोबद्धया कवित्वपूर्णया वङ्गभाषया अभिनवमेव विराजतेतरामद्यापि साहित्यभवे। तथाहि यत्र स्रग्धराच्छन्दसा पञ्चपाण्डववर्णनम्।—

दुर्व्वासादत्तमन्त्रे भजिल दुइजने पञ्चदेवे क्रमेते
कुन्ती श्रद्धाविधाने यम पवन तथा इन्द्रदेवे उपासे।
माद्री कुन्तीप्रसादे भजिल शुचि ह'ये युग्म अश्वीकुमारे
तद्द्वारा देवयोगे लभिल दृढबली पञ्चपुत्त्र द्विराज्ञी॥

धर्म्मांशे धर्म्मपुत्त्र स्थिरसरलसुधी सत्यवादी स्वभावे
मित्रामित्रे समाने सदयमति सदा पालने सद्विचारे।
दाता गाम्भीर्य्यशाली यमसम समरे शौर्य्यवीर्य्ये प्रतापी
सर्व्वाग्रे जन्मलाभे हइल कुरुकुले पाण्डवश्रेष्ठ राजा॥

वाय्वंशे भीमसेन प्रचुरबल धरे पाण्डवंशे द्वितीय
क्रोधी अश्रान्तयोद्धा पुलकितसमरे मल्लयुद्धे सुदक्ष।
वज्राशी उग्रभाषी विपुलदृढगदा सर्व्वदा युक्त हस्ते
संग्रामे निष्ठुरात्मा कठिनभुजबले भीमरूपी विपक्षे॥

जन्मे इन्द्रेर अंशे त्रिभुवनविजयी अर्जुन श्रेष्ठधन्वा
शस्त्रास्त्रे बाहुयुद्धे अनुपम समरे पाण्डुवंशे तृतीय।

निष्कामो संयतात्मा तुषिल अनलके खाण्डवारण्यदाने
सौजन्ये सौख्यभावे हरि हृद्दल सखा तुष्ट युद्धे पिनाकी ॥
सर्व्वैद्यो स्थापितांशे नकुलसह तथा देवरूपी कनिष्ठ
माद्रीचेत्ते सुरूपी युगयमजसुधी पुत्रजन्मे क्रमेते ।
अक्रोधी पूत आत्मा भयरहित वली तुल्यविक्रान्त युद्धे
एके जाने चिकित्सा विधिमत अपर ज्योतिषे पारदर्शी ॥

अपरत्र च मालिनीच्छन्दसा महादेववर्णनं यथा—

रजतसदृशकाया चारिहस्त त्रिशूली
ढ़ुलु ढुलु तिननेत्रे पञ्चवक्त्रे कि शोभा ।
जटिल भुजगवेशो अग्नि चन्द्रार्द्धभाले
परिवृत कटिदेश व्याघ्रचर्मेर वस्त्रे ॥
तरलगरलयोगे कण्ठ नीलाब्ज आभा
विमलधवलसाजे अङ्गरागे विभूति ।
झलमलगलदेशे अस्थकङ्कालमाला
मृदुविचलितकक्षे बस्त्रभिचार झोला ॥
धक धक धक वह्निज्वाल उद्दीप्तभाले
लक लक लक जिह्वा मस्तके सर्प गर्ज्जे ।
कल कल कल गङ्गा चञ्चला उत्तमाङ्गे
भम भम भम शब्दे वाजिछे शेव शिङ्गा ॥

तथैवैकादशसर्गे मालिनीच्छन्दसा द्रौपदी वर्णनं—

तिलफुलतुलनासा चारुहास्या मृगाक्षी,
कर पदतल ओष्ठे रक्तपद्मेर शोभा ।
वदन रदन देखे हार मुक्तार हारे
कुटिल चिकुरराजी नीलवर्ण सुदीर्घ ॥
कुचयुगगुरुसुभ्रू क्षीणमध्या कृशाङ्गी
जघन उरु(?)नितम्ब स्थूलगम्भीरनाभि ।

उपमित भुजवल्ली वाल पद्मेर नाले
त्रिभुवन मनलोभा मोहिनी सेइ मूर्त्ति ॥ इत्यादि ॥

तदानीं 'कालीघट्टे' वङ्गविख्यातो विद्वद्वृन्दविभूषणं मथितविविध-शास्त्रसागरो वाग्मी साक्षादिव धर्म्मः 'संस्कृतचन्द्रिका'भिध संस्कृत मासिकपत्रिकाप्रतिष्ठापयिता ✓जयचन्द्रसिद्धान्तभूषणमहाशयः प्रायः चत्वारिंशच्छात्रान् स्वयं प्रदायाहारं वासस्थानञ्चातिनिपुण-मध्यापयति स्म विविध-शास्त्रम्। निरहङ्काराणाञ्च विदुषां परस्पर-मालाप परिचयादिकन्तु सुलभमेवेति सिद्धान्तभूषणभुवनमोहनयो-र्मिथः परिचयोऽत्यल्पदिनादेव सञ्जातः।

* संस्कृतभाषायां श्रद्धाया आतिशय्यात् तथैव परस्परालाप-कण्डूतिवशाच्च तयोः परिचयप्रारम्भ एव देवभाषयैव विशेषतः श्लोकेन मिथो भाषणप्रतिभाषणादिकमभवदित्यत्र सिद्धान्तभूषणमहो-दयस्य ( सुत-सुताविषयक ) जिज्ञासोत्तरीभूतो भुवनमोहन-विरचितः श्लोक एव प्रमाण—यस्यायमंशविशेष.—

"कन्ये मदालसा-सन्ध्ये पुत्रौ भूपति-गोष्पती।"

भुवनमोहनः प्रथमतो नानाजनवदनादुपश्रुत्य सिद्धान्तभूषणमहो-दय-पाण्डित्यं स्वयमपि तत्प्रत्यक्षीकृत्य पुत्रयोरध्ययनीयं सर्वमेव भारं सिद्धान्तभूषणपादे समर्पितवान्। तदानीमुभावेव सोदरौ प्रायः पञ्च-दशवार्षिकावास्तुः। स-मनोयोगं सोत्साहञ्च साहित्यादिशास्त्रमहर्निशं समधीत्य कियद्वत्सर, काव्यतीर्थपरीक्षा सप्रशंसमुत्तीर्णो गोष्पतिरिव गोष्पति' प्रतिभाप्राखर्य्यं क्रमशो व्यतानीद्गणितम्।

प्राचीन-नयमनुसृत्य लुप्तप्रायां पुरातननाटकाभिनयशैलीं पुन-रुद्दीपयितुमिव, तत्र तत्र च कलादिनैपुण्यमुद्भाव्य सन्दर्शयितुमिव संस्कृतनाटकाभिनये सर्व्वप्रथममयमेव कृताभिनिवेशो गणाध्यक्षता

---

गोष्पतिमुखादेतदवगतम्।

मापन्नोऽतिदचतया सस्कृताभिनयशिचया शिचितसमाजे सुयशोराशि मुपार्जयत्,—यत्र हि किल प्रायो वदन्ति वैषयिकाः—"संस्कृताभिनयः कीदृशः, सोऽप्यस्त्वे"वेति विस्मयश्चापद्यन्ते। कलिकातासंस्कृत साहित्यपरिषदप्यधुना तत्र प्रमाणम्।

भयहीनेनानेन चिरस्तैरिणा तेजस्विना वाग्मिना यत् साधुतया समबोधि शतसहस्रवाधामपि समतिक्रम्य तदनुष्ठानमकारीत्यत्र सुप्रसिद्धमस्त्येव निदर्शनमनेकम्।

स्वदेशहितैषणा-प्रेषणया व्यालोलहृदयेनानेन सुरेन्द्रनाथ-वन्द्योपाध्याय-कालोप्रसन्नकाव्यविशारदादिकतिपयदेशहितैषिकर्मि सहायेन बहुविध व्यधायि निर्भीकमनुष्ठानं वङ्गविच्छेदसमये राजपुरुषानभिप्रेतमपि कर्त्तव्यधिया। तदानीं यस्यौजस्विन्या वक्तृतया चित्रार्पित इव मन्त्रमुग्ध इव किम्भूतकिमाकार इव समासीत्सचलचाधिको लोकः। सस्कृतभाषयापि बहुकालमनर्गलं वक्तृता प्रदाने विलक्षणैवासीदस्य शक्तिः।

अत एव केनचिदिदानीमाचिप्यते शोकपिहितहृदा—

यो वङ्ग भङ्गसमये निज नाम-धाम-<br>
सार्थक्यमत्र वरधीर-गिरा व्यतानीत्।<br>
देशोन्नतीश्च विविधा' सुविधा व्यधासीत्<br>
हा! गीष्पतिः स वत! यात इतः क्व धीरः?<br>
नान्धस्य पद्मनयनेत्यभिधेव नून<br>
श्रीगीष्पतीति तव नाम कवे! महात्मन्!<br>
चित्रं विचित्रमिह दृष्टमनेककार्य्यं<br>
त्वा स्मारयत्यनिशमङ्ग सखे! त्वदीयम्॥ इति।

अस्य च गुणग्राहिताया निदर्शनमिदमपि तावदालोक्यता "कलिकाता" महानगरे "वाणीविलास"समित्यां तदानीं संस्कृतनाटकाद्यभिनयानुष्ठान सप्रशंसमासीत्। अथैकदा विद्वदलङ्कारमहामहो-

पाध्याय-चन्द्रकान्ततर्कालङ्कारमहोदयविरचित "कौमुदीसुधाकर" नाटकमभिनेतुं तत्र समुत्थापिते प्रस्तावे कुटिलमतिभिः कतिभिश्च प्रत्याख्याते आदरणीयानादरमालोच्य परं दुःखितेन चिरस्वैरिणा गोष्पतिना ता परिहाय समितिं "वीणापाणि" समितिं प्रतिष्ठाप्य तदेव "कौमुदीसुधाकर" नाटकमभिनीय स प्रशंसं प्रभूतानि यशांसि समर्जयता स्वाधीनता गुणग्राहिता परिचय-स्वीयनाट्यचातुर्य्यधैर्य्य-गाम्भीर्य्यादिकं प्रादर्शि।

मतमप्युचितमभिधातुमकुण्ठितेनानेन "हाओडाहितैषी"ति पत्रिका-सम्पादकेन स्वदेशहितसाधन नानावार्त्ताः समालोचयता निर्भीकमालोचितं, तदानीं स्वदेशीयान्दोलनवेलायां राज्ञामपि कार्य्यं साध्वसाधु वेति। कदाचिदत एव राजपुरुषविरुद्धवादसमालोचना-वशतो यथार्थवादी हा। धनेन दण्डितो गोष्पतिः।

अवसन्नप्रायामिव विलोक्य संस्कृतभाषां, समुन्नतये चैतस्याः केषा-ञ्चिन्महात्मनां साहाय्येन समानोत्साह-सहायेन अनेन चात्यल्पकालात् प्रतिष्ठापिता "संस्कृतसाहित्यपरिषत्" कलिकाता राजधान्यामुक्तीता चेति। तत्कीर्त्तिस्तम्भरूपा सेयं संस्कृतसाहित्यपरिषदप्यस्य कर्त्तव्य-पालननिदर्शनं, कलिकाता-भवानीपुरस्थ गोष्पतिभवनादियं परिषत् प्राय सार्द्धक्रोशत्रय-दूरवर्त्तिनी, अथ च प्रत्यहमेव सायमारभ्य यथा नियमं सार्द्धप्रहरमेवैव स्थित्वा परिषत्सम्बन्धीयमेव कार्य्यजातमालो चितमेतेन। वाराणस्यामप्यस्य तथैव दृष्टमस्माभि कर्त्तव्यपालनं त्रिलोचनघट्टतः प्रत्यहं "भारतीसमिति"मेत्य बहुकालं तिष्ठतो गोष्पते।

सर्व्वस्मिन्नेव कर्म्मण्यस्य योग्यतामालोच्य वङ्गीयनिखिलसंस्कृतविद्या लयपरिदर्शनार्थमसौ सर्व्वसम्मत्या नियुक्तः। परिभ्रम्य च नानास्थानं वर्त्तमानामवस्थामालोक्य संस्कृतभाषायाः परं निर्व्वेदमापन्नः एतदुन्नति-विधानार्थं सर्व्वेषैव सुप्रसिद्धपण्डितवर्य्याणां परामर्शक्रमेण बहुविध-

मेव कर्म्म कर्त्तुं चेष्टितवान् किन्तु हन्त। कलिहतकः तत् सोढु नितान्तमसमर्थः किमनर्थमकरोदद्य वङ्गवसुन्धरायाम्।

कायस्थोऽपि च जात्याऽयं "स्वधर्म्मे निधनं श्रेयः परधर्म्मो भयावह" इति भगवद्वाक्ये विश्वस्तो धर्म्मभोरु कायस्थाना क्षत्रियत्वे उपवीत-ग्रहणे च पर प्रतिवादी कायस्थाभिधया मासिकपत्रिकया, विद्वद्-बहुलायाञ्च परिषदि शास्त्रीयविचारेण युक्त्या च चिराचारपद्धत्या कायस्थाना क्षत्रियत्वमतमपास्य तत्राभिमानिनो निर्जित्य विपक्षान् कायस्थ-जातितत्त्वं निर्दोषं निरूपितवानित्यत्र प्रायश एव विदुषामपि न वैमत्यम्। एतस्य पाण्डित्यं संस्कृतभाषाया नैपुण्यमनुसन्धानञ्च 'कायस्थ' पत्रिकया ज्ञायत एव।

अयि भो, प्रिय समुपस्थितसभ्यसङ्घ। यस्यामद्य परिषदि समवेता भवन्तः, एतस्यामपि गीष्पतिः पतिरिव बहुविधमकार्षीदनुष्ठानं, यत् कृते चिरमियं कृतज्ञा ऋणिनो चेति। यस्याञ्चाद्य पाठशालायामिय-मनुष्ठीयते सभा, तस्या अप्यन्यतमः प्रतिष्ठापयिता परमहितैषी गीष्पतिकाव्यतीर्थः।

हा हा। अद्य संस्कृतनिखिलनाव्यकला विकला विलोला विल-पन्ती वावसीदतीव दुर्दैवा निराश्रया नैव जीवतीवेत्याशङ्क्यते, कस्मा-दकस्मादिमं बलात्कारेणेव विधिर्जहारेति किमस्य तत्त्वमतिदुर्बोध-मतात्त्विका वयमतिमन्दमतयो जानीमः॥ बहु दृश्यते हि पुराणादौ दैत्यादिभिरभिभूता वा निगूढाभिनिवेशा वा देवा बृहस्पतिपुरःसराः पशुपतिप्रभृतेरन्तिकामापद्यन्ते कमप्यमोघमुपायमाविष्कर्त्तुम्। समा-विष्कृतोपायाश्च समुद्युञ्जते मिथो मिलित्वा स्वकर्म्मण्यप्रमत्ताः। मन्यामहेऽद्य तथावस्थाः किमप्यतिमहत् साधयितुमभीष्टं, गीष्पति पुरोधाय विबुधाः, सह पशुपतिना सलीलमवनीतले समवतीर्णा-स्तूर्णमन्तर्दधति च क्रमशो हन्त संहृत्य लीलाम्। अत इदानीं भणति—

किं गोष्पतिर्गीष्पतिनाम धृत्वा
सम्प्रेषितो देवगणैर्धरण्याम् ?
कुबोध-दुर्बोध-विबोध-सिद्ध्यै
पशो' पतिं तत् पुरतो विधाय ॥

किं गोष्पतिः पशुपतिश्च भुवं समेत्य
विस्मृत्य देवनिकरान् न दिवं व्रजेताम् ?
कैः' स्मारकैरहह ! शङ्करवत् किलेत्थं
देवा विचिन्त्य बत ! निन्यरिमौ द्युलोकम् ॥

हा हा ! वङ्गवसुन्धरे ! सार्थकनामधेये ! योगार्थमस्य ! तव को ऽद्य हरत्यकस्मात् ? हा हन्त ! शून्य भवति श्रमशस्तोऽङ्कं, भवसि परिभूता परिमूषिता दैवहतकेन ॥—

हा हा ! कया ननु गिरा वसुधे ! प्रबोधो
भावीति भाषणपरोऽपि न तामिहेक्षे ।
किं वा ददामि जगते स्वयमप्रबोधो
बोधं विपत्सु शरणं जगदीश एव ॥

अपरञ्च—मातुलो यस्य गोविन्दः पिता यस्य धनञ्जयः ।
सोऽपि मृत्युवशं प्राप्त' कालो हि दुरतिक्रमः ॥

अपि च मुहुर्मुहुरालोचन-याचनया च मन्दीभवति शोकसन्दोहो मृतजनगुणगणैः विलपनरोदनादिभिश्चेति गोष्पतेर्विरहमत्यन्तमसहमानसुम्मनस्कं कमपि वान्धवसुहृदश्च कस्यचिदाश्वसनमिति श्रूयतामधीयताञ्च ।—

शोकैरधीरमनसो वयमद्य सद्यो
हा हन्त ! चौरशकलैर्वदनाश्रिनीरम् ।
सशोच्य रोदन-रता यदि किं फल स्यात् ?
रच्च स्मृति समनुसृत्य चरित्रमस्य ॥

आत्मा न नश्यति शरीरमदर्शनं स्यात्
शास्त्रे तदेव मरणं यदपीह भूयः।
"नासौ मृतो जगति यस्य यशो मृतोऽपि"
वागित्थमप्यहह! तत् किमु शोकहेतुः? ॥
दूष्यो न कोऽपि दुरदृष्टमिहास्य दूष्यं
शोच्यो न गीष्पतिररे! वयमेव शोच्याः।
हाहा! हतो न स हता वयमेव किंवा
कुर्म्मोऽद्य धर्म्महतकस्य कलेवरेषु? ॥
दुःखं सुखञ्च घटयत्यथ भाललेखा
भावीह यद् भवति तन्न विपर्य्ययोऽस्य।
लम्बोदरः शशिधरो हरिरत्र मानं
यत्र प्रभुर्न च विधिः किमु तत्र जीवः? ॥
एष्यत्यसौ पुनररे! अतशो न शोकै-
र्भू लुण्ठनैः स्व-हननैश्च शरीरघाते।
निश्चस्य किं फलमत समवेत्य सर्व्वे
शम्भोः पदे सुगतिमस्य रुदार्थयन्ताम् ॥

---

## गीष्पतिप्रयाणम्

[ निबन्धकः—श्रीउपेन्द्रनाथसेनगुप्तकाव्यतीर्थः ]

"एकस्य दुःखस्य न यावदन्तं गच्छाम्यहं पारमिवार्णवस्य।
तावद्द्वितीयं समुपस्थित मे च्छिद्रेष्वनर्था बहुलीभवन्ति॥"

पशुपतिनाथमनुपदमेवानुसृतवन्तो गीष्पतिचतुर्धुरीणकाव्यतीर्थ-महोदयाः। उपलभ्यते खलु वाण-सर्व्वस्ते कादम्बरीवृत्तान्ते यदभि-सारिणीं महाश्वेतां शोकाम्बुधौ निमज्ज्य वैशम्पायने चन्द्रलोकमासा-

दिते सौहार्दात् कपिञ्जलोऽपि तमञ्जसानुससार, साम्प्रतं दृश्यते तस्यैव वृत्तान्तस्याभिनवावृत्तिः—विशेषस्तु यदधुना न गन्धर्वनन्दिनी परं वराकी संस्कृतसाहित्यपरिषत्, न वैशम्पायनः परं पशुपतिनाथः, न वा कपिञ्जल. किन्तु महासत्त्वः श्लाघ्यचरितः सार्थकाभिधानः गोष्पतिकल्पो गोष्पतिरिति। आभिजात्यादिबहुगुणभूयिष्ठे कुले लब्धजन्मापि असौ बाल्ये यदाङ्गलविद्यां नाध्यापित', सनातनधर्म्मानुरागप्रवणहृदयोऽस्य पितैव तन्मूलमासीदिति श्रूयते। स किलाङ्गलविद्यानिष्णातोऽपि कुलस्थितिनाशशङ्कया, तद्विद्याविदुषाञ्चाचारभ्रंशादिकं वा समीक्ष्य, पुत्रो यथा गीर्व्वाणवाण्यां लब्धवर्णो भवति तदर्थमेव व्यवसायमवालम्बत, पुत्रोऽपि कालेन पितुर्मनोरथान् सर्व्वथैव सम्पूरयामास, यतो न केवलं तेन समासादिता शास्त्रेषु परा प्रवीणता, परं वैखरीनैपुण्ये च परा प्रतिष्ठा। शैलूषविद्यायान्तु स तथैवोत्कर्षमासादयामास, यदसौ सम्यगर्हति स्म 'अभिनवभरत' इति समाख्यामिति बहूनामेव सुधिया मतम्। न केवल तत्, नासीदय क्षत्रियत्वाभिमानी ब्राह्मण्याधिजिगमिषुर्वा। पर यदि—

> तपः श्रुतञ्च योनिश्च एतद् ब्राह्मण्यकारणम्।
> तपः श्रुताभ्यां यो हीनो जात्याब्राह्मण एव सः॥"

इत्यसप्रतिपक्षकं ब्राह्मणलक्षणं भवति, तर्हि तेन वयवयवस्य द्विजत्वस्य आद्यमवयवद्वयमधिगतमभूदिति नास्ति सन्देहस्यावसरोऽपि। न केवलं पाण्डित्यं पर प्राचीनेषु सायणमाधवादिषु सम्यगुपलब्धा अर्व्वाचीनेषु च इदानीन्तनेषु विबुधेषु क्वचिदवलोकिता ये लोकप्रणयनगुणास्तेऽपि तस्मिन् नितरामेव विकाशमलभन्त। यतस्तदीययौवनदशायान्तदानीन्तनराजप्रतिनिधिकृतं वङ्गाङ्गच्छेदमुपलक्ष्यीकृत्य प्रावर्त्तत यो महान् राजनीतिकसमारम्भानुकूलवैदेशिकशिल्पवर्जनव्यवसायस्तस्मिन्नपि स तेजोगर्भवैखरीमुखेन तद्व्यवसायस्य यौक्तिकतां जनपदानां पुरतः समुपपाद्य; "हाओडाहितैषि"नाम स्वसम्पादित-

पत्रेण स्वकीयं हृदयङ्गतं सर्व्वत्र प्रचार्य्य च महान्तं तमुद्यमं तथैव सफलतां निनाय यत्, ये तावत् तत्पाण्डित्यानभिज्ञास्तेऽपि तस्य स्वदेशानुरागमुग्धाः सम्रद्धाः विस्मिताश्च बभूवुः। साम्प्रतिके युगे वङ्ग-विषयेऽभिनयेन ये तावत् संस्कृतनाटकानां सौन्दर्य्यं महत्त्वञ्च प्रदर्श्य लोकशिक्षाया उपायान्तरमाविर्भावितवन्तः, तेषु महामहोपाध्याय-विबुधावतंसाः श्रीमन्तो हरप्रसादशास्त्रिपादा गीष्पतिकाव्यतीर्थ-महाभागाश्चाग्र्यं स्थानमर्हन्ति। शास्त्रिपादैः प्रोत्साहनेन छात्रगोष्ठीषु अभिनयपद्धतिः प्रवर्त्तिता, गीष्पतिकाव्यतीर्थेन तु नटपदमधिकृत्या-पामरपण्डितमस्थलीषु। श्रुतमस्माभिस्तन्मुखतएव यत्, स्मरणीय-चरिता वैद्यकुलालङ्कारभूताः कविराजोपनामका नृत्यगोपालकविरत्न-महोदया एवाभिनयचातुर्य्यविज्ञाने तस्याचार्य्यपदमधिचक्रुरिति। वङ्गेषु, वाराणसी-कान्पुर प्रभृतिषु च संस्कृतसाहित्यपरिषदो या ख्यातिः प्रसृता वर्त्तते, गीष्पतिकाव्यतीर्थमहोदयस्याध्यक्षेण सम्पा-दिताः संस्कृतनाटकानामभिनयाः, तस्यैव शिष्यमण्डलस्याभिनय-नैपुण्यञ्च तस्याः कारणान्तरम्। अनेन खलु महात्मना नटविद्येति विबुधैरिदानीन्तनैरुपेक्षिता नाटकाना प्रयोगकला तथैव समुपासिता, यन्मृतप्राया सेदानीं पुनः सञ्जीवितेव सर्व्वजननयनमनोरञ्जिका जातेति सर्व्वेषां सुविदितमेव। यः खलु नाट्यवेदो भरतेन "चतुर्व्वेदाङ्ग-सम्भव." इत्युक्त्वा सम्यगर्च्चितः, यः पुन स्वयं कालिदासेन "कान्त-श्चाक्षुषक्रतु"रिति वदता समाराधितः सोऽसौ महात्मा तस्य वेदस्य परमाचार्य्य आसीत्; तस्य क्रतोश्च स एक एव होता, अध्वर्य्युः, उद्गाता च समभवत्। किं बहुना सौकर्य्यार्थमभिनयस्याभिनेयानां नाटकानामङ्कगर्भाङ्कादिषु कालोपयोगिनं सामाजिकरुचिसम्मतं च विभागं नैपुण्येन परिकल्पयता तेन तस्य क्रतोः शामित्रकर्म्मापि सुष्ठु निष्पादितमिति ब्रूमः। हन्त। इदानीमपि स्मर्य्यते अभिनयशिक्षा-दानैकमनसस्तस्य चातुर्य्यं, स्मर्य्यते स, न केवल यस्य वचोभङ्गिरेव

समभूद्रसबोधायाल परं नवरसोद्बोधनेन सर्व्वव्याख्यातिशायिनी आसीत्।

किन्तु क्व गतः स मनस्विप्रवरः, यमन्तरेण न केवलं दुहितेव तस्य चिरपालिता परिषत् विषादातिशयमायाता खिद्यते, अपि तु सार्व्व-भौमिकविदग्धमण्डली शोकानलपरिदग्धा जाता। स किल परिषदः आजन्मबान्धव आसीत्, अस्याः समुन्नतये तेन परःसहस्रा यत्नाः समवलम्बिताः। अद्यतनी शुभोदर्का सश्रीका च परिषत् तादृशाना-मेव महोदारचरितानां प्रीतिप्रयत्नशतस्य परिपाक एवेत्यत्र निरव-काशानि सर्व्वसंशयपदानीति मन्यामहे वयम्। सन्ति सहस्रशः परिषत्प्रणयिनः परं सोमशुक्लाविव गोष्पतिपशुपती विना सर्वे एव ते दिवाकाशस्थितास्तारका इव मलिना न तथा शोभन्ते, यथा परित-स्तावशोभन्त पुरा। हतभागधेया परिषत्—या खलु स्वल्पे एव वयसि एतयोराकालिकवियोगदुःखं सहते, परन्तौ विहायैव लोकमिमं न विस्मृतवन्तौ नितान्त-स्नेहभाजनं ताम्,—अपि तु सर्वदैव परलोका-दपि एतद्बान्धवानां सहायतामेष्यत इति निःसंशयमेव। भवतु तत् यद् विधातुर्मनसि वर्त्तते, नास्ति खलु निष्करुणस्य कालस्य क्षतेः क्वापि प्रतिक्षतिः। अमरावत्येव गोष्पतेर्योग्या वसतिः, तद् यदि स स्वकृतसुकृतेन तामेवास्पदं लब्धवान् तर्हि अविधेयेऽपि शोकविषये मूढचेतसामस्माकं मरणधर्म्मणा किमस्ति नेत्रसलिलविधौततदीय-स्मरणानुभवमन्तरेणाँविधेयान्तरम्? हन्त, नास्ति किमपि, तदश्रु-निवाप एव विसर्जनीयस्तस्मै बान्धवजनानां, मन्ये सुहृदनुग्राहकाणां सहृदयानां, स्वर्गतानाञ्च तेषां तदश्रूपायनं नोपेक्षणीयं भविष्यतीति।

---

# स्वर्गं गतो गोष्पतिः

[ निबन्धकः—श्रीसुरेन्द्रमोहनवेदान्तशास्त्रिपञ्चतीर्थः ]

बाल्यात् प्रभृति संस्कृतसाहित्यपाठिना मुखाद् गोष्पतिकाव्यतीर्थस्य संज्ञा श्राव श्राव यदा कैशोरे तत्प्रणीतं "परीक्षादर्पण"मिति पुस्तकं साग्रहमस्माभिः पठितन्तदा विज्ञातन्तस्य संस्कृतकाव्यकदम्बेषु कृतित्वमवगता च सत्साहित्येषु सम्प्रीतिः। परीक्षादर्पणं हि नाम बहूनां विश्रुतयशसां संस्कृतकाव्यनाटकादीनामालोचनात्मकमिति मनोहरमुपादेयञ्च पुस्तकं संस्कृतपाठार्थिना कृते विरचितम्।

गोष्पतिरिति तस्य नामतः, सत्काव्यादीनामालोचनात्मककर्म्मतश्च स बुधो जात्या नूनं ब्राह्मणो भवेदितीयमासीन्मम बलवती तदा धारणा। ततश्चातीतेषु कतिषु वर्षेषु तस्य "कायस्थ" इति मासिकपत्रेण सम्बन्धोऽनेकेषां सन्देहवतां सन्देहं निराकरोत्। शास्त्रानुमतं हि कायस्थपत्रिकामतविवरणं कर्णगतं कुर्व्वतः सानुरागन्तत् पठतश्च मम संवर्द्धितः परिचालकं प्रत्यनुरागस्तेन सह दर्शनालापवासना च दृढीभूता सञ्जाता।

अथैकदा पूर्ववङ्गेषु कस्यचिदाढ्यस्य गृहे श्राद्धसभायां तत्रभवता महामहोपाध्यायेन श्रीमता दुर्गाचरणसांख्यवेदान्ततीर्थेन सार्कं संलापप्रसङ्गतस्तस्यैव भवानीपुरस्थितस्य भवनस्य सविधे गोष्पतिकाव्यतीर्थस्य भवनमिति ज्ञात्वा मया विगते १३३३ वङ्गाब्दे कार्त्तिकान्तां गतेन दृष्टः स कायस्थकुलतिलको गोष्पतिः पृष्टश्च बहुषु विषयेषु।

कस्यचिदपरिचितस्य नामश्रवणादनन्तरं तद्विषयिणी या जायते बुद्धिः सा नैव स्मृतिर्नाप्यनुमितिरपि तु सा रूपहीना भाषामयी

कल्पना । मम सा कल्पनासुन्दरी कलिकातावासिनमपि विलासितया विहीनं, धनिनमपि निर्धनवदवस्थितं विद्वांसमपि गर्वरहितमभूषण-मपि सरलताभूषणमण्डित पण्डितन्त निरीक्ष्य नितरा विमनायमानेव ह्रियमाणेव जाता, पुष्कलं प्रमोदमप्याप्ता ।

संस्कृतसाहित्यपरिषदा सह तस्य सम्बन्धो विदितचर एवासी-न्मम । प्र॰कृतः स तस्याः परिषदो विवरणमुद्घाटयन् तां प्रति महतीं प्रीतिं प्रकटितवान् । परीक्षादर्पणस्य हि पुस्तकस्य पुन-र्वर्द्धितकलेवरं नवीनसंस्करणं प्रयोजनमिति मया विज्ञापितावसरः स सत्वरमेव तद् विधास्यतीति साग्रहं मतमदर्शयत् । न ज्ञायते तावत्, तत् पुस्तकमधुना यन्त्रस्थं नवेति ।

कायस्थपत्रिका सुपरिचालिताऽपि कथमधुना प्रचाररहितेति जिज्ञासितेन तेन सनिर्वेदमुच्यते स्म कार्य्य-कारणपरम्परया सा बहु-जन-नन्दिताऽपि पत्रिका विरतप्रकाशा । कायस्थानां क्षत्रियत्व-प्रतिपादनानन्तरोपवीतग्रहणविधौ नासीत्तस्य सम्मतिः श्रद्धा च । ईश-प्रसादात्तस्य पवित्र आत्मा नित्यानन्दमय धाम गतश्चिराय प्रमोद-माप्नुयादिति नः प्रार्थनम् ।

---

स्वर्गतगोष्पतिकाव्यतीर्थस्य देहात्ययात्

## शोकोच्छ्वासः

[ निबन्धकः—श्रीपुलिनविहारी दासगुप्तः वि एल् ]

हा तीव्रवार्त्ता हृदयोपहन्त्री
ग्रन्थिच्युता'गोष्पति-पुष्प-माला ।
शुष्का विशीर्णा नियति-प्रभावात्
कृतान्तचौरेण विमर्दिता च ॥ १

क्वासौ गतो हन्त सुधीर्गरीयान्
विहाय सर्व्वान् जनादि-वर्गान् ।
शोकाम्बुधौ बन्धुगणान् निमज्ज्य
सोऽन्तर्हितो मर्त्य-भुवश्च तूर्णम् ॥ २

आसीद्भवान् बुद्धिमताम्भवीणः
विद्वद्वरेण्यः सुगुणकसद्म ।
शान्त. सुशीलो मृदुमिष्टभाषी
ज्ञानैक-सम्पद् यशसां सुधाम ॥ ३

या देवभाषा जगतीह पूज्या
सा तेऽभवत् प्राणसमा सदैव ।
तद्वृद्धिकाम' कृतवान् प्रचेष्टाम्
नानाविधेनैव सुकल्पनेन ॥ ४

गीर्व्वाणवाणीमधिगन्तुकामा·
श्छात्रा यशस्ते सततं स्तुवन्ति ।
त्वत्ग्रन्थपाठान्नितरां प्रहृष्टा
धन्यीकृतान् स्वान् गणयन्ति सर्व्वे ॥ ५

या देववाणी परिषत्कृतिस्ते
सा मुग्धभावा तव विप्रयोगात् ।
त्वत्सङ्ग शून्याः परिषत्सदस्याः
श्रिया विहीना मलिनीभवन्ति ॥ ६

साहित्यसंसत् ! तव भागधेयम्
धिक् ते गुणालि बहुसुप्रथाश्च ।
जातासि यस्माद् हृतमुख्यरत्ना
शोच्या दशा ते करुणा वृणोति ॥ ७

बन्धुप्रेम्णा पशुपतिसुहृत् तद्वियोगासहिष्णुः
क्षिप्रं यातो मिलितुमधुना तेन सार्द्धं द्युलोकम् ।
त्यक्त्वा तापत्रितयजडितं मर्त्यलोकं सुकीर्त्तिः
स्वश्चच्छान्तिं व्रजतु नियतं नित्यधामाधितिष्ठन् ॥ ८

---

## परिषद्दुर्द्दिनम्

[ निबन्धकः—श्रीइन्दीवरकृष्णविद्याभूषण. ]

सत्यं खलु संस्कृतसाहित्यपरिषदोऽद्य दुर्दिनमुपस्थितम्, यत् परिषदेकतरसम्पादकोऽसामान्यप्रतिभोद्भासितो दयादाक्षिण्यादिगुणाधारः पशुपतिनाथशास्त्रिमहाशयः सहसा कालकवले विलीनोऽभवत् । तदीयाकृतिसौन्दर्य्यं सस्मितवदनं सुमिष्टवागमृतञ्च स्मृत्वा के न मज्जन्ति दुःखमहोदधौ नियतम् ? तत्परलोकप्रयाणानन्तरमेव परिषदन्यतरसम्पादकः संस्कृतसाहित्यशास्त्रपारदृश्वा काव्यतीर्थोपाधिको गोष्पतिरायचतुर्धुरीणोऽपि हा । कालकवले विलीनवान् । उक्तमहोदयस्य सदसि वाक्पटुता सदाचारपरायणता नाटकाभिनयकुशलता च प्रकाममासीत्, तिग्मधिषणो वाग्मितापराजितप्रतिपक्षव्रातोऽसावुत्पथगामिनः शास्त्रविगर्हिताचारग्रहणदृढोद्यमान् मानवान् सत्पथमानिनाय बुद्धिचातुर्य्येण । बहुलशास्त्रीययुक्तितर्कोपन्यासेन क्षत्रियत्वनिरसनपूर्वकं कायस्थजातेर्म्मौलिकत्वञ्च प्रदर्शयामास । वङ्गदेशीया वाराणसीस्थिताश्च प्रख्यातनामानः सुधियोऽस्य मतसमर्थनपरा बभूवुः । अशेषग्रन्थगवेषणाजन्यपाण्डित्यमसाधारणबुद्धिमत्ता च तत्प्रकाशितकायस्थजातितत्त्वे विराजतेऽभीक्ष्णम् । अस्य प्रत्युत्पन्नमतिता, सदसि निर्भीकवाग्मिता, साहित्यानुरागिता, धर्म्मनिष्ठता चाद्यापि देदीप्यते सर्वेषां मानसपटे । अहो !

संस्कृतसाहित्यपरिषदोऽतीव दुर्भाग्यं यदीदृशः सर्वगुणोपेत उद्दामोद्यमवद्हृदयः सम्पादकसुधाकर, सपदि सर्व्वानन्धतमसे निपात्य हा ! अस्तमितोऽभवत् । कायस्थकुलसम्भूतोऽपि स धर्म्ममर्य्यादा शास्त्र-गौरवञ्च प्राणव्ययेनापि रक्षितु यत्नशीलो बभूव । तद्वियोगेन वयमिदं मन्महे साम्प्रतम्—

"यदा यदा सतां हानिर्व्वेदमार्गानुसारिणाम् ।
तदा तदा कलेर्वृद्धिरनुमेया विचक्षणैः ॥"
वाग्मितादिप्रभावेण यो जिगाय दरच्युतः ।
धर्म्मविद्वेषिणो लोकान् धर्म्मप्राणो हि सन्ततम् ॥
कायस्थकुलपाथोधिसम्भूतेन्दुर्निमीलयन् ।
सुधीहृत्कुमुदानि द्राक् क्वगतो हा ! स गोष्पतिः ॥

---

## शोकोच्छ्वासः

[ निबन्धक —विद्याभास्करः श्रीहरिदत्तशास्त्री व्याकरणतीर्थः ]

काले पशुपतिनाथे पशुसङ्घे नाथता याते ।
कालो विरहविनोदं कथमेषा दुर्गया कर्त्री ॥ १
न मया निजनेत्रपात्रता गमित ते लपनं शशिप्रभम् ।
गुणगौरवमीदृगद्भुतं त्वरितो यातवति त्वयि श्रुतम् ॥ २
यदि मे परिषत्प्रकाशका धृतदेहे त्वयि तद्वदन्ति चेत् ।
न कथं जन एष दर्शनान्निजनेत्रे सफले व्यधास्यत ॥ ३
तव शोकविभावसुर्ज्वलन् हृदि यावन्न शमं समश्नुते ।
बत गोष्पतिरप्यसौ त्वया निजसम्राड् कृत आः कठोरता ॥४
मृदुशीलमुपश्रुतं जनैः कथमेतद्विपरीततां गतम् ।
जनतासुकृतक्षयोऽथवा विधिकालावपि नः पराश्रतः ॥५

अधुना कलहायमानयोर्मम नेत्रश्रवसोर्हृते त्वया ।
वद कः कलहं शमं नयेदभियोगे तव प्राड्विवाकता ॥ ६
अधुना नयनाम्बुभिर्वयं निवपामो भवते जलाञ्जलिम् ।
शिरसा विनतेन चासकृत्प्रणिपत्येश्वरमेतदर्थ्यते ॥ ७
भगवन् ! सुरगौरियं त्वया भृशदीना दयया निभाल्यताम् ।
परिषत् परिरक्ष्यतामिय लभतान्तावपि चोत्तमां गतिम् ॥ ८

---

## परेतस्मृतिः

[ निबन्धकः—श्रीयोगेन्द्रमोहनविद्यारत्नः ]

नितरां वरीवृत्यतेतमामपरिवर्त्तनीयरीतिर्नियतिरेवातिकठोरा जीवानां नित्यकृत्येषु नियतमप्रतिभटमात्मानं प्रकटयन्ती साटोपं महाजनाचारपरम्परामङ्गीकृत्य प्रवर्त्तमानैः पुण्यकर्म्मभिरनास्वादिताकालिक-स्वजनविरहजदुःखलेशैरपरिचिताधिव्याधिविक्रमैः क्रमशः समुन्नतिसोपानमारोहद्भिर्विधिशासनैरिव सम्भृतात्मभरधिगताभिलषितानुरूप- पुत्रकलत्रादिभिर्भगवदनुग्रहस्टहीतसमग्रवस्तुनिवहैः प्राप्तं प्राप्तव्यं दृष्टं द्रष्टव्यं श्रुतं श्रोतव्यमास्वादितमास्वादितव्यञ्चेत्यादिक्रमेणात्मानं कृतार्थंमन्यमानैः, दानेन करस्य, तीर्थपर्य्यटनेन चरणस्य, सत्यप्रियभाषणेन रसनायाः, भगवद्विभूतिसन्दर्शनेन नयनस्य, तस्य माहात्म्यकीर्त्तनश्रवणेन च श्रवणस्य, वेदाद्यखिलशास्त्रपाठेन मनसः, संयमाचरणेन चात्मनः कृतार्थतामवितथामविसंवादितामाकलयद्भिः कैश्चन जनगणैः सन्ततं संस्तूयमाना ; दुरदृष्टदुर्विलसितेन च इतो विपरीतभावनिवहेन निरन्तरं पीड्यमानैश्च कैश्चिद्दुराग्रहैरसकृद्विगीयमाना, अन्यैश्च कैश्चिन्नास्तिकवर्य्यैरैहिकमात्रमर्थं केवलमङ्गीकुर्व्वाणैरनङ्गीक्रियमाणा परिवर्त्तनप्रवणायामस्यां धरायां चिराय । विलसनेन

च यस्याः धरणिः कुत्रचित् हसति सौभाग्यवती रमणीव, कुत्रचित् क्रन्दति पुत्रशोकातुरा जननीव, कुत्रचित् विराजते शस्यश्यामला प्रगाढतारुण्या श्यामेव ।

अयि मनःकल्पितवनितेव दर्शनपथमतीत्य वर्त्तमाने ! वाग्वनितेव अर्थमात्रपरोक्षिते ! नियते । ज्ञातं यत्ते मनसि स्थितम् ! अपरमपि यदि किञ्चिदवशिष्यते ते कृत्यवस्तुषु ईदृक्, क्रियतामवाधमविचारितम् । वयमत्र तत्रभवत्या ईदृगसकृदाचरणेन कुलिश-कठोरमानसाः प्रमाणिताः प्राणैरनुत्सृष्टाः । एकमात्रपुत्त्रायाः मातुरङ्कात् प्राणाधिक पुत्त्रं, स्तन्यमात्रशरणस्य सद्यःप्रसूतापत्यस्य निपीयमानस्तनीं जननीं, पतिकण्ठलग्ना बालामबला विहाय तत् पतिञ्च शमनालयं प्रेरयन्ती न मनागपि खिद्यसे न वा लज्जसे । ईदृश्येव ते निर्द्दया शाश्वती स्थितिः सततं परिदृश्यमाना जनानवधानपरान् विदधानापि तैरधिक्षिप्यतेऽनारतं निर्द्दयम् । सदृशमेवैतत्ते कालाकालपात्रापात्रविवेकमूढायाः । अथवा अलं दुर्विनीतां दुरधिगम्यां भवतीमधिक्षिप्य ।

येषामकालमहाप्रयाणमस्मानीदृश पर्य्याकुलीकुर्व्वाण प्रतिपदमेव समन्तादपरिपूरणीयामभावपरम्परामनतिक्रमणीया प्रतिवोधयच्चिराय संस्कृतसाहित्यपरिषत्-संक्रान्तं तथा शिक्षाविभागविषयकञ्च यत्-किञ्चित् कार्य्यमन्तरा स्मर्य्यमाणमस्माक मर्म्मसु कीलायतेतमाम्, अन्वर्थाभिधेयानामशेषसाधारणीकृतिकृत्यसम्पृक्तात्मनां महात्मनां कार्य्यसंसाधनपटुताचमत्कृतजनगणाना स्वधर्म्मैकनिष्ठाना विद्वद्वर्य्याणां परमार्थपरताप्रवणाना तथा सत्यप्रियभाषिणां तेषाममरत्वमधिगतानां गोष्पतिकाव्यतीर्थमहोदयानामयमकालसमाधिर्न्न केवलं संस्कृतसाहित्यपरिषद न वा तदीय विनयार्ज्जवादिगुणप्रारहृश्वाना मस्माकम् अपि तु संस्कृतभाषारसिकैरध्युषितानामार्य्यभावमङ्गीकृत्य स्वगौरवं प्रकाशयता सर्व्वेषामेव प्रदेशानामसनपनेयो

विपत्पातः शोकस्थानश्चेति यथार्थमेव विस्तरेणानुभूतमस्माभिः। प्राच्यप्रतीच्याशेषशास्त्रानुशीलननिर्म्मलमतीनामेतेषां सर्व्वतोमुखी सर्व्वजनातिशायिनी च प्रतिभा प्रतिभाति प्रतिकृत्येष्वेव स्वकीयेष्वारब्धेषु समन्तात् सुधीवर्य्यैः परिज्ञायमाना। सर्व्वजनविदितां तामधिकृत्य न तावद् वक्तव्यमस्ति मे। मया तु केवलं तेषां प्राच्यभावयथार्थसौन्दर्य्यावर्ज्जितचित्तानामापातरम्यप्रतीच्यभावकवलितेऽस्मिन् संसारे अस्मदाचारविरोधिनीं तां तामवस्थां निराकृत्य सकलमङ्गलालयं प्राच्यभावं शास्त्रसम्मतिमङ्गीकृत्य विविधोपायेन संरक्षितुं प्राणानपि पणीकृत्य कीदृक् सुमहान् प्रयत्न आसीत् तद्दिङ्मात्रमुदाह्रियते।

सुविदितं नामैतत् तत्रभवतां सर्व्वेषामेव सुधीसमाजानामन्येषाञ्च जनगणानां यत्, विश्वविश्रुतेन कलिकाताविश्वविद्यालयेन परिचालितेषु विद्यालयनिवहेषु अवश्यपाठ्यत्वेनादितो निर्व्वाचिता संस्कृतभाषा, यस्यां हि भाषायामुपनिबद्धान्यस्माकं निखिलधर्म्मकृत्यानि, येषाञ्च गौरवेण भारतवर्षमिदं सर्व्वानेव देशानुपर्य्युपरि देदीप्यतेतमां, तानि ज्योतिषदर्शनायुर्व्वेदपुराणेतिहासकाव्यनाटकादीनि च यया भाषया ग्रथितानि सा माधुर्य्यमयी देवभाषा अस्माकमद्वितीयगौरवभूमिरद्य दुर्भाग्यतोऽस्माकं विश्वविद्यालयाधीश्वरवर्य्याणां व्यवस्थादोषेण स्वेच्छापाठ्यत्वदशामधिगता प्रायेण प्रत्यादिश्यमाना विमृष्यकारिणामैहिकमात्रार्थान्वेषिविद्वेषिणामार्य्यभावायत्तचित्तानां निरतिशयं दुःखमुत्पादयन्ती धिग्धिग्विलापपराणा, कलिकालमाहात्म्यं कीर्त्तयतीति श्रुत्वैव तां सकलमङ्गलालयभूतामवश्यपाठ्यत्वेन संरक्षितुमिमे महात्मानो गोष्पतिकाव्यतीर्थाः कीदृग्यत्नपरायणा आसन् तन्मया तैः सह तत्कार्य्येष्वेव प्रतिनियतं प्रवर्त्तमानेन बहुधा प्रत्यक्षीकृतम्। यथा ते संस्कृतसाहित्यपरिषत्संस्थापनातः तदुन्नतये स्वकं स्वास्थ्यमप्यविगणय्य यतितवन्तः तथा अस्या अपि कालमाहात्म्यवशेन प्रत्यादिश्यमानायाः भाषायाः संरक्षणविधौ बद्धपरिकराः अस्याः कृते कृतश्रमाः

अर्थं समयं किमधिकं परिश्रेषे नूनमकाले स्वदेहमपि व्ययित वन्तः ।

जातोयधर्म्मसंरक्षणाय बद्धपरिकराणा तेषामेवोद्योगिना काव्यतीर्थ-महोदयानामुद्योगेनास्या कलिकातामहानगर्य्याम् अविवेचकतावशो-भूत विश्वविद्यालयानुष्ठितकार्य्यस्य प्रतिवादसभा आदौ १३३२ वङ्गा-ब्दोयचैत्रमासि संस्कृतसाहित्यपरिषद्भवने सञ्जाता। तत्र च सम्मिलिता बहवः प्रतिनिधयो महामहोपाध्याया भूस्वामिनो धनिन. केवल-पाश्चात्त्यशिक्षिताः प्राच्यपाश्चात्त्यशिक्षिता' अन्ये च बहवो विश्वविद्या-लयप्रस्तावस्य सुमहान्तं प्रतिवाद कुर्व्वाणा, नवनीतवर्ज्जितं तक्रमिव दुरायति परिवर्त्तनमिद सर्व्वानेव जनगणान् प्रतिवोधितवन्तः। अनेनैकेनैवाधिवेशनेन सवादपत्रनिवहेषु प्रकाशमुपनीतेन प्रतिदेशमस्य तुमुलमान्दोलनमभवत्। मन्ये मर्त्यलोके एतत्कृते या या चेष्टा विधेया आसीत् तां ता सर्व्वा विधाय दुष्टकौरवव्यर्थीकृतकोर्त्तिः पार्थ इवाविचारयतेरुपद्रुतो भारतकीर्त्तिविनाशार्त्तो देवभाषासंरक्षणाय पक्षपातविरूपाक्ष देवदेवं विरूपाक्षमेव शरणमाश्रितवन्तः। अहो! विजयतेतमा दुरदृष्टमस्माकम्।

---

## गोष्पतेरिष्टलाभः

[ निबन्धकः—"धनदासः" ]

पशुपतिशास्त्रिणमन्वसरत्तत्रभवान् गोष्पतिकाव्यतीर्थः। न जाने कस्तावदेतावप्यनुसरेदितः परं पारिषदानाम्। त्वं च एतदेवा-श्वासस्थानं प्राश्नानिकाना यद् येषामभावः क्षतिविशेषमुपजनयति, त एवादो संसरन्तीति लोकप्रवाद इति। परिषदः कार्य्यनिर्व्वाहक-समितौ तथाविधः कश्चिदिदानीमस्ति नवा यस्याभावः क्षतिविशेष-

मेवमेव जनयेद् यथानयोर्गोष्पतिपशुपत्योरभावोऽजनयदिति। यमाश्रिताः पारिषदाः सुदुष्पूरमपीमं पशुपतिप्रयाणशोकमन्वसहन्त, प्रश्रितः सोऽपि। स्मरामि हन्त तान् दिवसान् येष्वत्रभवता गोष्पतिकाव्यतीर्थेनावष्टब्धा संस्कृतसाहित्यपरिषत्, मेरुणा धरणीव निष्कम्पा प्रावर्त्तत। परःसहस्रतामुपाश्रितानां तद्गुणानां किमिवालोचनमस्मादृशेनाल्पदृशा कर्त्तुं शक्यते। तथाप्युच्छ्वसिता गोष्पतिप्रीतिस्त्वपत्रयति प्रबलतमा विद्वन्मात्रसाध्येऽस्मिन् कर्म्मण्यज्ञतममप्यस्मादृशम्। प्राचीनप्रसिद्धभूस्वामिवंशावतंसोऽयं कायस्थसमाजानामादर्श एवासीदित्यत्र नास्ति नास्तिकानामपि प्रस्तावो विमत्यवसरस्य। एतेषां जनोन्मादकरी वाग्मिता, तिग्मता च तेजोविशेषस्य, प्रणयिता च परार्त्तिप्रहाणविधौ न केषामप्यसाम्मुख्यमचिंतारकाणामादधतीति। नाटकाद्यभिनयकलासूपदेशपाटवमत्यद्भुतमिव प्रत्यक्षीकृतमस्माभिस्तत्र तत्रावसरे। स्वयन्तु शैलूषतावसरे रसविशेषं मूर्त्तिमन्तमिव साक्षाद्भावयन्नभावनीयां निपुणतामाविरकरोत्। भक्तिरसाश्रिते अभिनये उच्चारणस्य गद्गदता कण्ठस्वरस्यार्द्रता नयनयोः स्तिमितता उपास्य प्रत्येकायत्वं चेत्येतानि न वास्तवादोषदपि हीयमानान्यस्माभिरुपलक्षितानि। नहि साधनविहीनानामेवं भावोद्गमः समासहस्रेणापि प्रभवेदितिसुव्यक्तं वक्तुमर्हामः। तत्रापि नैकभवीयेनैतद्भवीयेन वा साधनेन प्रचुरोत्कर्षं गतेनापि नेदं सम्भाव्यते सम्भावितेतराणाम्। अयमेको भक्तिरसः समस्यते भवतां पुरतः परतो वीरादिरसानां दृष्टान्ततया नैपुण्यग्रहणाय। दृश्यते खलु प्रायशो बहुवत्सराणामनालोचनेन वा जन्मगतेन केनचिदचिन्तनीयप्रभावेण कारणेन वा, बहुकालोचिताङ्गलभाषोच्चारणजातजडिम्ना वा ब्राह्मणेतराणां वर्णसमवायानां न सम्यक् परिस्फुरति भारती देवीनामधेया मुखविवरेभ्यः। गोष्पतिकाव्यतीर्थानान्तु वाणी एवमनर्गलोच्चारिता जडिमशून्या स्पष्टप्रतिभासा चासीद् यथा दूरमास्तां तावत् साधारणब्राह्मणानां कथा, अनेकेषां ब्राह्मणपण्डितकुलोत्पन्नानां

स्वयञ्च पण्डितवर्य्याणामपि मुखतस्तथोच्चारणपद्धतिरत्रा नैवास्माभि-
रितः पूर्व्वमुपलब्धा। आचारनिष्ठया वेशभूषादिसंसाधनेन प्रविशुद्धवचन
विन्यासनैपुण्येन च तस्य द्विजत्वमनेकेषामेवापरिचितानामासीत् भ्रम-
सम्पत्तौ प्रतिमन्तिमदित्यत्र प्रायो बहवः प्रमाणपदमध्यासते। किं बहुना
मुहुरेवास्य शूद्रत्वमुद्रिच्यमानमपि मानसे भ्रलसमन्यरमभवत् परि-
चितानामपि तदमलशुद्धभावादिसंदर्शनेन। वस्तुत एव तत्रायज्ञोपवीतं
द्विजत्वमग्रमेवास्माभिरभिलक्ष्यते। न जानीमः कोदृशेनाशुभकर्म्म
विपाकेनासदृशमपि द्विजेतरत्वमेतेषां जन्मना समजनीति।
कालप्रभावादनेक एवेदानीं विशुद्धब्राह्मणकुलोत्पन्ना अपि, स्वयं
पण्डितम्मन्या अपि, जनसमाजे च तथात्वेनात्मान प्रतिपादयन्तो-
ऽपि प्रातर्म्मध्याह्नसन्ध्ययोः सम्मानातिरेकमेकत सरचन्त इव,
द्वितीयतश्च प्रातस्तथाविधभोज्यादिपदार्थानामनुपस्थित्या कथमपि
ते सन्ध्ये समुपासीना अपि सायं सन्ध्यामन्धकारकारित्वेनेव
रोषात्तथा नाद्रियन्ते। ततस्तत्र काले अपालयन्तोऽपि ता यथेच्छ-
मिच्छन्ति पानादिकं निषिद्धमपि यथर्हि प्राप्तमिति। किन्तु सन्तत-
मन्तिकमुपगता अप्यनुसन्धानपरायणया दृशा चिरं विचिन्वन्तोऽप्येव-
मप्यास्वनुष्टमनिष्टानुबन्धिव्यवहारप्रबन्धमत्यल्पेऽपि न वयमाविष्कर्त्तु-
मशक्नमेति। किं बहुना ताम्बूलमप्यकृतसायसन्ध्योपासनेनानेनासी-
काङ्गीकृतमित्यप्यसकृदीक्षणपदमुपगतमस्माकम्। न केवलमेक एवाय-
मेतद्वंशे स्वाचारनिष्ठो ज्येष्ठाग्रजावाप्यस्य तथैवाचारपरायणाः पर-
वर्त्तिनोऽपि पुत्रपौत्रादीन् स्वानुष्ठानपूते पथि प्रथितानकार्षुः। ईश्वर-
निष्ठा च प्रतिष्ठितपदा सदैवात्र मित्रतामुपगच्छन्ती स्वच्छन्दमभि-
वर्द्धते, सिद्धाधिकारा चैन परिवर्ज्य नार्थ्यान्तरमपि प्रतिपत्तुमिच्छति।
अनयैवेश्वरनिष्ठया कवचरूपया सन्दंशितोऽयमयतोऽपि न प्राकृत-
जनेभ्यो बिभेति, न वा केषामपि साहायकमात्मप्रतिष्ठायै बहुमतमुदै-
क्षत। उदारता च परोत्कर्षवती सहर्षमत्रैव वासमुपकल्प्य स्वल्पमपि

वियोगदुःख नान्वभवत्। परं प्रतिदिनमुपचीयमानमानातिरेका साकारैवेनं शिवमाना प्रथिमानमुपगतवतीति। एवमासीत्तस्य सूक्ष्म दर्शिता धर्म्माधर्म्मादिविनिर्णयविधौ, यया सूक्ष्मदर्शितयाऽयं कस्यचिदपि प्रतिष्ठानस्यार्थं ग्रहीतुं नैच्छद्, ब्राह्मणदत्तधनादेरपि तत्रागम सम्भवाद् ब्रह्मस्वमपि स्वीकृतं भवेदिति। एतदर्थञ्च स स्वव्ययेनैव सुदूरभवानीपुरस्थानात् कलकत्तास्थ-संस्कृतसाहित्यपरिषदि प्रतिदिन समागच्छन्नपि न तत्सदस. किञ्चिदप्यङ्गीकृतवानित्यस्माकमपरोक्ष वस्तु। किं बहुना गभीररजन्यां निकटप्रचारेषु स्वल्पव्ययसापेक्ष-यान-वाहनादिषु प्रभूतव्ययसाध्यमश्वप्रवाह्ययान यन्त्रयाण ( मोटर ) वा स्वव्ययेनैवाङ्गीकृत्य यातायातमकरोत्।

अच्छिन्नधारस्तेषां भ्रातृस्नेहः प्राणिमात्राणामप्यान्तरतत्त्वान्युपस्नेहयति, अज्ञातस्नेहक्रमलवाना कठोरहृदयानामपि चेतसि वैतसीं वृत्ति समुपजनयति, संसारमुक्तानामूर्द्ध्वस्रोतसामपि मूर्द्धः पुनः संसार-भोगायोपनमयति। नायं कालो रामायणस्य महाभारतस्य वा, नाम-शेषता गतेषु रामलक्ष्मणभरतशत्रुघ्ननामधेयेषु, ग्रन्थमात्रग्रथितेषु च युधिष्ठिरभीमार्जुननकुलसहदेवप्रभृतीनामभिधानेषु न तावद् भूपति-गोष्पतौ समतिक्रम्यातिरम्य भ्रातृस्नेहप्रस्रवणमद्रिप्रायवृत्तीनामप्य-वत्याना हृदयदरीषु दरीदृश्यते विश्वप्रपञ्चे। इह हि ज्येष्ठा कनिष्ठा निष्टसिद्धेरन्तरायानन्तरयन्ति संसारप्रदेशादनादेशकरान्। कनिष्ठा अपि ज्येष्ठैरुपग्राहितग्राहवृत्तयो वृद्धे पित्रादिभिर्व्वारं वारं निरुद्ध-क्रोधावेगा अपि स्वापरेशेन चेतसा स्वैराचारपारावारपारीणता परीप्सितुमिव द्वैधमनधीयाना इवोल्लङ्घयन्ति उन्मार्गमार्गणप्रतिबन्धकं भ्रातुर्निर्देशमशोतिपरस्यापि। मस्तृणकाञ्चनसञ्चयघटितेष्वाधुनिक-प्राणिमात्रमानसेषु नोपन्यस्यते पद 'भ्रातृस्नेहेन, न वा मानवतया। अनुपजातपक्षाः पक्षिणः स्वात्मकुलायेषूड्डमक्रियामिव प्रचेष्टन्ते, बाल्य काल एव कलयितुं स्वाधीनतामिदानीन्तनाः परिजनेभ्यः। तत्र चाय-

माश्रित-वानप्रस्थवया अपि गोष्पतिर्दिवस्पतिसामीप्यलाभात् पूर्व्वमप्य-र्व्वाचीनतामात्मनो जानन्निव ज्येष्ठादियतीमपि स्वाधीनता नाधीतवान्। आस्तामसंस्तुतानामतिगहनानामह्निकूटविषयाणां कथा, प्रतिनियत-मुपस्थितेष्वपि विषयेषु भ्रातुरनुमतिमन्तरेणास्य प्रवृत्तिर्नोपलब्धा कदाप्यकदापिभिरपि।

न केवलं भ्रातृस्नेह', पर स्त्रीपुत्रादिस्नेहेऽप्य तथाविध एवासी त्तत्रभवतः। पाठका मा तावत् स्मित भवतामोष्ठपुटं चोटयतु, अवधत्त चणमप्यस्मद्वचसि। जाने मेघडम्बरमिव शाम्बरमप-यास्यत्यचिरादम्बरतलादिह स्मित भवदाननेभ्यः। संसारिणः सर्व्वं एव स्त्रीष्वपत्येषु च स्निह्यन्ति प्रकाम, तेषामुदरपूरणार्थमङ्गाच्छादन-निर्व्वाहार्थञ्चातितरा यतन्ते, स्वसुखवीतस्पृहाः स्पृहयन्ति प्राणैः पणै-रमोघामोघदपि प्रमोदाय। एतेषु केचन प्रादुष्कुर्व्वन्तः स्नेहभरं वचन-परम्परया, कार्य्यतः किमपि नानुतिष्ठन्ति। कथञ्चित् किञ्चिदनुतिष्ठन्तो वा शिष्टसमाजे पल्लवयन्तो व्यथयन्ति कुटुम्बानामन्तराणि। केचन चान्त' स्निह्यन्तोऽपि नैस्पृह्यनाटितकेन वहिरप्रकटयन्तः कर्म्मणा स्नेहभर विवृखते। तयोभावेवेयत्तामनधिगम्य साम्यवैषम्ययो-र्मात्रामपस्मरन्तौ स्नेहप्रवाहपतितौ रोगाद्यभिभवेऽपि भाविनमनर्थं-भावमविगणयन्तौ मनः-कान्तं द्रव्यसन्तानं सन्ततिभ्योऽभ्यवहारायोप-हृत्य शाश्वतामवगाहेते। यत्र स्नेहोपद्रुताना क्वते क्वतात्मभिरभि-क्रमनाशपरिजिहीर्षया सहर्षमघोष्यत—जननी नौषधं धाययेदिति। परमेतद्विलक्षणलक्षणो गोष्पति' स्नेहास्पदमपि प्राणप्रियमपि स्वपुत्रा-दिक कदापि स्नेहमात्रामतिक्रम्य नोपालालयद्, येनोल्लिखितशास्त्र-वता प्रभाववतो तत्रभवन्त प्रभावयितु समर्थो स्यात्। नायं परि-जनाना रोगाद्याक्रमदशायां दृशधारेणाप्यश्रुप्रवाहेण प्रमोहमुपगतः परिणामविरसामुपादयैयदविमृश्यकारितयोपनिबध्यमाना मानस-प्रीतिम्। तत्र तत्रावसरे चास्य प्रकृत्येवोपनीयमाना सर्व्वकालसाधा-

रणव्यवहारविलक्षणा कठोरता विदिततत्त्वानामपि प्राभवद् भय-हेतुरिति किं वक्तव्यमज्ञाततच्चरितानामकस्माद् भयमुपजनयिष्यतीति।

वस्तुतः कस्मिंश्चिद् यथार्थमानवपदवाच्ये प्राणिनि स्नेहो वा दया वा दाक्षिण्यं वा प्राज्ञता वेति ये ये गुणा आवश्यकत्वेन स्थातु-मिच्छन्ति, ते सर्व्व एवात्रभवति प्राचुर्य्येणावर्त्तन्त।

पाठकाः स्वोदरपूरणवैयग्र्येणायथापनीयमानाः समयाः सफली-क्रताः कथञ्चिदद्य प्रविशुद्धभावानां महतां चरित्रालोचनेन। भाषा-वैदूष्यच्छलेनापाटवमात्मनस्तिरश्चिकीर्षुणा नूनं तत्रभवन्तः समुद्-वेज्यन्ते नाम। साम्प्रतमुपरतानां तत्रभवतां जन्मस्थानादिविषयिणी काचन प्रवृत्तिरद्‌वाघ्योपस्थाप्यते भवतां पुरतः।

एकोनाशीत्यधिकद्वादशशततमे वङ्गाब्दे ( १२७९ साल ) चन्द्र-भास्करपूरितेऽन्तरीक्षे दुर्णिरीक्ष्यतामुपगच्छतोश्चन्द्रसूर्य्ययोर्नभोमासे खुलनाजिलान्तर्गत-टाकीश्रीपुरग्रामे प्रसिद्धप्राचीनान्ववायि रायचतु-र्धुरीणस्य तस्यासोमक्षेमधाम्नः समुत्पत्तिरभूत्। यदन्ववायजाः कायजाः प्रजानामार्त्तिहरणेन, जलाशयारामप्रतिष्ठाद्यनुष्ठानेन जलावतारदेवा-यतनप्रणयनव्यापारेण च प्रकृतिष्वच्छत्रं राजत्वं भजमानाः प्रभूतां कीर्त्तिमुपार्जयन्तश्चिरस्वर्गिणोऽपि प्राणिनामाननचरा जीवन्त इव प्रवि-भाव्यन्ते। सुप्राचीनकालादेवोपचितैतेषामतिमानुषी संस्कृतप्रीतिः प्रतिष्ठामलभतोर्गीष्पतिभूपत्योरधिष्ठानेन गतेति प्रत्ययोऽस्मद्-विधानाम्।

महनीयकीर्त्तयश्चैषां पितामहमहोदया दयादाक्षिण्यादीना-मक्षीणचैवतामुपगताः स्वाग्रामिकेष्वभ्युदयेष्वात्मानं व्यापारयन्तोऽपि धर्म्मार्थकर्म्मानुष्ठानव्यासक्ताः कालीघट्टीयगङ्गायां जलावतारमेक-मारचयन्। एवमतिप्रौढेन प्रतिनियतधर्म्माद्यनुष्ठानेन निष्ठामधा-र्म्मिकानपि धर्म्मकृत्येषु प्रापयन्तः सार्थकमेवाग्टह्नन् तारकाभिधानम्।

तातपादाश्चैतेषां भुवनमोहनरायचतुर्धुरीणा वाणीदेव्याः सेवकत्व-

मेकनैष्ठेरनास्थाय वङ्गरूपया तया व्यवहाराजीवत्वं, संस्कृतरूपया च रूपान्तरितया "छन्दःकुसुम" "पाण्डवचरित" इत्येतद्ग्रन्थद्वयीं निरपादयन्। व्यावहारिकदशापरिपाकेणायं विचारकपदमप्युपाददानो निपुणतामत्रापि प्रचुरतरामेवोपादर्शयत्। अज्ञातशीलशिक्षकहस्तगता शिशुशिक्षा चरित्रक्षोभं कञ्चिदनाकाङ्क्षमुपजनयेदित्यतः पुत्रयोर्भूपतिगोष्पत्योः शिक्षाभारं जनकः स्वयमेवाग्रहीत, शैक्षकनैपुण्यमधिगतस्तातः पुत्रं गोष्पतिं प्रतिदिनमेकं संस्कृतश्लोकमायत्तीकारयामास, एवञ्चात्यल्प एव वयसि स्थितो गोष्पतिरनेकान् संस्कृतश्लोकान् कण्ठस्थीकृतवान्। पितुः प्राथमिकीं शिक्षां प्रयत्नातिशयेनैवाभ्यस्य प्रशस्तिं विद्वदग्रेसराणामुपगतः पाठसमाप्त्यर्थं गोष्पतिश्चतुष्पाठीः काश्चिदुपसङ्गम्य सम्यगधीतकाव्यशास्त्रः प्रास्तावीत् काव्योपाधिपरीक्षाम्। तामुत्तीर्णः सविशेषयोग्यतया, भाग्यपुरुषकारयोरेकाश्रय इव श्रमविशेषोपार्जितं तृतीयं स्थान समधिकृत्य प्रीणयन् गुणग्राहिणो बान्धवान्, सम्भुक्षितमकार्षीद्दीर्घ्यादहनं सहाध्यायिनां गहनप्रायायां चित्तभूमौ। संस्कृतशिक्षामत्रैव प्रविहाय गोष्पतिकाव्यतीर्थः कालोपयोगिनीति मत्वा आङ्गलभाषामप्यधिकर्त्तुं कृतप्रयत्न समभवत्। तत्राप्याङ्गलविद्यालयमननुगृह्य प्राज्यप्रतिभोन्मेषवशीकृतहृदयः स्वयमेव तामधिगत्य प्रतीच्यसमाजेष्वपि प्रचारमप्रतिहतमकार्षीत्। कर्म्मजीवनप्रारम्भे च तथाविधेषु केषुचित् कर्म्मस्वय प्रावर्त्तत प्रवाहवाहितरूपेण, येन वाल्य एवास्य कीर्त्तिर्वङ्गविषयमाप्लाव्य भारतस्यान्यत्रापि प्रासरत्। तदयं व्यापार—अपधर्म्मिभि' शासकरूपेणावोपस्थाय प्रामाधिकारैः सर्व्वेष्वपि व्यापारेषु क्रमेण प्रहितबाहुभिर्देशवासिनोऽस्वतन्त्रतामुपगमिताः क्षुद्रेष्वपि परमुखापेक्षितया क्लेशमत्यर्थमुपगतवन्तः। ततश्च केचन प्रतिभाप्रावीण्येन दैन्यमिदं विद्रावयितुं कृतप्रयत्नाः "न वयं देशजातवस्तु प्रविहाय किञ्चिदपि ग्रहीष्यामः" इति प्रतिजज्ञिरे। अन्येऽपि यथानेन वर्त्मना

प्रचलितु कृतसाहसा भवेयुस्तदर्थञ्च प्रभूतसभादिकमनुष्ठायान्दोलनं किञ्चिदभूतपूर्व्वमारचयामासुः। यस्य "स्वदेशि आन्दोलन"मिति संज्ञा तत एव समुत्पत्येदानीमपि प्रणयादुदाक्रियमाणा विदेशिनोऽधुनाप्यनिशं भीषयति। तत्रैव स्वदेशियुगे तस्मिन्नेवान्दोलने अग्रणीरूपेणायं गोष्पतिकाव्यतीर्थः स्वार्थमविगणय्य केवलदेशसेवामुपलक्ष्य क्षपयामासात्मनोऽमूल्य समयं जीवनञ्च। एतदर्थञ्च "छात्रोडाहितैषी"ति नामकं सन्देशपत्रं स्वसम्पादकतया प्राचालयत्। तद्द्वारेण च वैदेशिकशासकानां नीतिहीनता अविमृश्यकारिता शासितानामुन्नतिप्रतिबन्धृतेत्यादीनि प्रतिपाद्य प्रतिपाद्य प्राप्तराजद्रोहापवादो राजपुरुषैरर्थेन दण्डितोऽभूत्। वयःपरिणामे पुनः "कायस्थजातितत्त्व"मिति नामकं कायस्थानामुत्पत्तिप्रवृत्त्यादिविषयकं किञ्चित् पुस्तकं विरचयितुमारब्धवान्, सांसारिककर्म्मबाहुल्येन च प्रारब्धमपि तत्कार्य्यमितः पूर्व्वं निःशेषीकर्त्तुं नालमभवत्। परं दैहिकासुस्थतया संसारविरक्तः काशीप्रवासमङ्गीकृत्यापि प्रत्यावृत्य केनचित्कारणव्यपदेशेन, तदेवासम्पूर्णं प्रारब्धं कर्म्म प्रणेतुं कृताध्यवसायः कायपातान्तमचेष्टत। प्रतिकूलदैवप्रतिबन्धकतया चासमाप्तकृत्य एव परलोकं प्रस्थितवान्।

एतेषां गोष्पतिकाव्यतीर्थानां सोदरसंख्याप्रतिपत्तिस्तावन्निपुणकवीनामेतत्तातपादानामुपादीयमानादनुष्टुवर्द्धादुन्नियमाना वाचकाना चमत्कारातिशयप्रतानाय प्रतन्यते, यथा—

"कन्ये मदालसासन्ध्ये पुत्रौ भूपतिगोष्पती" इति।

इदानीमत्रभवतो विधवा भार्य्या, तिस्रः कन्याः पञ्च पुत्राश्च वर्त्तन्ते। सहोदरश्चास्य ज्यायान् ज्यावियोगदूनो धनुःखण्ड इवाकाण्डे संघटितेनानेनात्याहितेन स्रस्ताङ्गसन्धिरन्धीभूत इव प्रवहता शोकाश्रुप्रवाहेण प्राणमात्रशेषः कथञ्चिद् ध्रियते। शैशवात् प्रभृत्येव प्रवृद्धप्रेमप्रसरः किञ्चिद् ज्यायानपि वयसा सहाध्ययनं सहावस्थानं सह पानाशनं कुर्व्वाणः

प्राणप्रियसोदरस्तत्नाय कथमिव क्लेशान् नानुभवतीति चिन्तनीयं सुधीसमाजे। परमार्थतो विचार्य्यमाणे च स्वत एवैतद् वचनमस्माकं मानसमान्दोलयन्निर्य्यात्योष्ठपुटयोर्य्यत् न मृतस्तत्रभवान् गोष्पतिः श्मशानवह्निना दग्धः, परं भ्रातृवियोगदूनो भूपतिर्जीवन्मृतो गोष्पति-शोकाग्निना दग्धश्चेति। किंवा तेभ्यो मानवयोद्धृभ्यः शोकापनोदक-मुपदेशं भूपतिकाव्यतीर्थेभ्यो वयमुपपादयितुं शक्नुमः, परं तेषां नैसर्गिकी धैर्य्यसम्पत्, परमकारुणिकेन तत्रभवता भगवता सदय-मावर्जिता शान्तिधारा च तानस्मिन् दुर्दिने सम्भावयिष्यत इति प्रार्थ्यते केवलम्। अस्माकमपि प्रत्यग्रमुपजायमाने दुःसहशोकज्वलन-प्रज्वलिते हृदये तत्करुणाधारैव शरणमिति प्रवेद्य प्रेतस्यापि कृते तस्मै भगवते शान्तिधारां धारयामहे। अतीतसख्याकास्येषामुन्नता गुणप्रचयास्तयनायोग्यतामुपगच्छन्तीति क्षमाप्य क्षमावतस्तदुद्धरण-न्यूनता, कानिचित् पद्यान्यवद्यान्यपि तद्गुणपावकेन पुनीमहे।—

अयि गोष्पतिकल्प। गोष्पते सचिवस्त्वं त्रिदिवे दिवस्पतेः।
वत मानवभाग्ययोगतः क्षितिमाप्तः क्रियते दिनाय किम्?
ऋषिणा नु निसर्गकोपिना त्वयि शापः समसाधि सावधिः।
अवधेरवसानतः पुनर्द्युनिवासं परवानिवाविशः॥
भवतादथवा यथा तथा व्यसृजस्त्वं स्वजनानिति स्फुटम्।
तव तादृशकोमल मनः कथमेवं कठिनं व्यजायत॥
तव साधुचरित्रमाधुरी भुवि धीरैः क्रियते न कैरहो।
अभिनेयपदेषु दक्षता न विवादास्पदतामुपास्थशत्॥
धरणीं परिवर्ज्य धीरणीर्निजपुण्यार्जितमाश्रितेन ते।
नयनाम्बु चिराय सम्भृतं कृपणानामनुकम्पतामिदम्॥

———

## शोकपत्रम्

सर्व्वेऽपि गुरुकुलीया ब्रह्मचारिणोऽध्यापकाश्चाकाण्डे समुपनते नाशनिपातसमेनामुना समाचारेण ( गोष्पतिपरलोकगमनरूपेण ) दुःखिताः समवेदनां प्रकटयन्ति ।

मन्त्री—विद्याविनोदिनी परिषत्, गुरुकुल
रायकोट, लुधियाना ।

---

## शोकसभा

१३३४-वङ्गाब्दीय सौरचैत्रस्य चतुर्व्विंशदिवसे भृगुवासरे सायं सार्द्धषष्ठघटिकायां संस्कृतसाहित्यपरिषद्भवने तदीयैकतरसम्पादकानां पण्डितगोष्पतिकाव्यतीर्थचतुर्धुरीणमहोदयानां महाप्रयाणे शोकप्रकाशार्थं काचित् सभा समनुष्ठिता जाता। तत्र महामहोपाध्याय-श्रीयुक्त-दुर्गाचरणसांख्यवेदान्ततीर्थमहोदयाना प्रस्तावेन, संस्कृतमहाविद्यालयाध्यक्षाणा डा श्रीयुक्तादित्यनाथमुखोपाध्यायानां समर्थनेन, वङ्गविषयोच्चधर्म्माधिकारविचारपतयो राय-श्रीयुक्त-द्वारकानाथचक्रवर्त्तिवाहादुरमहोदयाः सभापतिपदमलमकार्षुः । तत्रोपस्थिताः विशिष्ट-सभ्याः,—म म श्रीयुक्त-भागवतकुमारशास्त्री, म म श्रीयुक्ताशुतोषशास्त्री, पण्डित-श्रीयुक्त-प्रियनाथविद्याभूषण एम् ए, श्रीयुक्त-कृष्णचन्द्रस्मृतितीर्थः, श्रीयुक्त-माधवदाससांख्यतीर्थः एम् ए, श्रीयुक्त-अक्षयकुमारशास्त्री च । आदौ श्रीमद्भिः परिषत्पत्रीयैर्भुवनमोहन-सांख्यतीर्थैः 'व्यथितविलाप'नामकं पद्यं स्वयं विरचय्य वाचितम् । सभापतेरनुमतिक्रमेण सम्पादकैरमरेश्वरठाकुरवेदान्तशास्त्रिभिः शोक-प्रकाशात्मकः प्रस्तावः समुपस्थापितः, समर्थितो गृहीतश्च सभ्यवृन्दैः ।

सभापतिभिः क्षुद्रेण वचसा मृतमहात्मनो जीवनविषयिणी आलोचना कृता ।

महामहोपाध्यायैः श्रीयुक्त-भागवतकुमारशास्त्रिभिरुक्तं यत्—तत्र-भवान् गीष्पतिकाव्यतीर्थो देशानुरागमत्यर्थमुपेत्य विवेचितवान् यत् स्व धर्म्मश्चेदक्षुण्णो नावतिष्ठेत नूनं देशोन्नतिरपि दूरपराहता भवेत्, तदर्थञ्च संस्कृतसाहित्यपथेनाय पुर' प्रासरदिति । श्रीमक्षिरञ्जयकुमारशास्त्रिभिः कथितं—गीष्पतिकाव्यतीर्थस्य तातपादानामतीव पाण्डित्यमासीत्, तद्रचितं संस्कृतच्छन्दसा वङ्गभाषामय-पद्यमस्माभिरवलोकितम् । तदन्ववाये गीष्पतिसदृशानां पण्डितानामुत्पत्तिरेव स्वाभाविकी । सत्यामेव धर्म्मरक्षायां जातिः सुरक्षिता भवेदिति कृतसिद्धान्तेन तत्र-भवता संस्कृतसाहित्यपरिषत् प्रतिष्ठापितेति । म. म. श्रीयुक्ताशु-तोषशास्त्रिभिः कथित—तत्रभवतो नाट्याभिनयकुशलता वचसा प्रकाशयितुं न शक्यते । तेषामभिनयदर्शनावसरे दर्शकानामेवमेव मानससुत्पद्यते, यदय नाटकीययुगमवगाहमाना वर्त्तामहे इति । कलकत्ता-संस्कृतमहाविद्यालयसदस्यरूपेण वर्त्तमानास्ते यादृक् गुरुतरं कर्म्मानुष्ठितवन्तः तदितरेषु तथाविध कर्म्माशक्यसाधनमिति नाधिकं वचः । तेषां संस्कृतभाषायामभिज्ञानं कथङ्कारमासीदित्यत्र तत्-सभाकार्य्यविवरणमेव प्रकृष्टं निदर्शनम् । धर्म्मविश्वासश्च तत्र-भवतामस्मानतिमात्रममोहयदिति । श्रीयुक्तप्रियनाथविद्याभूषण-एम्‌ए महोदयेन समुल्लिखितं—अहमेकेन प्रियवान्धवेन वियुक्तोऽस्मीति । एवमेवान्येऽपि वाग्मिनः स्वं स्वं सामर्थ्यमनतिक्रम्य गीष्पतिविषयिणीं वाचो रचनामुपपाद्य प्रोद्योतयामासुर्म्मानसं दुःखसंक्षोभम् । प्रायेण रजन्या नवमघटिकाया म. म. श्रीयुक्ताशुतोषशास्त्रिभिर्धन्यमुक्ताः सभापतयः सभाभङ्गमुद्घोषयामासुरिति ।

---

# शोकसभा

[ काशीस्थ-भारतीसमितिच्छात्रपरिषद. ]

विगते सौरचैत्रस्यैकोनत्रिंशदिवसे सायं सम्प्रवादनावसरे, भारतीसमिति-भवने, भारतीसंस्कृतपाठशालाया अन्यतमप्रतिष्ठापकस्य दक्षिणोदारप्रकृते वाग्मिप्रवरस्य कायस्थकुलगौरवरवेर्गोष्पतिरायचतुर्धरीणाकाव्यतीर्थमहोदयस्था-कस्मिकमहाप्रस्थाने शोकप्रकाशार्थं भारतीसमितिच्छात्रपरिषद समवर्त्तत कश्चन विशेषाधिवेश । तत्र भारतीसंस्कृतपाठशालाध्यक्षा पण्डित-श्रीयुक्त-श्यामाकान्ततर्कपञ्चाननमहोदया शारीरास्वास्थ्यतायामपि प्रियसुहृदो गोष्पते. प्रेमगौरवात् कृपया साभापत्य स्वीचक्रु तत्र सरलोदारस्वभावस्य गोष्पते-र्गुणपरवशा प्रेमाकृष्टाश्च प्राय सर्वं एवात्रत्या संस्कृतच्छात्रा समुपस्थिता आसन्, अन्ये च सामाजिका ।

प्रथमं सभापतेराज्ञया श्रीसतीन्द्रचन्द्रठाकुरव्याकरणतीर्थेन गोष्पते, प्रसङ्गतस्तत्पितुर्मातुश्चगुणगणा पुरस्कृत्य वाचितो "गोष्पतेस्तत्त्वलाभ" इति संस्कृतभाषामयो निबन्ध "गोष्पतिविंशति"रिति च श्लोकनिबन्ध । विद्या-र्थिनश्चानेके वङ्गभाषामयनिबन्धपाठै शोकोद्दीपकव्याख्यानैश्च सभामिमा शोकाप्लाविताभिवाकुर्वन् ।

ततश्च गोष्पतिस्मृतिरक्षार्थंमुपस्थापिते तावत् प्रस्तावे, श्रीनरेन्द्रकुमारकाव्य-तीर्थेन, "शोके क्षोभे च हृदय प्रलापैरेव धार्य्यते" प्रियावेदितं दुःखं सह्य-वेदन भवतीति चोक्त्वा शोकसभाया प्रयोजनीयतामावेद्य, अन्तत. सकौतुक-मेतत् प्रकटितं यत् "प्रेयास ! गोष्पतिस्मृतिश्चेदभिमता भवता तर्हि संस्कृत-साहित्यपरिषद. भारतीसमितेश्च समुन्नत्यै सर्वथा भवद्भिर्यतितव्यम्, एवञ्च नाम परिषद्गतप्राणस्य, समितेश्चाशा नियतसमुन्नतिलालसस्य महानुभावस्यास्य युष्मदुचित स्मृतिरक्षा स्यात्, वस्तुतो यावद् स्वदेशसेवा, यावत् साहित्यचर्चा, यावच्च संस्कृतनाट्यकलानुशीलनं तावत् गोष्पतिस्मृतिरव्याहता एवेति"। तत. सभापतिमहोदयानामस्वास्थ्यतया कथमपि सम्भाषणानन्तरं सभाभङ्गो जात॰। इति ।

कविराज—श्रीविश्वेश्वरप्रसादशास्त्री

छात्रपरिषत्-सम्पादक भारतीसमिति. काशी।

---

# संस्कृतसाहित्यपरिषत्

इयं संस्कृतसाहित्यपरिषत् प्रतिभा रवेः।
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम् ॥

१८५० शकीये आषाढे ११श वर्षस्य ३य-संख्या


## आश्रमे

[ लेखकः—श्रीकृष्णप्रसन्नतर्कवागीशः ]

रम्या भूधरभूः प्रशान्तसलिला सिन्धुर्नगादुद्गता
मन्दो गन्धवहः सतां हृदयहृत् कालोऽपि पुष्पाकरः।
आशाः कान्तिभृत प्रसूनवसना, पूर्णेन्दुफुल्ल नभ'
पूर्णानन्दमयी तनोति वसुधा शान्तिं मतौ सन्ततम् ॥ १
पत्राणि स्खलितानि पादपतले सम्भावयन्त्यासन
कूजत्-कोकिलकाकली रचयति प्रेम्णा नृणां स्वागतम्।
चञ्चद्भूधर-निम्नगा चरणयोः पाद्यं विधत्ते मुहु
पुष्पाणि प्रणयाद् वहन्ति मधुरा प्राज्या सपर्य्यामिह ॥ २ ॥
मुग्धास्ते मृगशावका नरदृशां तोषं दृशा तन्वते
प्रेमाम्भोधिरसाप्लवं जनमतौ वाचा दधत्यञ्जसा।
क्लान्तिं नोऽन्तरतो नयन्ति विलय जिह्वा-कर-स्पर्शनात्
चित्रं पुत्र-सुहृत्-कलत्र-चरितं वन्यो बिभर्त्ति प्रियम् ॥ ३ ॥
शार्दूला. सुहृदो विहाय सहजं, हिंसत्वमत्राश्रमे
शास्त्रार्थं नु बुभुत्सवः प्रतिदिन भ्राम्यन्ति नः पार्श्वतः।

तीक्ष्णत्वं भजते क्षण न नयनं तेषान्तु पथ्याग्निना
भीतिर्नो ह्यणुशोऽपि मानसपटे सञ्जायते शब्दत: ॥ ४ ॥
क्ष्वेडं तद्रजडुद्दृढ धृतिभृतो भूभृत्सु काकोदरा
दृश्यन्ते शतशोऽद्य जङ्गमतया ते पेलवा रज्जव'।
शान्ता' कान्तिभृता दृशा सुमनसा मोद क्षणात्तन्वते
वैचित्र्य तदकृत्रिम कृतिमता चेत: समाकर्षति ॥ ५ ॥
क्रोष्टार: खलु वञ्चनां विजहतो विद्यार्थिनां सोदरा:
श्रीमात्मेति निरन्तर रसमयं गायन्ति शुद्धान्तरा: ।
भावेन द्रवयन्त्यहो श्रुतवतां यच्छ्रोत्रचित्ते सता
नूनं तदगृहमेधिमानसतटेऽनिर्व्वच्यमुल्लासते ॥ ६ ॥
कान्तारस्थ पतत्त्रिण प्रतिदिश सङ्कूजनैर्मञ्जुलै'
श्रौतं मन्त्रचयं प्रशान्तमनसो व्यञ्जन्ति पूतात्मनाम् ।
बालाना मधुरस्वरैरुदलसद्गीतिश्च सायं प्रगे
साध्वी मङ्गलबोधिनी विदधती धातुर्मनोमोहनम् ॥ ७ ॥
तोय पर्व्वतनिर्झरादुपगतं पीत पिपासो: क्षणा
दुर्द्धर्षामपि तां तृषा शमयति प्रासेव मन्दाकिनी ।
मन्दारैरपि वन्दितं मृगमदोद्गन्धि प्रसूनं त्विह
घ्राणे नेत्रयुगं मनोऽप्यपयतामामोदयत् तत्क्षणात् ॥ ८ ॥
मण्डूका अपि डुण्डुभै: सममितोऽचण्डं प्लवन्ते सदा
मण्डल्या परितो मुदं विदधतो दीव्यन्ति फुल्लात्मना ।
नूनं कुण्डलिनो गिरौ निपतिता दण्डायमाना रुतै'
प्रीतिं श्रोतुरजीजनन्ननुपल कृत्स्नं विचित्र परम् ॥ ९ ॥
विद्या साधनया समं निवसत: सम्पादयत्याश्रमे
नो क्लिश्यन्ति जना: प्रफुल्लमनसो दैन्यानलोत्तापत: ।
सर्वे संयतचेतस सुकृतिनां स्वान्तं निबध्नन्त्यहो-
बाला वा तरुणास्तथैव जरठा निष्ठोल्लसत्कर्म्मभि: ॥१०॥

नार्य्योऽस्मिन्नपि पूतसंस्कृतगिरा कैशोरमात्राश्रिता
भाषन्ते मिथ इत्यमुन्नतिपद संलेभिरे शिष्यया॥
यद्वैयासिक-कापिलाक्षचरणाद्याख्यानि शास्त्राणि नो-
ऽतुल्यान्येव ततोऽगमन् पठनतस्तीर्थत्वमर्हानुगम् ॥ ११ ॥
काश्चिद्ध्याननिमीलिताक्षियुगलास्तत्त्वप्रसक्तान्तरा
निश्चेतु न नरैर्मृता' पुनरिमा' शक्या' किमालेखिताः।
उन्नच्छन्त्य इमास्तु यामयुगले पूर्णे समाधौ स्वतः
शास्त्रार्थादि-गवेषणापरवशा कालं नयन्ति च्चयम् ॥ १२ ॥
मध्याह्नेऽपि च सन्ध्ययोरनुदिनं सामादि सङ्कीर्त्तनै-
स्तत्फुल्लं मुखरं तदाश्रमपद मोदं विधत्ते नृणाम्।
आतिथ्य फलपुष्पमूलसलिलैरद्यापि सम्पूर्य्यते
प्राप्तानां कृपया नवाश्रमपद तद्वासिभिः साग्रहम् ॥ १३ ॥
पूर्णानन्दरसास्पद पदमिद नैवापदा कर्हिचित्
दुःख नाशभयात्तिरोदधदहो तत्त्वप्रबोधाश्रमे।
शान्तिर्मूर्त्तिमतीव भाति नितरामच्णोस्तु मोक्षार्थिना-
माचारेण विधौतपादकमला मातेव रम्याश्रमे ॥ १४ ॥
पूर्णानन्दप्रतिष्ठित,गिरिभुवि प्राप्तप्रकर्षं शुभम्
धर्म्मेणैव जगत्पुर विजयते निःश्रेयसेनाश्रमम्।
पत्न्यो भर्तृभिरन्विता अपि पर प्रेम्णा प्रिय सयमम्
प्राणेनापि वहन्ति याः परिजहुस्त यौनयोग चिरात् ॥१५॥

---

# समालोचनम्

[ निबन्धकः—श्रीचण्डीचरणतर्कतीर्थः ]

श्रीमन्माध्वसम्प्रदायाचार्येत्यादि-विविधविरुदावली-विराजमान-मानोन्नतैर्निखिलदर्शनदीक्षैर्गोस्वामि दामोदरलालमहोदयैः परिष्कृत्य संशोधितायामच्युतग्रन्थमालायाः प्रथमपुष्पभूताया श्रीभगवन्नामकौमुद्यां प्रारम्भे तृतीयपृष्ठ एव मङ्गलश्लोकव्याख्यानप्रसङ्गे "हरेर्नामेति मूलस्य-हरिशब्देन सर्वज्ञः सर्वेश्वरः सर्वाधार परमात्मा, यो वेदान्तिभिर्मायोपहित चैतन्यमित्यभिधीयते। षष्ठ्या च सम्बन्धवाचिन्या वाचकत्वं, ततश्च विश्ववषट्कारादिशब्दाना सहस्रनामस्तोत्रान्तर्गतानामपि न बहिः पापक्षयाथ प्रयोगस्तेषां परमेश्वरवाचकत्वाभावात्। नाप्यात्मादिशब्दानां जीवेश्वरसाधारणानां, वस्त्वादिशब्दवत्" इति टीकाकृता व्याख्यान प्रदर्शितम्।

अत्र 'अत्रेद विवेचनीयमित्यारभ्य इत्यन्यदेतत्' इत्यन्तेन टिप्पणीकृद्भिर्गोस्वामिमहोदयैष्टीकाकृत्प्रदर्शितं व्याख्यान खण्डितं, तदेवाद्य किञ्चित्परामृश्यते। तत्र टिप्पणीकारैर्हि प्रथम टीकाकृता सहस्रनामस्तवघटकनाम्ना भगवदवाचकत्वं यदुक्तं तन्न प्रामाणिकमिति प्रतिज्ञाय—'तथा हि तेषां नाम्ना भगवद्विषयकबोधजनकत्वाभावे वैयर्थ्यमेवे'ति दूषण प्रतिपादितम्।

अत्र वय पृच्छाम सहस्रनामस्तवघटकनाम्नां भगवदवाचकत्वं टीकाकृदुक्त पक्षीकृत्य प्रामाणिकत्वाभाव खलु साध्यते, तत्र प्रथमं कस्मादिति हेतुजिज्ञासैव समुदेति, तन्निवर्त्तकं हेतुवाक्यमेव प्रथमं प्रयोक्तव्य, तदप्रयुज्य'किमप्युक्त चेत् कथमिद प्राप्तकाल सङ्गतमिति सुधिय एव विचारयन्तु। किञ्च स्तवघटकनाम्ना या खलु भगवदवाचकता टीकाकृतोक्ता, सा न प्रामाणिकी इति प्रतिज्ञाय अनन्तरं

तेषां भगवदवाचकत्व इति खल्वनूद्य दूषणं प्रदर्शनीयं, तथाऽप्रदर्श्य तेषां नाम्ना भगवद्विषयकबोधजनकत्वाभाव इत्यनुवादस्य कथं समुन्मेष इत्यपि विचार्य्यताम्। न खलु वाचकत्वानभ्युपगमे बोधकत्वमपि नाभ्युपगम्यत इति टीकाकृतोक्तं, न वाऽवाचकत्वमबोधकत्वं चेकमिति केनापि प्रामाणिकेन विदुषा कदाप्यङ्गीकृतम्। अन्यद्धि वाचकत्वमन्यच्च बोधकत्वं, यतोऽवाचकस्यापि बोधकत्वं बोधकस्याप्यवाचकत्वं भवितुमर्हति, यथा गङ्गादिपदस्य प्रवाहादिवाचकस्य तीराद्यवाचकत्वेऽपि लक्षणया तीरादिबोधकत्वं, तद्वदेव स्तवघटकनाम्नां भगवदवाचकत्वेऽपि बोधकत्वं लक्षणादिना स्यादिति बोधकत्वाभाव इति परानभ्युपगतमनूद्य तदुपरि वैयर्थ्य दोषोद्भावनं दर्शनपरमाचार्य्यस्य युक्तं नवेति पाठका एवात्र साक्षिणः। किञ्च भगवद्विषयकबोधजनकत्वाभावे वैयर्थ्यमपि कथमापादयितुं शक्यम्, न हि भगवद्विषयकबोधजनकत्वाभावो वैयर्थ्येन व्याप्तो येनात्र तत् प्रसञ्जयितुं शक्यम्, घटादौ व्यभिचारात्। न च वाच्यं, वाक्यत्वे सतीति हेतुविशेषणान्नैष दोष इति, तथा सति भगवदनुपस्थापकानां सर्वेषामेव प्रबन्धानां वैयर्थ्यं प्रसज्येत, न चैतदिष्टम्। किञ्च स्तवघटकनाम्ना भगवदबोधकत्वस्वीकारेऽपि कथं वैयर्थ्यमुच्चारणद्वाराऽदृष्टजनकत्वेन तद्द्वारा पापक्षय-पुत्रपश्वादिरूप फलजनकत्वस्य वर्तमानत्वात्तस्याद्यत्किञ्चिदेतत्।

यच्चानन्तरं 'बोधकत्वे चाऽर्थबोधौपयिकः सम्बन्धः शब्देष्वावश्यकः, स चाभिधा लक्षणा वा? आद्या चेद्वाचकत्वं दुर्निवारमेव, द्वितीया चेत् कथमादिमां विनाऽन्यस्या अवसरः। शक्यसम्बन्धो हि लक्षणा शक्त्यभावे कथमिव लक्षणाया उन्मेषो वाचकत्वाभावे च कुतस्त्या शक्तिरिति सुधियो विदाङ्कुर्वन्तु' इत्यन्तष्टिप्पणीभागः, सोऽप्ययुक्तः। टीकाकृता स्पष्टमवाचकत्वस्यैव कथितत्वेन टिप्पणीकारैस्तदनुवादेन स्वयमभ्युपगततया च स चाभिधा लक्षणा वेति विकल्पकरणस्यासम्भवात्। आद्या चेद्वाचकत्वं दुर्निवारमेवेति प्रसञ्जनं चायुक्तमनुक्तोपालम्भनत्वात्।

यच्च 'लक्षणा चेत् कथं शक्तिं विना लक्षणाया अवसरः शक्यसम्बन्धो हि लक्षणे'त्यादि कथनं तदपि तुच्छम्। किं यस्य शब्दस्य यत्र लक्षणा भवति तत्र तस्य शक्तिरवश्यमभ्युपेया भवति। तथा सति गङ्गापदस्य तीरलक्षकस्य तीरे शक्त्यभ्युपगमप्रसङ्गः, न चैतद् गोस्वामिमहोदयमन्तरा केनापि स्वीकृतम्। तथा च स्तवघटकनाम्नां भगवद्वाचकानामर्थान्तरेषु शक्तानामपि लक्षणया भगवद्बोधकत्वे का नामानुपपत्तिः समुद्भाविता विविधदर्शनाचार्य्येणेति न वयं विद्मः। 'वाचकत्वाभावे च कुतस्त्या शक्तिरिति सुधियो विदाङ्कुर्वन्तु' इत्यस्याः पङ्क्तेरपि समीचीनमर्थं न वयमवबोद्धुं प्रभवामः। यतो वाचकत्वं हि शक्तिरेव, न त्वर्थान्तरं, तथा च शक्यभावे कुतः शक्तिरित्यापादनार्थः पर्य्यवस्यति, स च कथं सङ्गच्छेत आपाद्यापादकयोर्भेदाभावात्।

यदपि 'सहस्रनामस्तोत्रान्तर्गतानां नाम्नां न वहिः पापक्षयार्थं प्रयोग' इति टीकाकृदुक्तमनूद्य तदपि निर्मूलं स्तोत्राद् वहिस्तेषां पापानाशकत्वं किं कस्यापि प्रतिबन्धकस्य सद्भावादुत भगवदनुपस्थापकत्वं, नाद्यः तस्य दुर्वचत्वात्, नान्त्यः तथात्वे सुकृतोत्पादकत्वमपि तेषां दुरुपपादमेवञ्च 'प्रमाणं प्राणनिलय' इत्यादितः प्रमाणशब्दस्य भगवदुपस्थापकत्वेन मङ्गलार्थकतेत्यादिरूपा अभियुक्तोक्तयो विरुध्येरन् स्वस्य च न्यायप्रकाशटीकाभट्टालङ्कारे आनन्दो नन्दनो नन्द इति सहस्रनामघटकनाम्नो भगवत्परत्वेन व्याख्यानमयुक्तं स्यात्' इति दूषणमुक्तं तदपि न विचाररमणीयम्। तथाहि इदं पुण्यसाधनं पापक्षयसाधनं वेत्यत्र न शास्त्रादृतेऽन्यत् किमपि प्रमाणं, धर्माधर्मयोः केवलं शास्त्रैकगम्यत्वस्य मीमांसकैर्महत्याऽऽरभट्या प्रसाधनात्। एवञ्च सहस्रनामस्तवघटकनाम्नां पापक्षयसाधनत्वमपि शास्त्रैकसमधिगम्यं न तल्लौकिकैः प्रमाणैरधिगन्तुं शक्यमित्येव वक्तव्यम्। तथा च विष्णुसहस्रनामस्तोत्रस्य पापक्षयसाधनत्वं विधिबोधितमिति स्तोत्रघटकत्वेन सर्वेषां नाम्नां प्रत्येकं पापक्षयसाधनत्वेऽपि यस्य पुंसः शक्तिज्ञानं लक्षणा-

ज्ञान च नास्ति तस्य स्वार्थस्मृतिद्वारा पापक्षयादिसाधनत्वाभावेऽपि केवलमुच्चारणद्वारैव पापक्षयसाधनत्वमिति वक्तव्य, तच्च शास्त्रप्रामाण्यात् स्तोत्रघटकतयैव भवितुमर्हति। बहिः स्तोत्राद् बहिस्तेषामुच्चारणं पापक्षयसाधनमित्यत्र शास्त्रप्रमाणाभावात् कथं पापक्षयोद्देशेन तेषा प्रयोगः शास्त्रीय' स्यात्। यद्यपि हरिस्मृतिः सर्वविपद्विमोक्षणमित्यादि शास्त्रप्रामाण्यादविश्वादिशब्दैर्जायमानाया विष्णुस्मृतेरनुभूतेर्वा पाप-नाशकत्वाङ्गीकारे न किमपि बाधकं तथापि तेषामुच्चारण तथाविध-पापक्षयसाधनमित्यत्र शास्त्रप्रमाणाभावात् पापक्षयसाधनत्वं बहिः-प्रयोगस्य नास्तीति टीकाकृदाशयः, अतस्तथाविधशास्त्रप्रमाणासद्भाव एव तेषा बहिःपापनाशकत्वे प्रतिबन्धक इति दुर्वचत्वादित्यनेन तत्-खण्डनं न युक्तमिति मन्यामहे। यच्च बहिस्तेषा भगवदनुपस्थापकत्वा देव पापानाशकत्वे सुकृतोत्पादकत्वमपि न स्यादित्यादि। तदपि न समञ्जसम्। स्तोत्राद् बहिस्तेषा पापक्षयार्थं प्रयोगस्यैव भगवदुप-स्थापकत्वस्य टीकाकृताऽखण्डनात् वाचकत्वस्यैव तेन निरासात्, अतो भगवदुपस्थापकत्वाभावमात्रेण पापानाशकत्वकथनपरविकल्पकरण-स्यासङ्गतत्वात्। यच्चोच्यते तथात्वे सुकृतोत्पादकत्वमपि न स्यादि-त्यादि, तदतिमन्दम्। पूर्वोक्तशास्त्रानुसारेण भगवदवाचकैरपि लाक्ष-णिकविश्वादिशब्दैर्जायमानाया भगवत्स्मृतेरनुभूतेर्वा सुकृतोत्पादकत्वे बाधकाभावादेवच श्रीविश्वनाथन्यायपञ्चाननभट्टाचार्यादीनामभि-युक्ताना 'प्रमाणं प्राणनिलय' इत्यादि भगवद्विष्णुसहस्रनामस्तोत्रघटक-प्रमाणशब्दस्य स्तोत्राद् बहिरुच्चारणमात्रस्य पापक्षयसाधनत्वस्य सुकृ-तोत्पादकत्वस्य वाऽभावेऽपि लक्षणादिना तस्माज्जातस्य स्मरणस्यानु-भवस्य वा तत्तत्त्वात्मङ्गलार्थकतेत्याद्युक्तयो न विरुध्यन्ते, न वा न्याय-प्रकाशटीकाभट्टालङ्कारे आनन्दो नन्दनो नन्द इति सहस्रनामघटका-नन्दनाम्नो भगवत्परत्वेन स्वकृतव्याख्यानमपि विरुध्यते इति कृत-बुद्धय एव विदाङ्कुर्वन्तु।

यदपि एतेनानुपदमेवात्मादिशब्दाना भगवदवाचकत्वोक्तिरपीदमीयाऽनुपादेयैव, आत्मशब्दस्य जीवेश्वरसाधारणस्य चेतनत्वं चैतन्यत्वं वा वाच्यतावच्छेदक नेश्वरत्वमित्यन्यदेतत् इत्यादिनाऽऽत्मादिशब्दाना टोकाकृदुक्तभगवदवाचकत्वस्य खण्डनं, तदपि सर्वथाऽव्युत्पत्तिद्योतकमिति मन्यामहे, यतः स्वयमेवात्मशब्दस्य जीवेश्वरसाधारणस्य चेतनत्व वाच्यतावच्छेदक नेश्वरत्वमिति स्वोक्तत्वेनेश्वरत्वावच्छिन्नावाचकत्वस्य प्राप्त्या तदवाचकत्वखण्डन कथं न पूर्वापरपराहतमिति सुधिय एव विदाङ्कुर्वन्तु। यथा प्रमेयपदजन्यबोधविषयताया घटादौ विद्यमानत्वेऽपि न प्रमेयपदवाच्यत्व घटादे घटत्वादे प्रमेयपदशक्यतानवच्छेदकत्वात्, अपि तु घटादिपदवाच्यत्वमेव। यथा वा वस्त्वादिशब्दवाच्यत्वं वस्तुत्वावच्छिन्नस्यैव न तु घटत्वाद्यवच्छिन्नस्य तद्वदेवेश्वरादिशब्दानामेवेश्वरत्वाद्यवच्छिन्नवाचकत्व न त्वात्मादिशब्दाना तेषामात्मत्वावच्छिन्नवाचकत्वस्यैव दार्शनिकैरङ्गीकारात्, इति दर्शनपरमाचार्यस्य गोस्वामिमहोदयस्य खण्डनशैलीं न सम्यग्ज्ञातु प्रभवाम इत्यत्र कृपया तैः स्वाभिप्रायः प्रकटीक्रियतामिति सम्प्रार्थ्य विरम्यते।

---

## मगधेश्वरीपूजनम्।*

[ निबन्धकः—श्रीवेणुधरतर्कतीर्थः। ]

अस्माकं देशे (चट्टग्रामविभागे) मगधेश्वरीनाम्न्याः कस्याश्चित् प्रत्यक्षदेवतायाः पूजा बहुकालावधि प्रचलिताऽस्ति। एतत्पूजेतिवृत्तमतीव रहस्यमयं प्रचलितपूजापद्धतितो विपरीत चिन्तनीयञ्च विदुषामिति वैदेशिकाना विज्ञापनाय प्रस्तूयतेऽस्माभिः। नूनमेवैतदधिगम्य भगवद्गतचित्ता विबुधा "ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम्" इति गीतावाक्यं सार्थकं मंस्यन्ते।

* परिषदो मासिकाधिवेशने पठितोऽयं निबन्धः।

मगधेश्वरीति दक्षिणाकालिकाया एव नाम, ध्यानं मूलमन्त्रश्च तस्या एव। परमियं देवता प्रसन्ना भवति चेत्, तदा गृध्ररूपमाश्रित्य पूजास्थानमागत्य पूजोपकरणं बलिञ्च स्वयं गृह्णातीति विस्मयस्थानमेतत्। न चास्याः पूजा कामपि प्रतिमामपेक्षते,किन्तु मृद्घट एव सम्पद्यते।

अस्या' पूजाया नियतः कोऽपि कालो नास्ति। यदा कश्चिज्जनो महत्यां विपदि पतितो भवति, तदा स स्वयं तस्य हितकामी अन्यो वात्मीयो मनसा सङ्कल्पयति,—यद्यस्या विपद उद्धारो लभ्यते, तदा मगधेश्वर्य्याः सेवा प्रदायिष्यत इति। यदीष्टसिद्धिर्भवेत्, तदा अचिरेणैव सेवा प्रदीयते, असिद्धे च दुर्दैववशान्मनोरथे नानुष्ठीयते किमपि। न च निष्कामेण कदाचिदनुष्ठीयते अस्याः पूजनमिति देवतान्तरपूजातो विशेषः। यथाहि वृक्षमूलादौ दक्षिणाकालिकायाः पूजा दिवैव सम्पाद्यते, तथैवास्याः पूजाऽपि दिवा पूर्व्वाह्णे आरभ्यते, न कदाचिदपि रात्रौ।

अन्यासां देवतानां पूजा गृहे प्राङ्गणे वा भवति, अस्याः पूजा तु ग्रामाद्बहिः यत्र वर्षासु जलं नाक्रामति तथाविधायां चिरकल्पितायामुन्नतभूमौ विधीयते। स्थानमेतत् देशीयभाषया "सेवाखला" इत्यभिधीयते। अस्मिन्नेव चिरकल्पितस्थाने ग्रामवासिना सर्व्वेषामेव यथावश्यकं पूजानुष्ठीयते। कुत्रापि ग्रामे एवम्विधमेकाधिकं पूजास्थान न दृश्यते। सर्व्वेषु ग्रामेषु ईदृश पूजास्थानं नास्ति। तत्र ग्रामवासिनः नैकटिकेषु ग्रामेषु स्वेषा पूजां ददति। अभिलष्यते चेत् तदा पूजास्थानविरहितेऽपि ग्रामे पूजकेन नवीनपूजास्थानं शक्यकल्पनं भवेत्। अनयैव च विधया पूजायाः क्रमशो बहुप्रसारोऽपि जातः। स्थानस्यास्य पवित्रतारक्षणाय ग्रामवासिनो यथाशक्ति यतन्ते, श्मशानादिवत् तमिस्रायां निशि बिभ्यति चास्मात्। किं बहुना, आर्य्यधर्म्मद्विषो विधर्म्माणोऽपि एतत्पूजास्थानं ससम्भ्रमं बहुमन्यन्त इति।

२

पूजकनिर्णयेऽपि अस्यां पूजाया देवतान्तरपूजातो विशेषो विद्यते। प्रतिग्राममेकः पूजको निर्दिष्टोऽस्ति, स एव सर्व्वेषां यजमानाना पूजां साधयति, नत्वन्यः कोऽपि। ततश्च कदा तस्यावसरो भवितेति ज्ञातव्यस्तैरेव शनिवारे कुजवारे वा पूजा यजमानैराकल्प्यते। अथ यदि कुत्रचिद् ग्रामे नवीनं पूजास्थानं ग्रामीणैः प्रतिष्ठाप्यते, तदा सर्व्वसम्मत्या नवीनः पूजकोऽप्येको जात्या ब्राह्मणः कल्प्यते। अत्रेदमपि वक्तव्यं यत्, यथा महातीर्थे जातिविचारो नास्ति, तथाऽत्रापि सर्व्वेषामेव हिन्दुजातीयाना याजनं स एव ब्राह्मणः करोति। किन्तु ब्राह्मणादय उत्कृष्टवर्णा यजमानाः स्वेषां पूजोपकरणादिकमन्त्यजसंसर्गदोषात् सर्व्वथा संरक्षन्ति।

अत्र पूजायां बलिदानमेव मुख्यम्। तदर्थमक्षतप्रसवा अगृहीतगर्भा च सर्वकृष्णा छागी एका संग्राह्या। अन्यानि च सामान्यपूजोपकरण-द्रव्याणि गन्ध-पुष्प-धूप-दीप तिल तुलसी-दूर्व्वा-हरीतकी-सिततण्डुल-कदली-शर्करा-रक्तवसन-मृद्घट-तैल-मधु-घृत-सिन्दूरादीनि वीर-क्रयक्रियया हट्टादानेतव्यानि। तत्र पूजादिवसे प्रात एतानि द्रव्याणि वंशरचितनूतनपात्रे 'सुवडी' इत्याख्ये कृत्वा पूजास्थानमानीय नैवेद्यादिकं सज्जीक्रियते। पूजकेन च कृतस्नानेन शुद्धासने समुपविश्य घटं संस्थाप्य नामगोत्रोच्चारणपुरःसरमभिलपता यथाविधि पूजा समाप्यते। ततो बलिदानव्यापारः। तत्र च न यूपाद्यपेक्षा। किन्तु यवना यथा पशोर्गलदेशार्द्धमात्रं छिन्दन्ति तथैवात्र द्वौ पुरुषौ छागीं शून्ये धृत्वा तीक्ष्णधारकर्त्तरिकया गलार्द्धं छित्त्वा नवमृत्पात्रे रुधिरं गृह्णीतः, उन्मोच्य च चर्म्म पूर्वकथिते वंशनिर्म्मितनवपात्रे मांसं स्थापयतः। अथ पूजकः मुहुर्मुहुस्तारस्वरेण शङ्खं धमति, स्त्रियश्च हुलुध्वनिं कुर्वन्ति। जनाश्च शङ्खनीनामागमनेप्सवः सोत्कण्ठं गगनतलं दरीदृश्यन्ते।

अथ यदि यजमानस्य अदृष्टं सुप्रसन्नं भवेत्, तदा द्वित्रदण्डाभ्यन्तर

एव एकैकशः परःशता शकुनय आगत्य जनेभ्योऽबिभ्यतः अहमहमिकया रुधिरं मांसं तण्डुलकदल्यादिसाधितं नैवेद्यं घटस्थितजलादिकञ्च सर्व्वमेव भक्ष्यपेयमुपभुज्य तस्य कृतकृत्यतां जनयन्ति। तदा तत्रत्यानां जनानामपूर्व्व आनन्दोदयो जायते। केचित् "आगच्छत मातरः। प्रसीदत" इत्यभिदधतः शकुनीनालिङ्गन्ति, केचिद्रुधिरपात्रं हस्ते कृत्वा तान् पाययन्ति, केचिच्च सिन्दूररागमालिम्पन्ति तेषां कण्ठे। एके प्रणमन्ति भक्त्या, केचन तेषामर्द्धभुक्तं कदल्यादिफलं प्रसादं गृह्णन्ति। इत्थं सर्व्वं भक्ष्यं निःशेषं कृत्वा शकुनयः कामं प्रतिष्ठन्ते, दक्षिणाच्छिद्रावधारणान्ते जनाश्च सर्वे सानन्दचेतसः स्वगृहं प्रत्यावर्त्तन्ते।

यदि तु यजमानस्य मन्ददौर्भाग्यं वर्त्तते तदा क्रमेण दिनमणौ अस्तगमनोन्मुखेऽपि तस्यामनावृतभूमौ प्रबलातपतापेन क्लिश्यमानानामपि जनानां नोपयन्ति शकुनयः। कदाचिदुपसर्पन्तोऽपि वा गगनतलादवतीर्य्य पूजास्थानं निकषा वृक्षशाखादिषूपविश्य भूमौ वा निपत्य सर्व्वमेतत् पश्यन्ति, उपेक्षन्ते च। तदा हतभाग्येनामुना यजमानेन पुनर्दिवसान्तरे पूजा तथैव प्रदेया भवेत्।

श्रुतं मया कस्यचिद् वर्षिष्ठस्य विश्वासभाजनस्य मुखात्, यदेकदा एवं शकुनीनागच्छतोऽपि पूजामगृह्णतो दृष्ट्वा "भयादेते नोपसर्पन्ति, अतोऽस्माभिरितो दूरं गन्तव्य"मिति केनचित् पार्श्वस्थशिक्षामात्रेन यजमानमुख्येणाभाषि, अन्वष्ठायि च सर्व्वैस्तथैव, किन्तु तथापि देवता न दयाञ्चक्रे, एकोऽपि शकुनिर्नोपजिगमिषाञ्चकार, क्रमेण सर्व्वं एव प्रतस्थिरे चेति। किमन्यद्वक्तव्यं, देवतायामप्रसन्नाया व्यर्थमनोरथेन यजमानेन स्वगृहं प्रत्यावृत्तेन पूजास्थाने परित्यक्तं द्रव्यजातं रात्रावपि शृगालादय आमिषलोलुपा जन्तवो नाश्नन्ति, अतः प्रातः सर्व्वमेवाविकृतं यथास्थानं दृश्यत इति प्रत्यक्षदर्शिभिरनेकैः प्रोच्यते।

यद्येवं यजमानस्य दौर्भाग्यवशात् पूजा विफला जायते, तदा प्रायेण तस्यां रजन्यां सात्त्विकप्रकृतिकेन पूजकेन भक्तेन यजमानेन वा स्वप्ने प्रत्यक्षीक्रियते तद्वैगुण्यं, येन देवतायाः प्रसादो नोपाजनोति। अस्माकमात्मीयेन केनचित् पूजकेनैकदा एव स्वप्ने दृष्टं यत् देवता स्वयमागत्य सरोषं ब्रवीति—"अरे अहं छागीमांसं भक्षयामीति किममेध्यं केशदुष्टमपि नैवेद्यं मे प्रदीयत" इति। स च प्रातः प्रबुद्धः सन् तेन यजमानेन सह पूजास्थानं गत्वा शृगालादिभिरनुपहृते तस्मिन्नैवेद्ये सत्यमेव केशसम्पर्कं दृष्ट्वा भयस्य विस्मयस्य च परां काष्ठां गतो भूयो भूयो देवतायाः प्रसादमभ्यर्थ्य दिवसान्तरे पूर्व्ववत् पूजां प्रददौ। देवता च तदा कृपावती बभूव। एवमत्याश्चर्य्या बह्वः स्वप्नवार्त्ताः सन्ति। बाहुल्यभिया तासामुपन्यासाद्विरमामः।

पूजेयं पूर्वं पार्वत्यचट्टग्रामप्रदेशे पार्वत्यजातिविशेषेषु प्रचलिता सीत्, ततश्चास्माक देशे क्रमेणागता। तस्मिन् देशे इतोऽप्यधिकं विस्मयप्रदं पूजान्तरमस्तीति जनमुखाच्छ्रूयते। तत्र वंशविटपे एवमेव बलिदानादिव्यापारगर्भा पूजाऽनुष्ठीयते, देवताया प्रसन्नाया मन्त्रबलेनाकृष्टो वंशः क्रमशोऽवनतो भूतललग्नाग्रः सन् पूजा गृह्णाति। नात्र किमपि अविश्वासकारणम्। तथा च विगते मासि मया कार्य्यविशेषव्यपदेशेन कलिकातायां गत्वा एकत्र चलच्चित्रे (वायस्कोप) शङ्कराचार्य्याख्यस्य नाटकस्याभिनयो दृष्टः। तत्र च शङ्कराचार्य्यो वेदान्तशास्त्रीयविचारार्थं तत्प्रतिद्वन्द्विनो विद्वद्वरस्य मण्डनमिश्रस्य पुरीं प्रविविक्षुर्दौवारिकैर्व्याहतगतिः सन् उपायान्तरमलभमानो यावद् दुर्मनायते स्म, तावत् कमपि जटया तापसं मन्त्रबलेन वृक्षशीर्षमाकृष्य तस्मात् पत्राणि छिन्दन्तं दृष्ट्वा तस्मात् पुरुषात् प्रणत्या प्रसादितात् सप्रयोगमाकर्षणमन्त्रं जग्राह, ततश्च प्राचीराभ्यन्तरस्थितं गुवाकवृक्षमेकमाकृष्य तच्छिरः समारुह्य सुखेन पुरीं प्रविवेशेति चलच्चित्रे स्फुटं प्रदर्शितम्। मया तदानीमेव मनसा

विचारित यत् अहो। तन्त्रशास्त्रे प्रसिद्धः स आकर्षणप्रयोगः कालवशादस्माकं देशाद् विलुप्तिं गत इति। एतद् विहगाकर्षणं, पार्वत्यानामिदं वृक्षाकर्षणञ्च तन्त्रशास्त्रीयविलुप्ताकर्षणविद्यायाः साक्षित्वमद्यापि प्रयच्छतः। पाश्चात्यजडविज्ञानेन नूनमत्र मूकेन भवितव्यमिति ध्येयं सुधीभिः *।

---

## हरिश्चन्द्रकथा

( पूर्वतोऽनुवृत्ता )

[ निबन्धकः—श्रीकालीपदकाव्यतीर्थसूत्रविशारदः ]

अत्र अनधिकृतोऽपि कश्चिद् महाभारतीये महाप्रास्थानिकपर्व्वणि स्वर्गमारोढ़ुमनसां द्रौपद्यादीनां हिमालयशृङ्गे पतनप्रसङ्गो मनस्या-पतति। तेषामेकैकशः पतनानन्तरं भीमेन पृष्टो धर्म्मराजो युधिष्ठिरो द्रौपद्या धनञ्जये पक्षपातित्वम्, सहदेवस्य पाण्डित्याभिमानित्वं, नकुलस्य सौन्दर्य्यगर्व्वित्वम्, अर्जुनस्य कथितैकाहनिष्पाद्यनिखिलशत्रु-क्षयकरणासमर्थत्वं सर्वधनुर्ग्राहावमन्तृत्वञ्च, भीमस्य अतिभोक्तृत्वं बल-गर्वित्वञ्च पतनकारणानीत्युक्तवान्। तथा स्वर्गारोहणपर्व्वणि तान्येव पापानि तेषां नरकप्रापकाणि इति ज्ञायते। तत्रेदं विचार्य्यं,—यदेवं-विधैः स्वल्पैरपि पापकर्म्मभिश्चेत् पाण्डवानां, तथा अतुलदानविभव-स्यापि योद्धवरस्यापि कर्णस्य, अमितशौर्य्यस्यापि समराङ्गणहतस्यापि अभिमन्योश्च नरकभोगः स्यात्, तर्हि वरुणावमन्तुर्दानविकत्थनशीलस्य हरिश्चन्द्रस्य नरकभोगः श्वपाकताप्राप्तिर्वा न एकान्तमन्याय्यम्। अथवा विचित्रो हि जीवानां कर्म्मविपाको, यः खलु पातञ्जले व्यास-

---

* एतत्प्रबन्धसमालोचनावसरे श्रीमद्गिरिधारीचरणायुर्वेदशास्त्रिदर्शनतीर्थैः कथितं यत् शाखा 'मगधेश्वरी'ति नाम्नी प्रत्युत 'मन्देश्वरी'ति, देवनेयमनार्य्याणामिति च। स सा प स

देवैर्भाष्ये प्रपञ्चेन समालोचितः। अत्र मार्कण्डेयपुराणे श्मशाने सुप्तस्य हरिश्चन्द्रस्य प्रेतलोकक्लेशसमुदयोपभोगः, भविष्यत्पुत्रशोकस्य च यमेन स्थापितत्वं जीवतोऽपि नृपस्य नरकभोगस्यैव तुल्यत्वं यातीति मन्यते। तथा च श्वपाकदासतारूप नरकभोगात् परतः प्रकृतिजनैः सार्द्धमेव तस्य स्वर्गारोहणं महाभारते युधिष्ठिरं प्रति धर्म्मोक्ति स्मारयति। यथा—

अवश्यं नरकास्तात द्रष्टव्याः सर्वराजभिः।
अतस्त्वया प्राप्तमिद मुहूर्त्तं दुःखमुत्तमम्॥
न सव्यसाची भीमो वा यमौ वा पुरुषर्षभौ।
कर्णो वा सत्यवाक् शूरो नरकार्होश्चिरं नृप॥ इति

तथाच तत्रैव तत्प्रति वासवोक्तिरपि इममर्थं प्रकटयति। यथा—

अवश्यं नरकास्तात द्रष्टव्यं सर्वराजभि'।
शुभानामशुभानाञ्च द्वौ राशी पुरुषर्षभ॥
यत् पूर्वं सुकृतं भुङ्क्ते पश्चान्निरयमेव सः।
पूर्वं नरकभाग् यस्तु पश्चात् स्वर्गमुपैति सः॥
भूयिष्ठ पापकर्म्मा यः स पूर्वं स्वर्गमश्नुते॥ इति

अत्र हरिश्चन्द्रेण स्वल्पपातकतया प्रथमं नरकदर्शनं स्वल्प-श्वपाकदासत्वादिक्लेशपरम्परा, भूयिष्ठ-पुण्यतया च परतश्चिरस्वर्गवास-सुखमनुभूतमिति शास्त्रविधेरपि सफलता। तत्रैव वासवोक्तौ

उपर्य्युपरि राज्ञा हि तव लोका युधिष्ठिर।
हरिश्चन्द्रसमाः पार्थ येषु त्वं विहरिष्यसि॥ इति

युधिष्ठिरस्य हरिश्चन्द्रसलोकताप्राप्तिरपि तमेवार्थमनुकूलयतीति अलं प्रपञ्चेन। एवं हरिश्चन्द्रस्य कथाद्वयमाख्याय भवता समीपे इदमपि किञ्चित् समुपन्यस्यते। बहुषु पुराणेषु हरिश्चन्द्रशुनःशेपयो-रुपाख्यानं दृश्यते। देवीभागवतमार्कण्डेयपुराणे विहाय पुराणान्त-रेषु हरिश्चन्द्रविश्वामित्रयोः कलहमाश्रित्य विचित्रमिदमाख्यानं न क्वापि लभ्यते। तत्र देवीभागवते तु हरिश्चन्द्रस्य कथाद्वयमेव प्राप्यते,

परं मार्कण्डेये अन्तिमैव कथा प्रसक्ता। अतो देवीभागवतादेव किञ्चिदालोचनं प्रवर्त्तयितुमुत्सहे। तत्र कथाद्वय एव विश्वामित्रो हरिश्चन्द्रमयाचत। विश्वामित्रस्य महर्षेः शुनःशेपप्रार्थना तु तेन नापूरि, परं सर्वस्वदानप्रार्थितेन तेन अविलम्बमेव सर्वं दत्तम्। अपरञ्च बलिमङ्गीकृत्य हरिश्चन्द्रः प्रथमायां वरुणं भूयो भूयः प्रतारयामास, पर द्वितीयाया स एव प्रतिग्रहव्याजेन द्विजश्छलित। उभयत्रैव दानविलम्बजनितः शापो हरिश्चन्द्रस्य आवभौ, एकत्र जलोदरप्राप्तिः, अन्यत्र तु श्वपाकदासता, एव दिशा कथाद्वयस्य भूय ऐक्य सन्दृश्यते। परमत्र महती विरोधिनी गतिरियं यत् रोहितस्य समावर्त्तनमन्यूनं चतुर्विंशे वर्षे सम्भवेत्। ततो वर्षसप्तक तस्यारण्ये भ्रमणम्। ततोऽपि कियत्कालानन्तर हरिश्चन्द्रस्य दारपुत्रविक्रयः। तत्रापि बालको रोहितो मातुरञ्चलं गृहीत्वा रुदन् धावतीति। समर्थे यूनि अधिचिंशवर्षीये पुत्रे वर्त्तमाने पितुरेवंविधा क्लेशपरम्परा चेति अति विचित्र मन्यते। न चात्र कल्पान्तरभेदप्रसङ्गोऽपि सम्भवति, एकत्रैव समावेशात्।

पुराणान्तरेषु अनुपलब्धत्वात् मन्यते एतदपि सम्भवेत् हरिश्चन्द्रद्वयस्यैव उपाख्यानद्वयमेव उपाख्यानाशे भूय. सादृश्यदर्शनात् एकत्वमापाद्य इह पुराणे विन्यस्तम्। अन्यथा वरुणं भृश प्रतारयतो हरिश्चन्द्रस्य वाङ्मात्रेणैव विश्वामित्राय सर्वस्वदान पुत्रदारविक्रयश्च कियत् सम्भवेदिति विचार्य्यम्। अथवा प्रथमं प्रतारणाशीलस्यापि तस्य परतो धर्म्मातिशयानुशीलनात् निर्मलीभूतबुद्धेस्तादृशी सत्यपरता जातेति नैव विचित्रम्। अपरञ्च ऐतरेयादौ हरिश्चन्द्रे शासति दुर्भिक्षपीडितस्य पितुरशनायापरीतस्य पुत्रविक्रयेऽपि मतिर्दृश्यते, परं मार्कण्डेयपुराणोक्तम्

न दुर्भिक्ष न च व्याधिर्नाकालमरणं नृणाम्।
नाधर्म्मरुचयः पौरास्तस्मिन् शासति पार्थिवे॥

इति श्रुतिविरुद्धं भवति। तस्माद्धरिश्चन्द्रद्वयसम्भावना एव बलवतीति मन्यते। भागवतेऽपि वंशकीर्त्तनप्रसङ्गे सूर्य्यवंशे हरिश्चन्द्रनामानौ द्वावेव भूपती बभूवतुरिति दृश्यते।

अपर यदि हरिश्चन्द्रद्वयस्य सम्भवः स्यात्, तर्हि कथाद्वयस्यापि साधु उपपत्तिः सम्भवेत्। हरिश्चन्द्रद्वैतविधौ देवीभागवतीयमुपाख्यान-मसङ्गतं वा प्रक्षिप्ततया वा विकृततया वा तत्रोपन्यस्तमित्येवं भवितु-मर्हति।

यथा तथा वा भवत्वस्य निश्चयः, पुण्यानां कथानां प्रसङ्गात् पुण्य-मेव सम्भवेदिति अवान्तरकथयालम्।

इह क्षुद्रे लेखे सनातनधर्मैकशरणानामस्माकं यत् वेदेतिहास-पुराणानामालोचनं, न तत् कथमपि प्रतिकूलतया किन्तु सिद्धान्त-निर्द्धारणार्थं सर्वथा धर्मानुकूलतयैव इति सप्रश्रय विद्वत्सु निवेद्यते। तत्रापि खलु महाराजस्य हरिश्चन्द्रस्य गुणकथासु दुर्जनैरेव ये नाम दोषा आलोचिताः, तेषां कृते च ये नाम दोषाः सम्भवेयुरस्मिन् मन्द-बुद्धौ, तेषां निराकरणाय मन्यते तन्नामस्मरणमेवाल भविष्यतीति शम्।

———

## चर्मगोलक-क्रीड़ा *

[ निबन्धकः—श्रीपुलिनविहारी दासगुप्तः बि एल्. ]

क्रीड़ा या बालरम्या कमकुसुमनिभैर्लीलया च्छात्रमुख्यैः
सोत्सुक्यैः क्रीडनञ्चै विकसितमतिभिः सर्वविद्यालयानाम्।
लभ्येत ख्यातिमार्गः जगति सुविमलः सैन्यसङ्घैर्यया च
सान्तेवासि प्रियत्वाज्जयतु सुविदिता "फुट्‌बला" ख्यात लोके ॥१

* 'पादगोलकक्रीडे'ति 'फुट्‌बलखेला' इत्यस्य समीचीन नाम स्यात्। स-सा-प स.

नेता चेत् शुद्धशीलो विविधकुशलभाक् क्रीडनश्चप्रवीणो
मान सम्यग् लभन्ते कुशलपटलिनश्छात्रसङ्घास्तदास्याम् ।
यत्रामोदप्रलुब्धा निखिलनरसुताः फुल्लचित्ता रमन्ते
सान्तेवासि-प्रियत्वाज्जयतु सुविदिता "फुटबला"ख्यात्र लोके ॥२
या क्रीडा सत्त्वचिह्नं युवजनतनुषु प्राणदा मानदा च
यत्रोल्लासं प्रलभ्य प्रकटितपुलका दर्शका वीतधैर्य्याः ।
चर्म्मच्छादावतंसो वियति भुवि सदा गोलकस्ताड्यमानः
सान्तेवासिप्रियत्वाज्जयतु सुविदिता "फुट्बला"ख्यात्र लोके ॥३
यस्याः ख्यातिर्विशिष्टा कुसुमसुरभिवद् वाति नित्यं समन्ताद्
आनीता या युरोपात् सुभगविधिवशाद्भारते लब्धकीर्त्तिं ।
वातेनाध्मातदेहा नरपदमथिता पिण्डमूर्त्तिं विधत्ते
सान्तेवासिप्रियत्वाज्जयतु सुविदिता "फुट्बला"ख्यात्र लोके ॥४
एकादशानां नरसन्ततीनां क्रीडाविदां मेलनकेलिसद्भिः ।
एकैकपक्षे सुखदा प्रिया या संरभ्यते सा रमतां चिराय ॥ ५
केदारमध्ये परिमाणयुक्ते सीमानिबद्धे समभूमिभागे ।
समक्षमेषा बहुदर्शकानां क्रीडा हरेत् सर्व्वमनांसि नित्यम् ॥६
वर्षातिरेकादपि या विरामं नायाति सम्यक् समुपागतश्रीः ।
क्रीडज्जनानां परिवर्द्धय तेजश्चित्तप्रसादं तनुते प्रभूतम् ॥७

प्राच्यप्रतीच्यौ मिलितौ यतोऽस्या
स्पर्द्धातिवीर्य्यव्यतिहारकार्य्ये ।
तस्मादसौ सज्जनशंसनीया
क्रीडा धरण्यां लभतां प्रसिद्धिम् ॥८

व्यायामपुष्टास्थिवितानदेहा' क्षिप्राभिरामाग्रगतिप्रयुक्ताः ।
पादाभिघातोन्नतगोलकेन क्रीडन्ति सर्वे मनसा सुखाय ॥९
प्रतीच्यशिक्षानुगता भजन्ति यामेव नित्यं प्रणिधानवन्तः ।
सा राजतां मङ्गलमादधाना स्वान्ते प्रजानां जगतीह लीला ॥१०

## आर्य्यनारी

[ निबन्धिका—श्रीमती प्रतिभा भारती ]

अशेषशान्तिसन्तानधर्म्ममोक्षप्रवर्त्तिनीम् ।
त्यागमात्रैकशरणामार्य्यसीमन्तिनी नुमः ॥

पुण्यश्लोकानामार्य्याणां चरितावली समुल्लासयति अशेषप्रकर्षं भारतवर्षमद्यापि। तत्र हि प्राचीने युगे आर्य्यमहत्त्वसंश्रयभूतानाम् आर्य्यधर्म्मैकाश्रयतामधिगतवतीनां वासनाविसर्जनतः परोपकार-साधनाय बद्धपरिकराणां ज्योतिष्मतीनां मूर्त्या पवित्रतमानाम् आर्य्य-नारीणां चरितावलीमालोचयितुं समुल्लसन्ति नो मनांसि। परन्तु कलुषकालिमविवर्जिते कुन्दसुन्दररुचौ सुगृहीतनामधेये तादृशे तादृशे युगे अगण्यपुण्यपरिणामतो लब्धभास्वरतेजसां सत्त्वविकाशेन स्वच्छ स्फटिकायमानमानसानां स्पृहणीयचरितानां तादृशीनां धरातलं पावयन्तीनां रमणीनां तत्त्वानुशीलने अदृष्टतादृशभावानाम् अबोधोप-हतमतीनां शास्त्रेषु अकृतश्रमाणाम् अदृष्टसमाजव्यवहाराणाम् अस्मद्विधानां बालिकाजनानां प्रवृत्तिः खलु सुधाकरकलनाय कर-युगलं प्रसारयतो वामनस्येव निष्फलतामुपैष्यतीति सुनिश्चितमेव।

श्रूयते खलु पूर्वतने युगे "श्रेयश्च प्रेयश्च मनुष्यमेत" इति कठोप-निषदुद्घोषितप्रवृत्तिनिवृत्तिलक्षणधर्मैकशरणा आर्य्यनारीपरम्परा पूत-यशःसुधाधारया धरातलमलङ्कृतवती। तत्र हि सीता-सावित्री-गान्धारी-पाञ्चाली-प्रभृतयो मातरः प्रवृत्तिधर्मादनपेते वर्त्मनि दत्तपदावलम्बा अपि अशेषक्लेशनिदानीभूतां वासनामपहाय, भर्तॄणां सन्तोषसाधनायैव महान्तं त्यागमुररीकृतवत्यः। गार्गी-मैत्रेयी-प्रभृतयो निःश्रेयसे सोपाने निक्षिप्तचरणा अशेषज्ञानप्रभालोकि-नोल्लासितात्मानः परिहृतसंसारसम्बन्धा ब्रह्मवादिन्यः समभवन्।

तदेतत् प्राचीनयुगालङ्कारभूतार्य्यललनानां प्रवृत्तिनिवृत्तिमार्ग-माश्रयन्तीनां युगपत् आलोचनाया असम्भवतया क्रमशः पर्य्या-लोचयितुं समीहते क्षुद्रमतिः प्रबन्धकृत् ।

सीता विदेहाधिपतेर्जनकस्य कर्षणोद्गतमपत्यम । वीर्य्य-शुल्कतया दाशरथिना रामचन्द्रेण हरधनुर्भङ्गतः परिणीता । ततश्च पितृसत्यपालनाय वनं गच्छता रामेण स्वकीयवृत्तान्तं समावेदयता वार्य्यमाणापि वनगमनतः सोत्सुकताकम् अनुगमनं प्रार्थयमाना प्राह—

"भर्त्तुर्भाग्यन्तु नार्य्येका प्राप्नोति पुरुषर्षभ ।
अतश्चैवाहमादिष्टा वने वस्तव्यमित्यपि ॥"
"प्रासादाग्रे विमानैर्वा वैहायसगतेन वा ।
सर्व्वावस्थागता भर्त्तुः पादच्छाया विशिष्यते ॥"
"सुखं वने निवत्स्यामि यथैव भवने पितुः ।
अचिन्तयन्ती त्रीन् लोकान् चिन्तयन्ती पतिव्रतम् ॥"
"स्वर्गेऽपि च विना वासो भविता यदि राघव ।
त्वया विना नरव्याघ्र न मे तदपि रोचते ॥"
"यदि मां दुःखितामेव वने नेतुं न चेच्छसि ।
विषमग्निं जलं वाहमास्थास्ये मृत्युकारणात् ॥"

बहुकृत्वो भर्त्त्रा निषिध्यमानापि पत्युस्तत्र तत्र क्लेशापनोदनेच्छया अनन्तयन्त्रणासङ्कुलं कण्टकादिसमाकीर्णं बन्धुरतया सर्व्वाङ्गपरि-क्लेशदमपि कान्तारमार्गमगणयन्ती एव तथा तथा वाक्यप्रतिवाक्यतः शामदानादिभेदैन भर्त्तुरभिमतमुत्पादयन्ती आशैशवात् पितुः स्नेह-सुधाधारासम्प्लुतावयवा अशेषदासदासीपरिसेविता राजलक्ष्मीरिव अननुभूतक्लेशविन्दुरपि अनन्तदुःखयन्त्रणाकरं पार्व्वत्यमध्वानमवलम्ब-माना वनमगच्छत्—

"यद्यप्येष भवेद्भर्त्ता अनार्य्योऽवृत्तिवर्जितः ।
अद्वैधमत्र कर्त्तव्यं तथाप्येष मया भवेत् ।"

इति अनसूयासंवादे विदेहनन्दिन्याः क्षुद्रमपि वचनं पातिव्रत्यस्य मूर्त्तिमतीमाकृतिमुद्भावयति। यथा वा पञ्चवटीवने सन्न्यासच्छद्मना लङ्काधिपतिना क्रियमाणा बहुशोऽनुनयेन स्वकीयप्रभाववीर्य्यैश्वर्य्य-समाख्यानेन च प्रलोभ्यमानापि तृणमिव गणयन्ती लङ्केश्वरं सगर्व-माह—

यदन्तरं सिंहशृगालयोर्वने यदन्तरं स्यन्दनिकासमुद्रयोः।
सुराग्र्यसौवीरकयोर्यदन्तरं तदन्तरं दाशरथेस्तवैव च॥"
तस्मिन् सहस्राक्षसमप्रभावे रामे स्थिते कार्मुकबाणपाणौ।
हृतापि तेऽहं न जरां गमिष्ये आज्यं यथा मक्षिकयावकीर्णम्॥

यदा पुनरशोककानने प्रलोभनवचनशतेन लङ्काधिपतिना बहुशोऽनु-नीयमानाऽपि अशेषक्लेशनिपीडिताऽपि राक्षसीसहस्रकरकवलिताऽपि सर्वदाकुलहृदयापि, स्त्रैणैवालोकसामान्येन प्रेम्णा एकस्मिन्नेव पत्यौ दत्तमतिर्भर्त्सयन्ती—

"तृणमन्तरतः कृत्वा प्रत्युवाच शुचिस्मिता।
अकार्य्यं न मया कार्य्यमेकपत्न्या विगर्हितम्॥"
"कुलं सम्प्राप्तया पुण्यं कुले महति जातया।
क्षिप्रं तव सनाथो मे राम' सौमित्रिणा सह॥
तोयमल्पमिवादित्य' प्राणानादास्यते शरैः।"
"गिरिं कुबेरस्य गतोऽथवालयं सभां गतो वा वरुणस्य राज्ञः।
असंशयं दाशरथेर्विमोक्ष्यसे महाद्रुमः कालहतोऽशनेरिव॥"

तत्र तत्र निशाचरीणां निरन्तर लोभपरवशया वाचा परम्परया पातिव्रत्यं कदापि न व्यजहात्।

रावणाङ्कपरिक्लिष्टां दृष्टां दुष्टेन चक्षुषा।
कथं त्वां कुलमादद्यां कुलं व्यपदिशन् महत्॥"

इत्यादि बहुविधवागशनिभिन्नमर्म्मापि विदेहनन्दिनी निशाचर-मन्दिरवासतः कठोरनिशाचरीकुलयन्त्रणाविध्वस्तगात्रापि त्याग-

मेकमोक्षमाणा स्वकोये सुखदुःखे रत्नाकरान्तस्तले विहृज्य पत्युरेव प्रोतिमुत्पादयितुकामावोचत्—

"किं मामसदृश वाक्यमीदृशं श्रोत्रदारुणम् ।
रूचं श्रावयसे वीर ! प्राकृत' प्राकृतामिव ॥
अपदेशो मे जनकात् नोत्पत्तिर्वसुधातलात् ।
मम वृत्तश्च वृत्तज्ञ । बहु तेन पुरस्कृतम ॥
न प्रमाणीकृत पाणिर्बाल्ये मम निपोड़ितः
मम भक्तिश्च शीलञ्च सर्वं ते पृष्ठतः कृतम् ॥
चिता मे कुरु सौमित्रे ! व्यसनस्यास्य भेषजम् ।
मिथ्यापवादोपहता नाहं जीवितुमुत्सहे ॥
अप्रोतेन गुणैर्भर्त्रा त्यक्ताया जनसंसदि ।
सा चमा मे गतिर्गन्तु प्रवेक्ष्ये हव्यवाहनम् ॥
यथा मा शुद्धचरिता दुष्टा जानाति राघवः ।
तथा सर्वस्य साक्षी मा सर्वत' पातु पावक' ॥"

तथाभूताया अनन्यसुलभपूतचरित्रायाः सोतायाः तादृशीं दशामुपगताया अपि तादृशचित्तविक्षेपवाक्यवाणसवेधेनापि अविकृतचेतसः स्वाभाविकी धीरता अविचलित सौजन्य लोकातिशायिनी निःस्पृहता चारित्रस्वच्छताया ललितमधुरा ओजस्विता च क्षितितले अदृष्टपूर्व्वा त्यागस्य मूर्त्तिरिव समभवत् । एवं सोताचरित सुधाधवलाम्मन्दाकिनोजीवनादपि अमन्दानन्दसन्दोहिनीं ज्योत्स्नामिव मूर्त्तिमती प्रोतिपरम्परामुदलासयत् ।

तथा त्रिलोकलोकलोचनलोभनोयचरिताया सावित्र्याः पवित्रचरित्रावलीमालोचयता नवीना काचन चमत्कारिता चित्तक्षेत्रे सर्वलोकातिगा काचन द्रवतामुद्भावयति । तथाहि शिशोरपि तस्याः अरण्यानीमुपगतायाः सत्यवतः सन्दर्शनमात्रेणैव सम्यगर्पितभावाया देवर्षित्रिकालविदनारदवचनतः समवधारितसत्यवदल्पजीवितेन जन

कादिना गुरुजनेन शतकृत्वो वारिताया अपि सङ्कल्पापरित्यागः त्यक्तवासनाया अभिनवरमणीयं किमपि वस्तु चकासयति नो मानसक्षेत्रे, इति तु अवनतशिरसा सर्वेषामेव अविसंवादि हृदयम्। यदा वा त्रयहमुपोषिताया अपि दारुसमाहरणाय महावनमधिगच्छतः सत्यवतः शान्तिसन्तानसञ्चारणाय अविचलितमानसा दासीकृतसाध्वसा सहर्षं लब्धसत्त्वप्रकर्षा इव गणेशजननी अनुगमनमकरोत्। यथा वा तत्र विसदृशमूर्त्तेर्मृत्योः साक्षात् प्रत्यक्षीकरणेनापि अनधिगतप्रभावा ब्रह्मविद् इव एकतत्त्वानुध्यानपरवशा स्वसाहसं भक्तिरसैकप्रवणं वचनजातमवोचत्, तत्रैव वाक्यामृतसेचनतो लब्धपरमानन्दात् रविनन्दनात् वराधिगमेऽपि प्रथमतः श्वशुरस्य राज्यनयनलाभस्य पितुश्च पुत्रशतलाभस्य कृते कृता तया काचन मूर्त्तिमती पवित्रतेव मतिः। ततश्च अशेषकौशलविलसितेन वचसा सन्तानप्रार्थना तथा कृता, यथा प्राप्तपरिभवेण शमनेनापि सत्यवतः पुनरुज्जीवनं समपादि। एतावत्या घटनापरम्परया घटितानि वस्तूनि भारतवर्षप्रकर्षमुद्घोषयन्ति, समुज्ज्वलस्वर्णाक्षरेण आर्य्येतिहास तथा अलमकुर्वन् यथा मानवजातीना इतिहासपदेषु तस्यैव परममुत्कर्षमयं स्थानमिति। कौरवकुलराजलक्ष्मीस्वरूपाया गान्धार्य्या' पातिव्रत्य, विगतनयनरत्नस्य धृतराष्ट्रस्य सारूप्यमुपपादयितुकामाया निविडवसनसंवृतनेत्राया आमरणमेकतानता एकपातिव्रत्यं च जगति निष्प्रतियोगिकरमणीयतामाविष्करोति।

दृश्यते तु यत्र विदेहहोमानलसमुद्भवे ज्वलदनलसङ्क्रान्ततेजसि द्रौपदीचरिते अभिनवकोमलरमणीजनानुशीलित नैतिक धर्म्ममयञ्च सत्त्वजातं रजःकुसुममाल्यविलसितरागकम्। पाञ्चाली किल पञ्चजनसेवातत्परापि, समेनैव भावेन पतीनामनुगामिनी सन्तोषसाधनतत्परा च। तस्यास्तु क्रूरकौरवकुलनायकदुर्य्योधनस्य आदेशवशेन नराधमदुःशासनेन बलात् केशाकर्षणतः संसदमुपनीताया अपि क्रिय-

माणवसनाया अपि पतीना पुरतः स्थिताया अपि, तादृश न्यक्कार लभमानाया अपि मानसे पतिषु वैरूप्यं क्रोधो वा नोपगतः। परन्तु परमात्मनि नारायणे भक्तिसिन्धुरमलसलिलेन धरातल प्लावयन्ती प्रावर्त्तत।

यदा किल धृतराष्ट्रो वरद्वयदानानन्तर पुनर्वरग्रहणाय द्रौपदीमनुरुणद्धि स्म तदा धर्म्मतत्त्वमनुशीलयन्ती द्रौपदी प्राह—

"लोभो धर्म्मस्य नाशाय भगवन्नाहमुत्सहे।
अनर्हा वरमाधातु तृतीय राजसत्तम॥
एकमाहुर्वैश्यवर द्वौ तु क्षत्रस्त्रियो वरम्।
त्रयन्तु राज्ञो राजेन्द्र! ब्राह्मणस्य शतं वर.।
पापीयास इमे भूत्वा सतीर्णाः पतयो मम॥"

लभ्यमानप्रभूतसाम्राज्यतया अपि धर्म्ममेकं शरण मन्यमाना तृतीय वरं नाकामयत। यदा वा नारायणप्रमुखयादवकुलसङ्कुलिते धृष्टद्युम्नादिपञ्चालकेशरिसमाक्रान्ते पाण्डवगणनिवासभूषिते कान्तारे सन्तप्तचित्ता पाञ्चालनन्दिनी यदुकुलशेखरं वासुदेवमुपसृत्य—

"गर्हये पाण्डवास्त्वेव युधि श्रेष्ठान् महाबलान्।
यत् क्लिश्यमाना प्रेक्षन्ते धर्म्मपत्नी यशस्विनीम्॥"
धीवल भीमसेनस्य——इत्यादि
"शाश्वतोऽय धर्म्मपथः सद्भिराचरितः सदा।
यद्भार्य्यां परिरक्षन्ति भर्त्तारोऽल्पबला अपि॥" इत्यादि
तं मां शरणमापन्नामित्यादि च प्राह

एतानि ईदृशान्येव बहून्यपि वचासि द्रौपद्याः समुपलभ्यन्ते। तानि तु क्षत्रियाणा तादृशतेजःसंजननद्वारेण पापाना समाजशरीरं भिन्दतां कौरवादिकुलकलङ्कानां क्षत्रियापसदाना विनाशनाय एव। तेन च धर्म्मः संरक्षितो भवति। भवति च सतीनामपि यशःकेतनं भारतगगने सर्व्वथैव उड्डीनम्।

द्रौपद्याः पतीनामनुगमनेन प्रशान्तभावेन वनावस्थिति' पापीयसो जयद्रथस्य हरणेऽपि तस्य चित्तवृत्ते सशोधनाय उपदेशावली पाण्डवानुरक्तिश्च, विराटनिवासे दुर्मते सूतनन्दनस्य कीचकस्य सम्यक् निवासवशगताया अपि चारित्ररक्षण धर्म्ममयता च, भारतेतिहासस्य परमोज्ज्वलतामाविरकरोत्।

सुकन्याया अशेषसौन्दर्य्यमण्डितावयवाया एकेन तानेन वृद्धस्य भर्त्तुर्भार्गवस्य प्रीतिसाधनम् आर्य्यनारीणा परमा महीयसी कल्याणमयीं मनोवृत्तिं प्रत्यपीपदत्।

अहल्यायाश्चरितेषु सामाजिका दोषमुद्भावयन्ति, तत्रापि भर्त्तृरूपधारिणि शतक्रतौ भर्त्तृत्व निश्चिन्वत्या भर्त्तृप्रीतिसाधनमेवानन्यसाधारण कारणं तर्कयाम।

यत् पुनराधुनिका' कवयो वाल्मीकिभवभूतिप्रभृतीनां महाकवीना "अये। ऊर्म्मिला पृच्छत्यार्य्या" इति वचनमात्रेणैव ऊर्म्मिलाप्रच्छादनात् उपेक्षितेति नवीनं वस्तु आरोप्यमाणत्वेन दर्शयन्ति, तत् खलु तेषामकृतगवेषणाना धिय प्रमादः, कुत'—अयुतवर्षमितायुषा चतुर्दशवर्षमात्रमधिकृत्य भर्त्तृविरह. स्मरणीय एवेति चिन्तयितुम् अतिकष्टतया जडधियामस्माक मानसं नाग्रेसरति। इदानो युगेऽपि द्वित्रवर्षविरहविधुरा अनल्परमण्यो वर्त्तन्ते, याः खलु समाजगणनाया कठिनीपातविषयतामिव नाधिगच्छन्ति। तदिद प्रवृत्तिधर्म्ममाश्रयन्तीना धर्म्ममय चरितजातं विविक्तमनसा यथायथं समनुशील्य अन्तरान्तरा अशाश्वत स्व-स्व स्वार्थकल्मषलेशसम्पृक्ततया सर्वथा ता स्मरणीया इति ब्रह्मवादिन्यः परिहृतसंसृतिसम्बन्धाः, सरसिजदलविलसितसलिलायमानाः स्वच्छचरितसुधाकरकरामृतविकिरणेन भारतेतिहासम् अमरतामुपानयन् इति ताः पर्य्यालोच्यन्ते।

पुरा किल विदेहाधिपते राजर्षेर्जनकस्य वदनकमलतो विगलितात्मज्ञानामृतपालनतो लब्धबोधस्य ऋषेर्याज्ञवल्क्यस्य मैत्रेयी-कात्या-

यनीनामधेय दारद्वयमासीत्। तत्र कात्यायनी स्त्रीजनोचितसमाचारा गार्हस्थ्यमात्रशरणा पतिव्रता रमणी आसीत्। मैत्रेयी तु अशेष-जन्मान्तरसञ्चित-निष्कामकर्म्मपरम्परया समधिगतानन्तश्रेयोभावा संसारधर्म्मतो निवृत्तचित्तवृत्तिरिव अशेष-ब्रह्मविदितारं भर्त्तारं तार-माकारयामास।—

"यन्नु म इयं भगोः सर्वा पृथिवी वित्तेन पूर्णा स्यात् स्यां न्वहं तेनामृताहो, नेति होवाच याज्ञवल्क्यः, यथैवोपकरणवतां जीवितं तथैव ते जीवितं तथैव ते जीवितं स्यात्, अमृतत्वस्य तु नाशास्ति वित्तेनेति।"

"येनाहं नामृता स्यां तेनाहं किं कुर्य्यां, यदेव भगवन्वेदं तदेव मे ब्रूहीति।"

एतत्प्रश्नोत्तरे व्यपेतरुसारकलङ्को याज्ञवल्क्यः स्नेहनिःस्यन्दिन्या गिरा पत्नीमुद्दीपयन् सग्रहं प्राह,—त्वं खलु अस्माकं प्रीतेः सञ्जननी सती प्रियमेवावोचथ, अतस्त्वं क्रमशः सर्वमेव विवृण्वतो मम समा-हितेन हृदयेन निदिध्यास। येयं संसारयात्रा पति जाया-पुत्र-वित्त पश्वप्रभृतीनधिकृत्य व्यवहारपारम्पर्य्येण चलति, तत्र हि संसारिणा स्वार्थत्यागेन न किमपि वस्तु चकास्ति आनन्दसन्दोहतया, तथाहि स्वस्यैव कामाय पतिः, जाया, पुत्रः, वित्त, पशव इति सर्वाणि वस्तूनि प्रियाणि भवन्ति। न खल्वन्यस्य कृते किमपि। यो वा वर्णा-श्रमधर्म्मपादपः स्त्रीजातीना ब्रह्मचर्य्य-गार्हस्थ्य वानप्रस्थ सन्यास लक्षण काण्डादिभेदेन बहुधा गीयमानपरममहनीयमूलो विशालो मधुरश्च उपलभ्यते, स खलु तत्तद्वर्णाना स्वस्वपुरुषार्थसार्थसमर्थनद्वारेण जागतिकं वस्तुजातम् उपकरणीकृत्य कृतिमतामेव प्रीतिपरम्परामुल्ला-सयति। तथाहि—

"न वारे लोकानां कामाय लोकाः प्रिया भवन्ति आत्मनस्तु कामायैव लोकाः प्रिया भवन्ति।"

एव वेदादयोऽपि। यदिदं जगति हिरण्यगर्भत आरभ्य लब्ध-प्रभावं वस्तुजातं समवलोक्यते, सर्वमेवैतत् ब्रह्मणो विवर्त्तमयं, तदेकमेव वस्तु सर्वेषां सृष्टिस्थितिप्रलयकारणम्। तद् ब्रह्मैव सृष्ट्वेदं सत्त्वरजस्तमोगुणमयं ब्रह्माण्डं प्रविश्य तत्सारूप्यमधिगतम्। तेन हि ब्रह्माण्डमय तत् समभवत्। एतदेवाह—"तत् सृष्ट्वा तदेवानुप्राविशत्, प्रविश्य च सच्च त्यच्चाभवत्"। एतदर्थमेव प्राचीनानामाभाणक, सर्वं ब्रह्ममयं जगत्" इति, यत्र जीवस्तत्र शिव इति च। अज्ञानव्यष्टि-भूतानि जगन्ति, अज्ञानव्यष्टीनामेव प्राणिनाम् अविद्याविलसित-तया सुखदुःखमोहाद्यात्मिका व्यवहारपरम्परा। अज्ञानसमष्टिरेव माया। "एकोऽहं बहु स्यां प्रजायेय" इतिलक्षण-सिसृक्षाचण एव मायोपहितः सन् जगदिद निर्म्मिमीते। तेन च ब्रह्मलक्षणकारण-विलक्षणत्वेऽपि कार्य्यस्य जगतो विवर्त्तसम्भ्रान्तस्य कारणधर्म्माक्रान्ते कार्य्यत्वरूपः परिणामवादोऽपि मायोपाधिद्वारेण न नोपपद्यते। माया खलु अज्ञानानां समष्टिः। तदुपहितपरमेश्वर एव सर्वेश्वरत्वमधि-गच्छति। तत्र हि एषा वाचा योजना "यथा सर्वासामपां समुद्र एकायनं, सर्वेषां सङ्कल्पाना मन एकायनं, सर्वेषां वेदाना वागेकायनम् एवं सर्वेषा सृष्टानामीश्वर एकायनम्"। "यथा सौम्य, एकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्यात्, वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यं" तथैव एकमात्मतत्त्वं तद्वस्तु सच्छब्दप्रतिपाद्यम्, अन्यत् सर्वं मायिकत्वात् निरायतिकम्। तच्च हि साधकस्य कस्यचिद् भगवत्स्तोत्रे समुपलभ्यते—

"रुचीनां वैचित्र्यादृजुकुटिलनानापथजुषां
नृणामेको गम्यस्त्वमसि पयसामर्णव इव।"

अवाङ्मनसगोचर सच्चिदानन्दसन्दोहसन्दीपित-स्वान्त आचार्य्यः शङ्करोऽपि परमानन्दतरङ्गभङ्गुरा भक्तिमन्दाकिनीमुदलासयत्,—

"गिरामाहुर्देवीं द्रुहिणगृहिणीमागमविदो
हरेः पत्नीं पद्मां हरसहचरीमद्रितनयाम् ।
तुरीया कापि त्वं दुरधिगमनिःसीममहिमा
महामाये ! विश्वं भ्रमयसि परब्रह्ममहिषी" ॥

अज्ञानसमष्ट्यात्मक-मायायाः प्रपञ्चस्य संसारस्य समुच्छेदे आत्म-ज्ञानमेवैकम् प्रभवति। तत् खलु वस्तु श्रवण-मनन निदिध्यासनत एव विसृष्टवासनानां प्रतिभाति ।

"न विद्यया न प्रजया धनेन
त्यागेनैकेनामृतत्वमानशुः ।"

इत्यादिभिरशेष ज्ञानामृतवर्षिणीभिर्वाग्भिः व्यपनीतस्वान्तध्वान्त-सन्ताना मैत्रेयी लब्धात्मबोधा भारतस्येतिहास रमणीचरित्रप्रकर्षं, भगवती ललनाकुलसङ्कलनसाफल्यं तथा तथा प्रत्यपीपदत् यथा "न स पुनरावर्त्तते न स पुनरावर्त्तते" इत्यादि-श्रौतवचननिचितकैवल्यस्येव तस्या यशःसुधाकरस्य अविसंवादिनी परमानन्दमयी मूर्त्तिं जन्मिना मनासि आप्रलयं तोषयिष्यति।

अथाहितपाणिका विदुषी गार्गी वचक्नतोदुहिता शैशवात् प्रभृति परिहृतविषयसम्बन्धा अवाङ्मनसवस्तुतत्त्वानुसन्धित्सया सम्बाधितेन्द्रियवृत्तिरिव ब्रह्मवादिनामृषीणामन्तेवासिनी ब्रह्मवित्त्वमधिगतवती। उपलभ्यते तु बृहदारण्यके याज्ञवल्क्यसंवादे "यदिदं सर्वमप्स्वोतं प्रोतं च कस्मिन्नु खलु आप ओतश्च प्रोतश्च" इति इत्यादिक्रमेण पृच्छ्यमानेष्वनन्तविषयेषु ब्रह्मज्ञानविधूतमानसकल्मषो याज्ञवल्क्यः सस्नेहमाह स्म मत्तुं चेन्नेच्छसीत्यादिक्रमेण, अथोपलब्धिनिदानीभूताम् उपनिषन्मात्रप्रमाणीकृता वेदान्तविद्यापरम्परामुपादिशच्च। वस्तुतो रत्नाकरमेखलाया भारतभूमेरितदेव विशेषप्रकर्षाकर्षणं सहर्षमाकलयितुमर्हामः, यत् बाह्यसौन्दर्य्यचमत्कारितासंहृतचेतसा धरातल-मण्डनाना प्रचण्डप्रभावखण्डीकृतसर्वशक्तीनामपि अलौकिके प्रार-

मार्थिके वस्तुनि साम्प्रतमपि नेत्राणि तथा तथा न विलसन्ति, यथा सभ्यताया उत्पत्तेः पूर्वत एव प्रसूनपर्णफलमयारण्यान्यध्युषितस्यास्य स्वल्पायतनस्य परिमितजनतासङ्कीर्णस्य भारतवर्षस्य विगतबला अबला अपि विलापसम्भार दूरतो विहाय, रिपुकुलयन्त्रणा कृतान्तमन्दिरे विन्यस्य, मोहमहान्धतमसं सासारिकभावम् अवाङ्मनसगोचरतत्त्व तरङ्गमालया विचूर्ण्य, अनिर्वचनीयदोप्तिसुरसरिदमलजलेन धरातल विधय, कुन्देन्दुविशदा कीर्त्तिपताकामुद्भासयन्निति।

पवित्रकीर्त्तेरत्रेर्महर्षे पत्नी अनसूया नाम काचन ब्रह्मवादिन्यासीत्, यस्या खलु अलोकसामान्यपुण्यपरिणामभूता भक्तिपरम्परा विलोकयतां देवानामपि नन्दनरञ्जनमन्दारमकरन्दमण्डिता मौलय अवनतास्तदीयचरणसरोजं किञ्जल्करागेणारञ्जयन्। या खलु कस्यचित् कर्म्मण' कृते दशरात्रं यावत् एका रात्रि प्रावर्त्तयत्। त्रिलोकलोकाना प्रभाकरकरजालानवलोकमतो भीतिपरम्परया विनाशोन्मुखाना परिरक्षणाय दत्तक्षणा नाकनायका अपि दिवसान्तरसमागमाय तदीयकारुण्यरत्नाकरसलिललवमर्थयामासुः। तत्र हि एषा वाचो योजना—

"देवकार्य्यनिमित्तञ्च तया सत्वरमानय।
दशरात्र कृता रात्रि सेऽय मातेव तेऽनघे॥"

या च रागद्वेषहिसाक्रोधविसर्जनत. शमगुणस्य मूर्त्तिरिव पवित्रचारित्रेण 'धरातल क्षालयन्तीव तप प्रभावेण तपश्चरता नयन्तीव सितेन धवलयन्तीव कीर्त्त्या उद्भासयन्तीव सर्वभूतप्रीतिपरम्परया स्निग्ध जनयन्तीव समवर्त्तत। यत्र खलु आर्त्तशरनस्य सुरासुरवन्दितचरणारविन्दस्यात्रेरपि वदनकमलत एषा वागुदचरत्—

"तामिमा सर्वभूताना नमस्कार्य्यां तपस्विनीम्।
अभिगच्छतु वैदेही वृद्धामक्रोधनां सदा॥"

विवेकालोकप्रक्षालितमनः-सन्तमसो रामोऽपि साग्रहमवादीत्—

"अनसूयेति या लोके कर्म्मभिः ख्यातिमागता ।
तां शीघ्रमभिगच्छ त्वमभिगम्या तपस्विनीम् ॥"

श्रीकण्ठपदलाञ्छनस्य कवेर्भवभूतेः अनिन्दनीयपदकदम्बसन्दीपिते सुन्दरकौशल्यानन्दनचरिते उत्तररामचरितनाटके वनाधिदेवताया वासन्त्या अन्तिकतो ब्रह्मवादिन्या आत्रेय्या अगस्त्याश्रमवर्त्मसंवेदनावसरे—

अस्मिन्नगस्त्यप्रमुखाः प्रदेशे
भूयांस उद्गीथविदो वसन्ति ।
तेभ्योऽधिगन्तुं निगमान्तविद्यां
वाल्मीकिपार्श्वादिह पर्य्यटामि ॥

इति वचनपर्य्यालोचनफुल्लमानसानां मनीषिणां मानसे निरवशेष-विशीर्णदोषा सन्न्यासिनी काचित् मूर्त्तिमती पवित्रतेव शारदसुधा-करकरजालेनेव पूततमज्योतिर्म्मयभावेन परमानन्दसन्दोहनतया समुदेति । तत्र च परमात्मतत्त्वविमर्षावसितमानसाया अपि तस्या विदेहनन्दिनीविसदृशदशावातसङ्कलनतस्तादृशजलधरजालप्रवृष्टवारि-धारेव बाष्पासारपरम्परा वनदेवताया अपि अमानुषं मानसं द्रवीचकार । ततश्च रमणीजनसहजस्नेहपरम्परापि दाक्षिण्यमन्दा-किनीसहोदरा एव लब्धप्रकर्षं भारतवर्षं सहर्षमावेदयति ।

एतस्मिन्नन्तरे जयन्ती लीलावती-खनापरनामक-प्रतिभा प्रभृतयः अपि ससम्भ्रमं कीर्त्तनीयाः । यासां सुनिपुणशास्त्रगवेषणा अलोक-सामान्यमहिमानं साम्प्रतमपि भारततलालङ्कारभूतपण्डितमण्डली-मनोमन्दिरे प्रतिष्ठापयति । जयन्ती देवी तु श्रेष्ठपण्डितवंशसम्भूता शैशवतो लब्धशास्त्रप्रवेशा स्वभावकवित्वसमुज्ज्वलप्रतिभा न्यायशास्त्र-मधीयानस्य प्रोषितस्य भर्त्तुः समीपे पत्रिकाव्याजेन स्वकीयं दैन्यम् अनुप्रासकूटघटितश्लोकात्मकं वचनमिदं प्रेरितवती—

रात्रौ जानू दिवा भानुः कृशानुः सन्ध्ययोर्द्वयोः ।
एभिर्नीतं मया शीतं जानुभानुकृशानुभिः ॥ इति

श्रूयते च लोकपरम्परया अधीतन्यायशास्त्रस्य गृहमागत्य छात्रानध्यापयतो भर्त्तुः ग्रन्थासङ्गमनतो व्याकुलमनस्त्वमाकलय्य सा ग्रन्थस्य तथा व्याख्यां व्यधात् यथा अनुपपत्तिलेशसम्पर्कोऽपि नावाभासत ।

लीलावती तु कठोरे अङ्कशास्त्रे कृतश्रमा ज्योतिषशास्त्रे तथा प्रावीण्यमनन्यसाधारणमलभत, यथा तत्प्रणीते लीलावतीग्रन्थे धीमतामपि बुद्धिः सूक्ष्माङ्कसमनुशीलनतः प्रतिहतप्रभेव ।

प्रतिभा तु सिंहलदेशजाता काचन राजकन्या, सा तु दैवविडम्बनया ज्योतिषसिद्धान्तप्रणेतुर्वराहस्य भ्रान्तिविशेषबाधितबुद्धितया ताम्रपात्रे सम्पुटितमतलरत्नाकरसलिले विसृज्यमान मिहिराभिधान पुत्र भर्त्तृत्वेन वृतवती । सापि च अशेषशेमुषीविलासतो ज्योतिषशास्त्रगवेषणया अनन्तज्योतिषपारावारपारीण श्वशुर वराहमपि अनुपदमेव अभिभवमुपनीतवती । तत्र च तस्या वङ्गभाषामयी ज्योतिषिकी गाथा अद्यापि ज्योतिर्विदाम् अनिर्वचनीयं साहायकमादधाति । सापि भर्त्तुः सन्तोषसम्पादनाय स्वकीयां रचना स्वेनैव हस्तेन उत्कृत्य दत्तवती । इदानीमपि युगे लक्ष्मीबाई, पद्मिनी, ताराबाई इत्येतत्प्रभृतयो रमण्यः शौर्यमर्यादासाम्राज्यपरिरक्षणाय स्वकीय जीवनमपि तृणमिव अनायासेन तत्यजुः ।

एतावतीनाम् आर्य्यनारीचरितावलीना सम्यगनुशीलनं सुधाकरकरविगलितचन्द्रकान्तमणिरिव द्रवयति हृदयम् । जनयति च भक्तिचन्दनसौरभामोदितभावप्रसूनजातम् ।

आर्य्यरमणीना चरितावली खलु लब्धमूर्त्तिरपि मूर्त्तिमती जननीव दुष्कृतिशतयन्त्रणानिपीडनतो मानवमानसं वारयति । विचित्रचरित्रा भूतधात्रीव सनातनधर्म्मशरणां समाजस्थितिं धारयति । गृहीतविग्रहधृतिपरम्परेव कठोराचारवल्लरीमुल्लासयति । शिशिरशीतलापि कर्त्तव्यपरायणता दुर्वृत्तजनस्वान्तं सन्तापयति । लेलिहानानलज्वालेव धर्म्माचरणपराङ्मुखान् भस्मीकरोति । गङ्गा-

यमुनासम्मेलनलसितं प्रयागक्षेत्रमिव प्रवृत्तिनिवृत्त्युभयवाहिनीम् अखिलकल्मषविलयकारिणीं पुण्यसिन्धुमुन्नाव्यति। यत्र हि अवाङ्मनसगोचरं 'तत्त्वमसि'महावाक्यैकलक्ष्यं सच्चिदानन्दस्वरूपम् एकमेव वस्तु कर्म्मज्ञानसोपानद्वयेन गमनीयम्। त्याग एक एव मार्गप्रदर्शकः, वासनाविसर्जनमेव पदचालनम्। निष्कामकर्म्माण्येव मनोवृत्तयः, श्रवणमननिदिध्यासनादय एव प्रवृत्तिपरम्परा। अवाङ्मनसगोचर परमानन्दसमधिगमनेनैव पूर्णताप्राप्तिरुद्देश्यीभूतमद्वितीयं फलम्। एतदर्थमेव आर्य्यवंशधराणामद्यापि शौर्य्यवीर्य्यगाम्भीर्य्यप्राचुर्य्यप्रमुखा प्राज्यगुणावली कारुण्यसौजन्यवदान्यताप्रभृतिविरोधिभावजातेन समलङ्कृता एकक्षणावच्छेदेनैव एकस्मिन्नहनि मिथो मैत्रीमुपगता दिवाकरनिशाकरसंहतिरिव परमा प्रीतिमुत्पादयति। दृश्यते तु इदानीमपि युगे आर्य्यवंशधराः श्रेष्ठकुलालङ्कारभूता स्वधर्म्माचरणहेतुतया ब्राह्मादिना धर्म्येण विवाहेन ललनामधिगच्छन्ति। पूजयन्ति च आप्राणपात सर्वैरेव भावेन। यत्र हि मनोरेषा वाची योजना—

"स्त्रियो यत्रैव पूज्यन्ते रमन्ते तत्र सम्पदः।"

मातृवैशिष्ट्यादेव सुताना वैशिष्ट्य स्पष्टतः समुपलभ्यते। यत्र हि बृहदारण्यके "आत्रेयीपुत्रादात्रेयीपुत्र."। "गौतमीपुत्रात् गौतमीपुत्रः" इत्यादि वाक्यजात, तज्जननीसम्भवतया एव तेषाम् उत्कर्षमुद्घोषयति तारस्वरेण। यत् पुनर्जाबालस्य सत्यकामस्य अनिश्चित पितृकस्य मातुरसामान्यगुणभूयिष्ठत्वादेव ब्रह्मवित्त्वम् अशेषतपःप्रभावलब्धा सुधाधवला कीर्त्तिमाला अद्यापि भारतगगनतलमुल्लासयति।

अकृतशास्त्रप्रवेशतया अनधिगतदुरूहशास्त्रसिद्धान्ततया परोक्षा प्रदित्साबाधितकालप्रसरतया परमानन्दमयगुरुदेवपदमात्रसञ्चालिततया अल्पधिया बालिकाजनेन वागधिपस्यापि वक्तुमशक्य समुल्लासितभारततल निरवशेषप्रोत्सारितसमाजकल्मषं समर्पितावाङ्मनस

गोचरपरमानन्दपदपङ्कजमकरन्दविन्दुकं पूततममार्य्यनारीचरितजात समनुशीलितं पूर्णता पूर्णशरणं सामाजिकवर्गमुपनयतु, तथाहि—

पूर्णमदः पूर्णमिदं पूर्णात् पूर्णमुदच्यते ।
पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ॥

———

## गोष्पतिस्मृतिः

[ निबन्धकः—स्मृतिभूषणोपाधिक—श्रीकमलाप्रसाददेवशर्म्मा ]

स विगतो जगतो वत गोष्पतिर्विपतिरद्य न जीवति भारती ।
परिलसत्परिषद् विकसद्यशा अहह सा सहसाप्यतिमूकति ॥१
गुणिगणाग्रजनागणिता गुणाः समुदितास्तव तापकरा हि नः ।
यदि न ते खलु ते वत गोष्पते त्वयि गते भविता नु तथा व्यथा ॥२
न भविता न बभूव भवेन्न वा किमु भवानिव भावभरो भुवि ।
तमनु कोऽपि कदापि कियन्नपि स्मरति जल्पति सम्प्रति रौति वा ॥३
तव कृते सुकृते कृतिनः सदा किमु वदन्ति परं त्यजतोऽपि नः ।
अनुमितं तदिदं जगतो हितं किमपि वस्तु भवानिति नोऽति शुक् ॥४
शशधर परिगृह्य गतोऽसि यत् पशुपते कलयापि स भूषणम् ।
नयविमण्डितपण्डितभूषणं कथय किं हृतवानसि गोष्पतिम् ॥५
ननु भवान् दयितापगमव्यथा न तु न वेत्ति जनेषु ददाति ताम् ।
वत भवान् भवतोह भवान्तको न विवदामि यथेच्छसि सञ्चर ॥६
त्वमपि किं सुमते वत गोष्पते पशुपतिं हि परेतपतिं गतम् ।
अनुसृतोऽसि विसृज्य दयालय नयसुनायकभूपतिमग्रिमम् ॥७
परिषदं परिहृत्य यथेष्टगं यदि गतोऽस्तु शिव तमनुव्रज ।
स्मृतिपथादगतश्च सुभाषितुं वयमथेह भवन्तमनीश्वराः ॥८

निजविचित्रचरित्रगुणैर्भवानिह सुचिरात् पवित्रसुमित्रताम् ।
परमसुत्र कथं चिर-यात्रया वद सपत्नयसि त्वममित्रताम् ॥९॥
ननु पर' परमेत्य समच्चता सृजति दु:खमहो जगदु:सहम् ।
अपि परोक्षगतस्त्वमनुक्षण क्षिपसि नोऽक्षयदु:खमहार्णवे ॥१०॥
त्वमसि न परतोऽपि पर: परस्त्वदितरो यदि वाऽसि कथं हि न: ।
वितनुषेऽनुदिनं तनुता तनोरहह किं नु कृतं न कृतं नु किम् ॥११॥
परपदार्थितयोच्चलिते त्वयि प्रतिपद प्रपतत्यमरेश्वरे ।
विधिमुखा विबुधा विहताधयो विपदमाकलयन्ति पदे पदे ॥१२॥
परिगतो यदितोऽसि विहाय नो ह्यविकलं फलमाप्नुहि केवलम् ।
विविधतापद-तावक दर्शनं भुवि भवेन्न तु येन कदापि न: ॥१३॥
परिषदो यदद' पदमाहितं समुचित विहित विबुधेषु यत् ।
न हि वदेम वय बहु यद्यपि स्मरतु तद्भगवान् भवतोऽचिरात् ॥१४॥
परिजना न रुदन्तु यतो मृतो दयितमुक्तकफास्रवश: पिवेत् ।
रचयताद्य कृतीरिति गोष्पतिस्मृतिरिति स्मृतिभूषणसम्भृति: ॥१५॥
कायस्थसंयमपर: कायस्थकुलगौरव: ।
कायस्थोन्नतिकामोऽद्य कायस्थे लयमेतु स' ॥१६॥

---

## हिन्दुज्योतिषशास्त्रम्

[ निबन्धक:—श्रीदिगिन्द्रनाथव्याकरणतीर्थ: ]

सुप्राचीनकालत ऋग् यजु: सामाथर्वेति वेदचतुष्टयानाम् आलोचनेनार्य्यजाते: ज्ञानविज्ञानचर्च्चाया: निदर्शन सूच्यते। वेदचतुष्टयस्य शिक्षा कल्पो व्याकरण निरुक्तं छन्दो ज्योतिषमिति षडङ्गानि। तथा च—

शिक्षा कल्पो व्याकरण निरुक्तं छन्दसां चिति' ।
ज्योतिषां निचयश्चेति वेदाङ्गानि वदन्ति षट् ॥

"दर्शपौर्णमासाभ्यां यजेत, वसन्ते ब्राह्मणोऽग्नीन् आदधीत" इत्यादि वेदवाक्येषु सत्स्वपि दर्शपौर्णमासादिज्ञानं विना यज्ञो न प्रवर्त्तेत इत्यङ्गानां मध्ये ज्योतिषशास्त्रस्य मुख्यत्वम्। उक्तञ्च वेदाङ्गज्योतिषे—

वेदा हि यज्ञार्थमभिप्रवृत्ता'
कालानुपूर्वा विहिताश्च यज्ञाः।
तस्मादिदं कालविधानशास्त्रं
यो ज्योतिषं वेत्ति स वेद यज्ञान्॥

यथा शिखा मयूराणां नागानां मणयो यथा।
तद्वद्वेदाङ्गशास्त्राणां ज्योतिषं मूर्द्धनि स्थितम्॥

यथा वेदो हि नित्यस्तथा वेदाङ्गतया ज्योतिषशास्त्रमपि नित्यम्। ऋग्वेदादौ बहुत्र गणितस्य ग्रहनक्षत्रादेश्च उल्लेखो दृश्यते।

अष्टौ पुत्रासो अदितेर्ये जातास्तन्वस्परि।
देवा उपपैत् सप्तभिः परामार्त्तण्डमास्यत्॥ ८॥
सप्तभिः पुत्रैरदितिरुपप्रैत् पूर्व्यम् युगम्।
प्रजायै मृत्यवे त्वत् पुनमार्त्तण्डमाभरत्॥ ९॥

ऋग्वेदः १०।७२

द्वादश प्रधयश्चक्रमेकं त्रीणि नाभ्यानि क उतच्चिकेत।
तस्मिन्त् साकं त्रिशता न शङ्कवोऽर्पिताः षष्टिर्न चलाचलासः।

ऋक् १।१६४ सूक्तम्।

चतुर्भिः साकं नवतिं च नामभिश्चक्रं न वृत्तं व्यतीँरवीविपत्।
बृहच्छरीरो विमिमान ऋक्वभिर्युवा कुमारः प्रत्येत्याहवम्॥

ऋक् १।१५५ सूक्तम्।

छान्दोग्योपनिषदादौ राशिविद्यानक्षत्रविद्यादीनां पठनपाठनयोर्व्यवहृतिरवगम्यते। उक्तञ्च छान्दोग्योपनिषदि—

ऋग्वेदं भगवोऽध्येमि यजुर्वेदं सामवेदमाथर्वणं चतुर्थमितिहासपुराणं पञ्चमं वेदानां वेदपित्र्यं राशिं दैवं निधिं वाको वाक्यमेकायनं

देवविद्यां ब्रह्मविद्या भूतविद्या क्षत्रविद्या नक्षत्रविद्यां सर्पदेवजनविद्यामेतद् भगवोँऽध्येमि।

ऋग्वेदे ग्रहणगणनाया अपि व्यवहारो ज्ञायते। तथा च—

य वै सूर्य्यं स्वर्भानुस्तमसाविध्यदासुर'।
अत्रयस्तमन्वविन्दन्नह्यन्ये अशक्नुवन्॥ ६॥

ऋग्वेदे तुरीययन्त्रेण अत्रिवंशोद्भवमुनीनां ग्रहवेधे निपुणतापि सूच्यते। तथाहि—

स्वर्भानोरधयदिन्द्रमाया अवोदिवो वर्त्तमाना अवाहन्।
गूढं सूर्य्यं तमसापव्रतेन तुरीयेण ब्रह्मणा विन्ददत्रिः॥

ऋक् ५।४०।६

भास्कराचार्य्येणापि तूर्य्ययन्त्रेण ग्रहवेधप्रकारः सिद्धान्तशिरोमणौ प्रदर्शितः। वैदिकशुल्वसूत्रादिप्रसिद्धबहुविधकुण्डनिर्म्माणकौशलात् कृष्णयजुःसंहितायां प्रथमप्रपाठके "यो वै दशयज्ञायुधानी"ति वाक्यनिचयात् तथा कात्यायनश्रौतसूत्रभाष्यादिप्रसिद्धनानाविधयज्ञीय पात्राणां निर्म्माणपर्य्यालोचनादपि वैदिकयुगे वृत्त त्रिभुज चतुर्भुजादिक्षेत्राणां परिमाणक्षेत्रफलादिनिरूपकरेखागणितविद्याया अपि प्रचार उपलभ्यते।

एताः (कृत्तिकाः) वै प्राच्यै दिशो न च्यवन्ते। सर्वाणि वा अन्यानि नक्षत्राणि प्राच्यै दिशश्च्यवन्ते इत्यादिना शतपथब्राह्मणस्य वचनेन, तथा "कृत्तिकासु अग्निमादधीत मुखं वा एतन्नक्षत्राणां यत् कृत्तिका" इति तैत्तिरीयब्राह्मणस्यवचनेन च वैदिकयुगेऽपि ऋषीणां गोलज्ञानमुपलभ्यते, तद्गणितशास्त्रविद्यां विना न सम्भवतीति।

वेदो हि सर्वेषां वीजम्। यथा स्वल्पावयववीजाद् बहुशाखाप्रशाखायुतोऽत्युच्चविशालकायो वृक्ष उत्पद्यते, तथा वेदशास्त्रनिहितज्योतिःशास्त्रान्तर्गतगणितगोल-क्षेत्रविद्यादिविषयकस्वल्पमात्रज्ञाना-

दपि वर्त्तमानगणितमहीरुहः समुत्पन्नः। तस्य बह्वः शाखाः प्रशाखाश्च उत्पन्नाः।

वेदाश्रितं ज्योतिषज्ञानमवलम्ब्य महर्षिणा लगधेन वेदाङ्ग-ज्योतिषनामको ज्योतिषग्रन्थो निरमायि, तत्र ज्योतिषशास्त्रस्य स्कन्ध त्रयमुल्लिखितं तथाच वेदाङ्गज्योतिषे—

सिद्धान्त-संहिता-होरा-रूपस्कन्धत्रयात्मकम्।
वेदस्य निर्म्मलं चक्षु' ज्योतिःशास्त्रमकल्मषम्॥

गणितविभागस्तु सिद्धान्तनामकस्कन्धान्तर्गतः तथाहि भास्करा-चार्य्यैः—

त्रुट्यादिप्रलयान्तकालकलनामानप्रभेदः क्रमात्
चारश्च द्युसदां द्विधा च गणितं प्रश्नास्तथा सोत्तराः।
भूधिष्ण्यग्रहसंस्थितेश्च कथनं यन्त्रादि यत्रोच्यते
सिद्धान्तः स उदाहृतोऽत्र गणितस्कन्धप्रबन्धे बुधैः॥

अधुना भास्कराचार्य्यप्रणीतं लीलावतीनामक व्यक्तगणितं वीजगणित-नामधेयमव्यक्तगणितं यत् पठ्यते, तदपि भास्करीयसिद्धान्तशिरोमणि-नामकसिद्धान्तग्रन्थस्यान्तर्गतमेव। तथा वैदिकयुगेऽपि ज्योतिष-शास्त्रान्तर्गत एव गणितविभाग आसीत्। अतएव वैदिकगणित शास्त्रस्य पृथक् सत्ता नोपलभ्यते। अथवा आसीदपि, यथा वृक्षस्य नीरसपुरातनपत्राणां पतनम्, नयनानन्ददायकश्यामलनवपत्राणा-मुद्भवो भवेत्, तथैव सूक्ष्मतर नवनवनियमोद्भासितनवनवगणित-ग्रन्थस्याभावेन स्थूलनियमोपेत पुरातनगणितग्रन्थस्य ज्ञानिकृतानवना-दरात् क्रमशो लोप एव संघटते। भास्कराचार्य्येणापि ब्रह्मगुप्त-श्रीधराचार्य्य-पद्मनाभाना सुविस्तृतवीजगणितेभ्यः सारं सङ्गृह्य क्षुद्र-तरवीजगणितग्रन्थो निरमायि, उक्तञ्च तेन ग्रन्थकारेण—

ब्रह्माह्वय-श्रीधर-पद्मनाभ-वीजानि यस्मादतिविस्तृतानि।
आदाय तत्सारमकारि नूनं सद्युक्तियुक्तं लघु शिष्यतुष्ट्यै॥

भास्कराचार्य्यप्रणीतवीजगणितस्यैव भारतवर्षेऽधुना सर्व्वत्र पठन-पाठनव्यवहारः परिदृश्यते। श्रीधरादीना वीजगणितमिदानीं सुदुर्लभमेव। तथैव वैदिकगणितग्रन्थोपि न प्राप्यते। लगधनामकेन ऋषिणा संगृहीतो वेदाङ्गज्योतिषनामको ज्योतिषग्रन्थः सिद्धान्तग्रन्था-पेक्षयापि प्राचीनतम इदानीं प्राप्यते। तत्र किल

प्रपद्येते श्रविष्ठादौ सूर्य्याचन्द्रमसावुदक्।
सार्पार्द्धे दक्षिणार्कस्तु माघश्रावणयोः सदा॥

इति वचनेन ( पूर्व्वायणांशा २३°।२०' ) भरणीनक्षत्रे विषुवत्-क्रान्तिमण्डलयोः सम्पात आसीदिति ज्ञायते। तत्कालस्तु $\frac{४०°।२'}{५०२४}$ त्रिसहस्राधिकवर्षतोऽर्व्वाक्। एताः ( कृत्तिकाः ) वै प्राच्यैदिशो न च्यवन्ते। सर्व्वाणि वा अन्यानि नक्षत्राणि प्राच्यै दिशश्च्यवन्ते" इत्यादि शतपथब्राह्मणस्थवचने तथा "कृत्तिकासु अग्निमादधीत मुखं वा एतन्नक्षत्राणां यत् कृत्तिका" इति तैत्तिरीयब्राह्मणस्थ-वचनेन च कृत्तिकासु सम्पातोऽवगम्यते। सार्द्धत्रिसहस्राधिकवर्षेभ्यः प्रागेव कृत्तिकासु विषुवपात आसीत्। ततोऽर्व्वाक् मृगशिरसि सम्पातोऽपि अनुमीयते। तथाच—

यदुद्रचो वृषाकपे गृहमिन्द्रा जगं तन।
क्वस्य पुल्वघो मृगः कमगञ्जनयोपनो विश्वस्मादिन्द्र उत्तरः॥

ऋक् १०।८६ सूक्तम्।

पञ्चसहस्राधिकवर्षेत प्राक् मृगशिरसि सम्पातः संघटितः। एवं पुनर्व्वस्वोरपि सम्पातोऽवगम्यते। अतो बहुसहस्रवर्षेतो भारतवर्षे हि गणितविद्यायाश्चर्चा ज्ञायते। ऋग्वेदीयचरणव्यूहपरिशिष्टे शौनकेनोक्तम्—

लक्षन्तु चतुरो वेदा लक्षमेकन्तु भारतम्।
लक्षं व्याकरणं प्रोक्तं चतुर्लक्षन्तु ज्योतिषम्॥

अष्टादश महर्षयः सिद्धान्तज्योतिषशास्त्रस्य प्रवर्त्तकाः। तेषां नामानि काश्यपादिभिरभिहितानि। यथाह काश्यपः—

सूर्य्यः पितामहो व्यासो वशिष्ठोऽत्रिः पराशरः।
काश्यपो नारदो गर्गो मरीचिर्मनुरङ्गिरा॥
लोमशः पौलिशश्चैव च्यवनो यवनो भृगुः।
शौनकोऽष्टादश चैते ज्योतिःशास्त्रप्रवर्त्तकाः॥

एतेषां केवलसिद्धान्तग्रन्थाः इदानीमपि प्राप्यन्ते। भास्कराचार्य्यादीना सिद्धान्तग्रन्थे यथा व्यक्ताव्यक्तभेदेन द्विविधगणितमुक्तम्, न तथा कुत्रापि आर्षसिद्धान्तग्रन्थे। तेषु केवल ग्रहसाधनार्थमेवाङ्कव्यवहारो दृश्यते।

ब्रह्म सूर्य्य वशिष्ठादयः आर्षसिद्धान्तकाराः ऋषयस्तथार्य्यभटादयो मनुष्यसिद्धान्तकाराश्च सर्वे एव दृक्तुल्यग्रहसाधनार्थं यतमाना आसन्। यदा यदा ग्रहगणनायां दृक्तुल्यताया वैलक्षण्यं दृष्टं, तदा तदा नलिकादियन्त्रेभ्यो भेद भेदकारणञ्च ज्ञात्वा तत्कालवर्त्तमानाभिर्युक्तिभिः नूतनग्रन्था निर्म्मिताः। एवं महामतिभिः धृतमिद ज्योतिःशास्त्रं खिलत्वं न याति। उक्तञ्च तेन—

ब्रह्मोक्त ग्रहगणितं महता कालेन यत् खिलीभूतम्।
अभिधीयते स्फुट तत् जिष्णुसुत-ब्रह्मगुप्तेन॥

ब्रह्मोक्ते ग्रहगणिते दृक्तुल्यताया हानि दृष्ट्वा ब्रह्मगुप्तेन ब्रह्मसिद्धान्तनामको नूतन सिद्धान्तग्रन्थो निर्म्मितः। तथा पराशरग्रन्थे अन्तरं दृष्ट्वा आर्य्यभटेन आर्य्यभटसिद्धान्तो निरमायि। वशिष्ठसिद्धान्ते चान्तर दृष्ट्वा विष्णुचन्द्रोऽपि स्वानुभवानुरूपं नूतनग्रन्थं रचितवान्। वराहमिहिरेण सूर्य्यसिद्धान्तस्य संस्कारः कृतः। तेन पञ्चसिद्धान्तिकानामकग्रन्थे उक्तं—

पौलिशतिथिः स्फुटोऽसौ तस्यासन्नस्तु रोमकः प्रोक्तः।
स्पष्टतरः सावित्र-परिशेषौ दूरविभ्रष्टौ॥

अत्र भारतगौरवेण महामतिना गुणैकपक्षपातिना वराहमिहिरेण यावनिकयोः पौलिशरोमकसिद्धान्तयोः स्फुटत्वं तथा ऋषिप्रणीतयोरपि पितामहसिद्धान्तवशिष्ठसिद्धान्तयो' अस्फुटत्वात् अव्यवहार्य्यत्वञ्च स्पष्टमेव निगदितम्। धर्मशास्त्रकारैः ऋषिभिरपि येन ग्रन्थेन ग्रहाः दृक्तुल्या दृश्यन्ते तेनैव ग्रन्थेन ग्रहसाधनं तिथ्यादिसाधनञ्चादिष्टम्।

क्रमशः

## विलापाः

[ निबन्धकः—श्रीताराचरणभट्टाचार्य्यः ]

पशुपतिं हरतापि च गोष्पतिं परिषद विधवामिव तन्वता।
किमु न वङ्गधराङ्गसमुज्ज्वलन्मणिवरौ मुषितावपि मृत्युना॥
अयि विधे चरितं तव चाद्भुतं वहुदृशा मनसाप्यविचिन्तितम्।
प्रहरतः कुलिशं सुषमानिधौ न सुमनोहितशे वत ते त्रपा?
पशुपतेर्विरहान्ननु गोष्पते त्वमपि तं चलितोऽसि निरीक्षितुम्।
समुचितेष्टभुव प्रतिपद्य भोः स्मरसि किं न मनागपि नो दशाम्॥
वुध समाजनिषेवणतोऽपि किं प्रिय सखे रुचिरोद्य सुरालयः?
तव मतिर्न कदापि वतेदृशी कथमहो भवसीह विरागभाक्?
नयनयोः सरणिं परिहृत्य नः प्रतिगतस्त्वमसीति तव स्मयः?
ननु वृथा श्रम एष कदापि नो हृदयतोऽप्यपयातुमथार्हसि॥

## सन्देशाः

## आन्ध्र-गीर्व्वाणसाहित्यपरिषत्

सम्भावितगीर्व्वाणवाणीसमादरातिरेकाभावे प्रोज्जीवद्भाषाविशेषालोचनवहुले व्यावहारिकशास्त्रानुशीलनभूयिष्टेऽप्यस्मिन् कलिकाले परमिदं सौभाग्यनिदानं संस्कृतसाहित्यरसिकानां यत्, संस्कृतसाहित्यसमालोचनप्रयोजनाः प्राचीनसंस्कृतपुस्तकप्रकटनोद्देश्या परःशताः प्रतिष्ठां नीताः समितयो भारतस्य विभिन्नेषु प्रदेशेषु। पाश्चात्त्यरीति-

मनुसरन्त्यः केषां केषामपि प्राचीनानाम् अनुरागमनावहन्त्योऽप्येताश्च कतिचन यत् देववाणीप्रोज्जीवनविधौ परमोपयोगिताम् भजन्ति इति सर्व एव स्वीकुर्व्वन्ति अपक्षपातदोषदुष्टाः सुधियः।

ततश्च वयं दाक्षिणात्यस्य भिजियानगरे अचिरप्रतिष्ठिताम् 'आन्ध्र गीर्व्वाणसाहित्यपरिषदं' साग्रहं सप्रमोदं सश्रमेच्छम् अभ्यर्थयामः सुतराम्। परिषदेषा तेलेगुभाषाया संस्कृतसाहित्यविषयकनिबन्धानाम् प्रकटनेन अनुवादेन च तेलेगुसाहित्योन्नतिं कामयमाना तेलेगुसाहित्य-संस्कृतशब्दादिप्रवेशमसहमानाना न समर्थयते कृत्यजातम्। आशा-स्महे वयं, यदेषा परिषत् वीरराघवाचार्य्यमहोदयाध्यक्षाधीना स्वेष्टकृत्यं साफल्येन संसाधयन्ती दीर्घमायुर्भजताम्, साफल्यञ्च गमयताम् आत्मीयां मूलवाचम् ' विद्या सत्येन ( धर्म्मेण ) शोभते' इति।

## शोकसन्देशः

दुःखेनेदं वयं विज्ञापयामो यत् सुप्रसिद्धव्यवहाराजीवाना (ब्यारिष्टार) विद्वत्प्रवराणा पुण्यैकव्रताना श्रीयुक्त-कालीप्रसादखैतान्-एम् ए वि एल् महाभागानां सुयोग्या पत्नी सुतरामकाले शिशुसन्तान-सन्तानं, देवभूतं स्वामिनं, बान्धवानन्यांश्च शोकसागरे निक्षिप्य देव सदन प्रति प्रस्थितेति।

सा किल महाभागा सुविदुषी धर्म्मैकव्रता सकलसद्गुणाना-माश्रयः संसारस्यादर्शभूता गृहिणी चासीत्, तस्या वियोगेन सुयोग्य-स्वजनविरहदूना न केवलं तदीया बान्धवाः, पर वयमपि सुदुर्लभगुणा-यास्तादृश्या महीयस्या अभावेन भारतवर्षप्रकर्षक्षतिमनुभवन्तो विषीदामः।

तदत्र कया भाषया तदीय प्रतिं सान्त्वयामः,—ते विद्वांसः सुस्थिरमानसा विश्वविद्यालयस्य प्रकृष्ट रत्न व्यवहाराजीविष्वादर्श-भूतास्तथा सनातनधर्म्मशास्त्रेषु परमश्रद्धासम्पन्नाः, तत् स्वयमेव स्वीयं सान्त्वनममी सम्पादयन्तु। वय वृत्तेनानेन शोकसन्तप्ता. परमेश-समीपे तदीयविमातृकसन्ततीना शोकदूनाना तद्बान्धवानाञ्च स्थैर्य्य क्षेमञ्च सर्व्वात्मना कामयामहे।

# संस्कृतसाहित्यपरिषत्

इयं संस्कृतसाहित्यपरिषत् प्रतिभा रवेः ।
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम् ॥

१८५० शकीये श्रावणे ११श वर्षस्य ४र्थ-संख्या


## वर्षाविवरणम्


[ निबन्धकः—श्रीपुलिनविहारी दाशगुप्तः वि एल् ]


क्षीणा श्रान्तकलेवरा निशिदिवा सन्तप्यमानां महीं
हित्वा प्राप्तविराम-सङ्गतिसुखो ग्रीष्मः सुदूरं गतः ।
तत्स्थान परिलक्ष्य शून्यवसति प्रावृट् प्रलुब्धा स्वयम्
आगत्यात्र वसुन्धरा-सुनिलये तूर्णञ्च सन्तिष्ठते ॥ १
या नित्यं कृषिकृत्-प्रिया मरुभुवि श्यामश्रिसंवर्द्धिनो
सम्प्रेक्ष्य स्फुरदभ्रलीनचपला या सर्वथा चेत्रिणः ।
हर्षोच्छ्वासविलासफुल्लमनसो भू कर्षणानन्दिताः
यं मत्तदिगङ्गनापरिवृता प्रावृड् भवत्यागता ॥ २
या संलभ्य कृषीवलस्त्ववहितो भू-सेवने तत्परो
'नानाशाभिरभिप्लुत' पुलकितोऽहंरात्रिन्दिव कर्म्मभाक् ।
चैत्रे नूनमसाध्यसाधनविधौ सङ्कल्पबद्धः सदा
मग्नस्तीव्रपरिश्रमे न विरतौ वाञ्छापि सञ्जायते ॥ ३

तृष्णाश्यामकृशाङ्गचातकगणाः शान्तिं लभन्तेऽधुना
भेकाः प्राप्य परां मुदं प्रतिदिनं कुर्वन्ति नादं मुहुः ।
वृद्धिं यान्ति जलाशये जलचरा मत्स्यादयः साम्प्रतं
नाना व्याल-सरीसृपाश्च बहुलाः पानीयजा जन्तवः ॥ ४
पर्जन्याः शतशोऽधुना विगलिता दिङ्मण्डलावर्त्तिनः
सान्ध्याकाश-विघोर कृष्णकपिशा नीलाद्रिवद्भीषणाः ।
भूपृष्ठं बहुवर्षणादविरतं संप्लावयन्तस्त्वमी
तन्वन्ति स्थलवर्त्तिनां तनुभृतां क्लेशान् सदा वर्त्मनि ॥ ५
घोरारावपरा विमन्द्ररसिता विद्युल्लतारञ्जिता
जीमूताः सुरवर्त्मलम्बनरता वज्राग्निनिस्यन्दिनः ।
ऊर्व्वीदेहनिषेककर्म्मपटवो राजन्ति धारान्विताः
पङ्काच्छादितविग्रहा वसुमती नीराम्बरा शोभते ॥ ६
सूर्य्याचन्द्रमसोर्न कोऽपि नितरां प्रेक्षास्पदं जायते
तस्मादेकतरो बलाहकहतो दृष्टिच्युतः प्रायशः ।
तेनैव प्रतिहीनभातिदिवसे रात्रिभ्रमः सम्भवेद्
नेत्राभ्यां विकलस्य वासरविभा यादृग् भवेच्चेतसि ॥ ७
शोषं यान्ति सरोवरा ह्रदनदा ग्रीष्मे च वापी सरित्
वर्षासु प्रतिपन्नपूर्ववपुषो नीराशयास्ते पुनः ।
पानीयैः परिपूरिता युवजनैस्तुल्या वयश्चञ्चलाः
श्रीभाजस्तटिनीगणा रसयुताः सौभाग्यवन्तोऽधुना ॥ ८
वीचिक्षेपरता प्रफुल्लतटिनी क्षिप्रं तटप्लाविनी
वारीशाभिमुखं प्रधावनपरा कामं नरीनृत्यते ।
प्राप्तश्रीर्युवतीव सा हृतभया नाम भजेन्नित्यशः
कान्तस्य प्रणयोन्मुखी रसवती प्रायो भवेद् वीतभीः ॥ ९
धारास्नातकदम्बपुष्पतरवश्चान्ये द्रुमाः शोभना
राजन्ते विविधा लताः कुसुमितास्तन्वीष्टकान्तिश्रिताः ।

गुल्मादिच्छितिसम्भवास्तृणकुशाः शाकाश्च पर्णान्विता
ओषध्यः फलपुष्पपत्रबहुला भूकण्ठसंलुण्ठिता' ॥ १०
क्षेत्रे श्यामनवीनशस्यनिचयाश्चित्तप्रसाद प्रदाः
पुष्पैर्विद्रुमराग-रञ्जित तनुः कश्चिद् द्रुमो राजते ।
कश्चित् पल्लवपत्रभूषितरुचिः कश्चित् फलैः शोभते
जायन्ते प्रकृतिश्रिय. सुमधुरा वर्षासु चित्तप्रियाः ॥ ११
शष्पाणि प्रचुराणि गोष्ठमभितो जातानि वर्षागमे
गो-मेषादि-गृहस्थजन्तुनिचयो दृष्ट्वा भय सन्त्यजन् ।
शष्पाण्यत्ति निमीलिताक्षियुगलो मोदं परं संश्रितो
वृष्टिभ्यः परिरक्षति स्वमनिश गोष्ठे शयित्वालसः ॥ १२
पल्लीस्वास्थ्य बहु कलुषित दुष्टवाष्पप्रसङ्गात्
रोगादीना प्रभवति सदा प्राणघाती प्रकोपः ।
कोष्ठाग्निर्यात्यकुशलधृतिं मानवानां शरीरे
वर्षासु स्यान्नरकुलमनो व्याधिचिन्ताप्रपन्नम् ॥ १३
दृष्ट्वा लोकः प्रकृतिसुषमा याति हर्षं प्रभूतं
वाप्या फुल्लं कुमुदपटल चारुकान्तिं विधत्ते ।
धीरा रम्या कमलकलिका शीर्षमुत्तोल्य नीराद्
वीक्ष्यादित्यं हसति मधुरं सुरूपा कामिनीव ॥ १४
वर्षानीरे चलति मलिने पल्वलाना जलौका
व्याली क्रूरा ग्रसति सततं दर्दुरान् क्षुत्प्रशान्त्यै ।
कीटाश्चान्ये बहुसलिलजाः शुक्ति-शम्बूक-शङ्खा
नक्रग्राहाः कमठनिचयाः कर्कटाद्या भ्रमन्ति ॥ १५
पुष्पोद्याने विविधकुसुम यूथिका जातयश्च
नीरे भास्वद्विकच-नलिनी कैरव पुण्डरीकम् ।
वर्षारम्भे कलकलरवा दीर्घिका हंसरम्या
चित्तानन्दं समभितनुते वायुभिश्चञ्चलापि ॥ १६

रचयति ऋतुवर्य्यां तादृशीं यो जनेशो
दिन-कर-कर-हविर्यैश्च सम्पद्यते च ।
निखिल-भुवन-नाथो भीम-सम्पद्विधात्रीं
जयति समुपकुर्वन् प्रावृषं स प्रकामम् ॥ १७

---

## हिन्दुज्योतिषशास्त्रम्

[ निबन्धकः—श्रीदिगिन्द्रनाथव्याकरणतीर्थः ]

( पूर्व्वतोऽनुवृत्तम् )

तथाच ब्रह्मसिद्धान्ते—

संसाध्य स्पष्टतरं वीजं नलिकादियन्त्रेभ्यः ।
तत् संस्कृतग्रहेभ्य कर्त्तव्यौ निर्णयादेशौ ॥

तथा च वशिष्ठः—

यस्मिन् पक्षे यत्र काले येन दृग्गणितैक्यकम् ।
दृश्यते तेन पक्षेण कुर्य्यात् तिथ्यादिनिर्णयम् ॥

येन ग्रन्थेन साधिता ग्रहा दृक्तुल्या भवन्ति, तद्ग्रन्थानुसारेणैव पूजाव्रतादीनां कालनिर्णयः कार्य्यः, अन्यथा अकाले करणजन्यं तत्तत्पूजाव्रतादीना निष्फलत्वं, यथाकालमकरणजन्यः प्रत्यवायश्च जायते। तथाच—

अकाले चेत् कृत कर्म्म काले तस्य पुन' क्रिया।
कालातीतञ्च यत् कुर्य्यादकृतं तद् विनिर्द्दिशेत्।
वरमेकाहुतिः काले नाकाले लक्षकोटयः ॥

इदानीं इंलण्डदेशादागतस्य नाविकपञ्चाङ्गस्य दृक्तुल्यसाधितान् ग्रहान् आश्रित्य केचन सूर्य्यग्रहणादिकां दृश्यगणना कुर्वन्ति, तिथि-नक्षत्रादिगणनान्तु अदृक्तुल्यमेव पञ्चाङ्गे निवेशयन्ति। केचन

माविकपञ्चाङ्गसाहाय्येन ग्रहणतिथिनक्षत्रादिकं सर्वमेव दृक्तुल्यं कुर्वन्ति ।

प्रत्नतत्त्वविद्भिरवगम्यते, यत् खलु आर्य्यऋषय एव साभिजिता-मष्टाविंशतिनक्षत्राणां द्वादशराशीनाञ्च प्रथममवगन्तारः । तैत्तिरीय-संहिताथर्व्वसंहितादिषु एषां नामानि दृश्यन्ते । आर्य्यऋषीणां सकाशा-देव चीनदेशीया वाबिलिनदेशीया आरवदेशीयाश्च ज्योतिर्विद्यां प्राप्त-वन्तः । गणितशास्त्रमपि आर्य्यऋषिभ्य एव तद्देशीयैः प्रथममवगतम् । आरवदेशादेव यूरोपदेशवासिभिस्तत्तत्देशेषु भारतीयगणितविद्या गृहीता च । इदानीं तद्देशीयै गणितशास्त्रस्य सिद्धान्तशास्त्रस्य च बहु-लोन्नतिः सम्पादिता ।

अहो सत्स्वपि कश्यपवशिष्ठगर्गादीनां वंशधरेषु ब्राह्मणेषु, सत्स्वपि सूर्य्यचन्द्राग्निवंशधरेषु क्षत्रियेषु भारतीयराजसु, विदेशीयानां श्वेताङ्गानामनुग्रहं विना आर्य्यवंशसमुद्भवाः सनातन-धर्म्मावलम्बिनो धर्म्मरक्षायामसमर्था इति जानतामपि ज्योतिष-शास्त्रस्य संस्कारार्थं विदुषां सम्यग् यत्नो नानुभूयते ।

ऋग्वेदादौ ग्रहवेधस्याभासो ज्ञायते, वायुपुराणादावपि ग्रहवेध-स्योल्लेखो दृश्यते । सूर्य्यसिद्धान्तादिष्वार्षग्रन्थेषु, भास्करादीनां सिद्धान्त-ग्रन्थेषु च बहुविधयन्त्राणां निर्म्माणकौशलं ग्रहादिवेधप्रकारः कालाव-गतिप्रकारश्च वर्णितानि । काशीजयपुरादि-कतिपयस्थानेषु वेधशाला वर्त्तन्ते, किन्तु तत्र तत्रोत्कृष्टयन्त्रादिकमधुना नास्ति । इदानीं वेधशालानिर्म्माणे भारतीयानां राज्ञामपि आग्रहो न दृश्यते ।

वेदाङ्गज्योतिषे सिद्धान्त-संहिता-होरानामक-स्कन्धत्रयमुल्लिखितम् । यत्र स्कन्धे ग्रहतिथिनक्षत्रादिसाधनोपायो वर्त्तते, स सिद्धान्तस्कन्धः । येन स्कन्धेन तत्तत्कालिकग्रहसञ्चारादिना प्राकृतिकघटनाभिः प्राणिनां स्वरादिभिः हस्तपदादीनां चिह्नैः पक्षीपतनादिना च शुभा-शुभफलं, यात्राविवाहादीनां शुभाशुभमुहूर्त्तञ्च निरूप्येते स संहिता-

शब्देन व्यपदिश्यते। येन च जन्मकालीनग्रहसंस्थानादिना मानवानां वर्त्तमानातीतभाविफलानि निर्णीयन्ते सा होरेति निगद्यते। पल्लीपतनादिना, काकादीनां स्वरेण, प्रासादादिषु गृध्रपतनादिना च फलनिर्द्देशकं शकुनशास्त्रं केरलशास्त्रञ्च पृथक् स्कन्धद्वयं परिकल्प्य केनचित् ज्योतिषशास्त्रस्य स्कन्धपञ्चकमिति भणितं—

पञ्चस्कन्धमिदं शास्त्रं होरा-गणित-संहिता:।
केरलि: शकुनं चेति ज्योति शास्त्रमुदीरितम्॥

किन्तु शकुनशास्त्रं केरलशास्त्रञ्च संहितास्कन्धान्तर्गतं स्वीकृत्य त्रिस्कन्धज्योतिषमिति सर्वत्र प्रसिद्धम्। यवनेभ्य: परिगृहीतं वर्षफल-निर्द्देशक ताजकशास्त्रमपि होरास्कन्धान्तर्गतमेव। सिद्धान्तस्कन्धोऽपि सिद्धान्त-तन्त्र-करणभेदेन त्रिधा। यत्र सृष्टेरादित इष्टदिवसं यावत् कल्पगतदिनगणेन ग्रहो गण्यते गणनोपपत्तिश्च वर्त्तते स सिद्धान्त:। यत्र युगादित तत् तन्त्रम्। यत्र सिद्धान्तग्रन्थनिर्द्दिष्टशकवर्षादिष्टदिनं यावत् दिननिचयैर्ग्रहतिथ्यादिक गण्यते तत् करणं नाम।

सिद्धान्तोदीरितो ह्यर्थो निजयुक्त्यैव बध्यते।
निखिलो यत्र तत् तन्त्रं निजोपकरणाश्रितम्॥
सिद्धान्तोक्तैकदेशास्तु केचिद् यत्र निरूपिता:।
तदुक्तं करणं नाम लघूपायविनिर्म्मितम्॥

साधारणेन सिद्धान्तस्कन्धो गणितज्योतिषपदेन, संहिता होरा-स्कन्धौ च फलितज्योतिषपदेन व्यपदिश्यन्ते। इदानीं भारतीय-ज्योतिर्विदस्तु उदरान्नसंग्रहार्थं प्रायश: फलवेदिन एव भवन्ति। सिद्धान्त-संहिता-होरानामकस्कन्धत्रयान्तर्गत संहिता-होरानामक-स्कन्धद्वय किञ्चिदधीत्य ते फलवक्तारो भवन्ति, सिद्धान्तस्कन्धे तेषा-माग्रहो नास्ति। केचन करणग्रन्थमाश्रित्य ग्रहस्फुटीकरण पञ्चाङ्ग-निर्म्माणमेव जानन्ति। सिद्धान्तग्रन्थस्य धनोपार्ज्जने अनावश्यकत्व-मेव मन्यन्ते।

युरोपनामकदेशे 'ग्यालिलिउ' नामक महोदयेन पृथिव्या भ्रमणं प्रचारितम्, किन्तु भारतगौरवेणार्य्यभट्टेन बहुशतवर्षात् प्रागेव स्वग्रन्थे पृथिव्या भ्रमण वर्णितं, उक्तञ्च तेन—

अनुलोम-गतिर्नौस्थः पश्यत्यचलं विलोमगं यद्वत् ।
अचलानि भानि तद्वत् समपश्चिमगानि लङ्कायाम् ॥

पृथिव्या आकर्षणमपि भास्कराचार्य्येण भणितं किन्तु आकर्षण-परिमाण न तेन निरूपितम्। 'निउटन' नामक-महोदयेन आकर्षण-परिमाणं निर्णीम्। युरोपदेशवासिभिः आकर्षण-गणित-साहाय्येन, ग्रहवेधोपयोगिनाम् उत्कृष्टतरयन्त्राणां साहाय्येन च नेप्चुन हर्शेल-नामकं ग्रहद्वयं निरूपित, तयो शुभाशुभफलमपि तद्देशीयफल-वादिभि ज्योतिर्विद्भिः स्थिरीकृत च। ज्योतिर्गणितनामकग्रन्थे नेप्चुन-नामकग्रहं वरुणपदेन हर्शेल-नामकग्रहं इन्द्रपदेन निर्दिश्य तयोर्गणनोपाय प्रदर्शितः। इदानीं गुणग्राहिभिः सत्यपक्षपातिभिः भारतीयनवीनज्योतिर्विद्भिरपि इन्द्रवरुणाभ्या फलं वर्ण्यते।

पुरा किल भारतीयज्योतिर्विदो गुणैकपक्षपातिन आसन्। यवनैरपि आविष्कृत सत्य तैः साग्रह स्वस्वग्रन्थे निबद्धं, तत् सर्वत्र परिगृहीतञ्च। ताजकशास्त्र यवनादेव गृहीतम्। पौलिशसिद्धान्त-रोमकसिद्धान्तनामकग्रन्थद्वयमपि यवनाना मतमवलम्ब्य रचितम्। धर्म्मशास्त्रेऽपि "अष्टौ च गर्गो यवनो दशाह" "न दोषमेवं यवना वदन्ति" "उत्तरवर्त्मनि सवितरि चूडाकरण जगुः शुभं यवनाः" इत्यादि-यवन-मतं गृहीतम्।

ज्यामितिशास्त्रसंग्रहकारेण जगन्नाथपण्डितेन आरवभाषया लिखित मेगास्थिनामक ग्रन्थमवलम्ब्य "सम्राट्सिद्धान्त" नामक-ग्रन्थो रचितः। उक्तञ्च तेन—

आरवीभाषया ग्रन्थो मेगास्थिनामकः स्थितः।
गणकाना प्रबोधाय गीर्वाण्या प्रकटीकृत ॥

ज्यामितिशास्त्रं हि ब्रह्मणा आविष्कृतं तत आर्य्यऋषिभिः पारम्पर्य्यवशात् भारते प्रचारितम् ।

शिष्टशास्त्रमिदं प्रोक्तं ब्रह्मणा विश्वकर्म्मणे ।
पारम्पर्य्यवशादेतदागत धरणीतले ॥
तदुत्सन्न महाराज-जयसिंहाज्ञया पुनः ।
प्रकाशितं मया सम्यग्गणकानन्दहेतवे ॥

जगन्नाथपण्डितसंगृहीते ज्यामितिशास्त्रे पञ्चदशाध्याया वर्त्तन्ते। एतेन ज्यामितेः सप्तमादयो दशमान्ताश्चतुरध्याया मिसरदेशान्तर्गत-सेकन्दरीयनगरे दग्धा इति यावनिकाना प्रवादः सत्यापलाप इति सूच्यते। वस्तुतस्तु पठनपाठनाभावाद् यथा अस्मद्देशे ज्यामिति-शास्त्रस्य विरलप्रचार आसीत् तथा तद्देशेऽपि पठनपाठनाभावादेव अध्यायचतुष्टयं दुष्प्रापमभूत्। इदानीं पठनपाठनातिशययोगेन तस्यातितरामौन्नत्यं जातम् ।

त्रिकोणमिति-गणितशास्त्रस्य चापीयगणितशास्त्रस्य च ( Plane Trigonometry and Spherical Trigonometry ) ज्ञान भारतीयसिद्धान्तकाराणा प्रतीयते। सूर्य्यसिद्धान्त-सिद्धान्तशिरोमणि प्रभृतिसिद्धान्तग्रन्थेषु राश्युदयकालसाधने, चरकालसाधनादिषु च त्रिकोणगणितस्य परिचयो ज्ञायते। तात्कालिकगतिसाधने तु भास्करस्य चलगणित ( Differential Calculus ) ज्ञानस्यापि आभासो ज्ञायते। युरोपीयैस्तु पठनपाठनात् राजसाहाय्येन च एतेषां बहुलोन्नतिः साधिता। इदानीं भारतीयसिद्धान्तगणित-शास्त्रादीना युरोपीयसिद्धान्तगणितशास्त्रादीनां सहयोगेन यदि भारतीयसिद्धान्तग्रन्थाना संस्कारो नूतनसिद्धान्तग्रन्थाश्च प्रणीयन्ते, तदा भारतीयज्योतिषशास्त्रस्योन्नतिः सुतरा भवितुमर्हति ।

अधुना देशेऽस्मिन् ज्योतिषशास्त्रैकदेशदर्शिनां सत्यपि प्रचार-प्राचुर्य्ये तेन परमार्थतः स्वार्थसिद्धिर्नैव सम्पद्यते, तत्त्वार्थबुभुत्सान्विस-

चेतसां सचेतसामित्यस्माक धारणा। कथमिति चेत् तत्रैव ब्रूमः। अधुना ज्योतिर्विदो यात्रादि-दिन-निर्णयादिना जन्मपत्रिकानिर्म्माणेन तथैवप्रकारेणैव कर्मान्तरेण कृतार्थानात्मनो मन्यमाना परितोष-मुपयान्ति, परन्तु ज्योतिषशास्त्रस्य येषु येषु अंशेषु महद्वैशसं समुप-स्थितं तेषा तेषामंशानां संस्कारे लेशतोऽपि न प्रवर्त्तन्ते। ग्रहाणां सस्थानानुसारेण गत्यनुसारेण च फलगणना सर्ववादिसम्मता। तद् ज्योतिर्विद्भि प्रथमतो ग्रहाणामवस्थिति गतिञ्च परिज्ञाय परतो गण-नायां प्रवर्त्तितव्यं, तथा प्रवर्त्तने च साफल्य सर्वथा सम्भवति। परन्तु अधुना ग्रहसस्थानमेव पूर्ववन्नास्ति, गतिशीलाना पदार्थानां बहुकाल व्याप्य एकरूपावस्थितेरयौक्तिकत्वात् युरोपवासिभिर्यन्त्रादिसाहाय्येन ग्रहान् प्रत्यक्षीकुर्वद्भिरेकरूपानवस्थितेः प्रमाणितत्वाच्च। न च यन्त्रा-दिना ग्रहावस्थितिर्न निर्णेतुं शक्यत इति वाच्यं, सिद्धान्तशिरोमणि-प्रभृतिषु प्रसिद्धग्रन्थषु यन्त्रादिना ग्रहसंस्थाननिर्णयस्य समुपदिष्टत्वात्, काशीजयपुरादिस्थानेषु ग्रहवेधनिदर्शिकाना वेधशालानामवस्थित त्वात्, ऋग्वेदादौ पुराणादौ च तथैव प्रमाणितत्वाच्च। तदेवमुप-दिष्टेऽपि ग्रहसस्थाननिर्णये तमननुसन्धाना अस्मद्देशीया हतभाग्या वराकाः चन्द्रसूर्य्यग्रहणादि-कालनिर्णये परमुखापेक्षिणो न लज्जन्ते, अथ च "सफल ज्योतिष शास्त्र चन्द्रार्कौ यस्य साक्षिणौ" इत्यादिना दम्भमपरिमेयं प्रकाशयन्ति इत्यहो किमितश्चित्रम्' तत्राप्यतिचित्रमेतत् यदसद्भूतां स्फुटचन्द्रिकामाकाशकुसुमकलिकामिव प्रमाणीकर्त्तु-कामाः साधारणान् प्रतारयन्ति, परितापयन्ति च हृदयं तद्रहस्य-विदाम्। तद् यावद्भारतीयज्योतिषशास्त्रानुसारेण यन्त्रादिव्यवहारतो यथायथं ग्रहसंस्थानादिकं न निर्णीयेत, तावद् धर्म्मकर्म्मणां लोपप्रसङ्गः, "विषादप्यमृतं ग्राह्यममेध्यादपि काञ्चन"मिति न्यायानुसारेण विदेशी-येभ्यस्तद्ग्रहणप्रवृत्तौ परमुखापेक्षित्वं दोषः, उभयानङ्गीकारे च ज्योतिषशास्त्रस्य सर्वथा वैफल्यं तेन च धर्म्मकर्म्मणा पूजादीना पिद्ध-

पिण्डादीनाञ्च वैफल्यं केन प्रतिरुध्यताम्। तत् श्रेयोऽर्थिना सनातन-धर्म्मावलम्बिनां संस्कारशैलीसमनुशीलनमन्तरेण नास्त्येव शरणमन्यत्।

कारुणिकाः शिष्टाः! इत्थं बहुधा विहितेऽपि चीत्कारसहस्रे केऽपि कर्णपात न कुर्वन्ति, तदद्यास्मिन् भारतीयमहासम्मेलने प्रायः सर्वदेशीयपण्डितप्रकाण्डा एवात्र समुपस्थिता भवन्तो भारतस्य भारतीयसनातनधर्म्मस्य च किमपि भावि कल्याण सूचयन्त आसते, तद् यथा ज्योतिषशास्त्रस्य समुपनता दुर्दशेय विदूरीभवेत् तन्निपुणं परामृश्य निर्णीयतामित्यभ्यर्थयामहे।

पश्चिमभारते राजकीय-( गवर्णमेण्ट ) संस्कृतपाठशालाया, भूम्य-धिकारिणा ( जमिदारप्रभृतीना ) संस्कृतपाठशालायामपि सिद्धान्त ज्योतिषशास्त्रस्य पठनपाठने विद्येते। अत्र वङ्गदेशे भूम्यधिकारिणा संस्कृतपाठशालाया न कुत्रापि सिद्धान्तग्रन्थस्य पठनपाठने स्त'। कलि-कातारजकीयसंस्कृतपाठशालायां पूर्वं ज्योतिषशास्त्राध्यापनं व्यव-स्थापितमासीदिति सर्व एव जानन्ति। अस्माकं प्रतिकूलदैवविड म्बनया तदधुना तिरोहितमिति तिमिरावृत इव विद्यालयोऽसौ दुःखाकरोति नवेतः। अधुना तु तेजःप्रसरसमुद्भासितभूमण्डलस्य शुभोऽयमादित्यस्योदयो मन्ये तत्तिमिरमचिरमेव दूरीकरिष्यतीत्यल-मतिशयावेशेन।

---

## श्रीकृष्णचरितम्

[ निबन्धकः—परिषदन्तेवासी श्रीहरेन्द्रकुमारगङ्गोपाध्यायः ]

इह खलु कलेः प्रारम्भे वर्णाश्रमधर्म्मरतानां द्विजानामतिशय-विषयभोगनिरततया शिथिलधर्म्मणा विवेकविज्ञाने सङ्कुचिते, मानव-धर्म्मस्य चाशेषग्लानिम्, अधर्म्मस्याभ्युत्थानञ्च सम्पश्यन्, तथा त्वक्त-

धर्मणां तामसप्रकृत्या स्वधर्मावलम्बिना निजधर्मनाशं शङ्कमानो, युधिष्ठिरप्रभृतीनां स्वयं धर्मतुल्यपूतचरितानां परित्राणाय, च्युतधर्मा-धर्मममहीनहस्वरूपकंसादिदुष्कृतां वधाय, धर्मसंस्थापनाय चाखिल-जगद्धाता ससोमबुद्धया परिमेयप्रभावोऽशेषरहस्यविज्ञोऽचिन्त्यवैभवो निखिलव्यापी मनुष्यचक्षुरन्तरालस्थितः सर्गस्थितिप्रलयव्यवहारहेतु-र्दिगन्तरालप्रसारिकीर्त्तिरानन्दमूर्त्तिर्विष्णु आचारनयधर्मयुक्तयो-र्मथुरास्थ-यदुवंशे देवकीवसुदेवयोः पुत्ररूपेणांशेनावातरद् भूतले।

अभूच्च तस्य जन्म कृष्णाष्टमीतिथियुक्तायां सूचीभेद्यघनतिमिरा-वगुण्ठितायां रजन्यामाकाशवाणीभयभीत-मूर्त्तिमदधर्मस्य मथुरा-धिपस्य कंसस्य कारागारस्थितयोः प्राग्जातषट्पुत्त्रमृत्युविदीर्णहृदययो राजभयादस्थिरचित्तयोर्देवकीवसुदेवयोः स्नेहप्लुतभुजच्छाये। भग-वत्यागत उत्साहदृढहृदय उद्भावितपुत्त्रनिरुपद्रवरक्षणकौशलः पुत्त्रेण सह स वसुदेवः प्रहरिभिरलक्ष्यमाणः केनाप्युपायेन तस्यामेव तमसा सह क्रीडन्त्यामष्टमीतिथिलालितायां विभावर्य्यामाकाश्चीप्रसारित-मथुरानगरीशिरःशोभां जलनिधिपतिसमागमोत्सुकां कोकिल कूजनकेकाध्वनिशब्दितकुञ्जवनभूषितवेलां केकानुकारिकलनादिनीं पुण्यप्रवाहिणीं कालिन्दीमुत्तीर्य्य गोपाध्युषितस्य गोपानां वेणुवादन-शब्दितगोपसुन्दरीमञ्जीरमधुररवमुखरितस्य गोकुलस्याधिपतेर्यशोदा-वल्लभस्य नन्दराजस्य गृहे राजपत्न्याः सूतिकागारमवाप्य यशोदापार्श्वे स्वपुत्त्रं श्रीकृष्णं संस्थाप्य च, तस्याः सद्योजातपुत्त्र्या सह स्वस्थानं प्राप। सा च यशोदासन्ततिर्वसुदेवस्य प्राग्जातपुत्त्राणां दशामेव प्राप्तवती, कृष्णस्तु गोकुले हरिदश्वदीधितिरनुप्रवेशाद् बालचन्द्रमा इव वृद्धिं पुपोष। गोकुले वसुदेवस्यान्यतमा पत्नी स्वपुत्त्रबलरामेण सह प्रति-वसति स्म। तत्र स कृष्णो भ्रात्रा सह गोपानां सहचारितां प्राप्य यमुनाकलनिनादध्वनितकूले बर्हिणां केकाध्वनिभिस्तथा कोकिल वधूनामाम्रकषायकण्ठनिःसृतमधुरस्वरलहरीभिरुपकूजितायां ताम-

रमशोभि वापीशोभिताया पुष्पस्तवकाभिनम्रै र्वातैनैषत्सञ्चालितैर्लता-दिभिरलङ्कृतायां वनानुकारिस्थल्या तैर्गोपादिभिः सह नानाविधक्रीडा-रसं भुञ्जानः शैशवकाल सुखेनानयत् ।

अथ कृष्णस्य शैशवकालेऽतीते, ते नन्दादिगोपा वृकभयेन व्याकुलं गोकुलं त्यक्त्वा हरित्पुष्पशोभितपुलिनशालि-काननादि-कालिन्दीकूले कोकिलकुलकूजितकुञ्जवनपरिपूर्णां, गोपकुलवेणुवादनशब्दिता, नाना-कुसुमभूषणसज्जितविशालचारुनयन-व्रजसुन्दरीगणसमलङ्कृता वृन्दा वनस्थलीमाप्ताः । तत्र गुणज्ञः स कृष्णोऽशेषगोपाना भिन्न-वृत्तीन्यपि मानसानि निजगुणबाहुल्येन सममेवाध्यवात्सीत् । स क्रमेण तेषा नितान्तप्रेमास्पदं सञ्जातः । अत्र यावत् स कृष्णो भ्रात्रा बलरामेण तथा तत्रस्थैर्गोपादिभिः सह आर्यीवनादिमलक्रीड़ारसं भुञ्जान आसीत्तावत्तेन कृष्णेनावगतकृष्णसंवादकुटिलकुशाग्रबुद्धेः कंसस्य सर्वे स्ववधोपाया निजबुद्धिकौशलेन विफलीकृताः ।

अथ स निजावतारस्यार्थे समस्तगोपसखित्वमुपेक्षमाण इव वृन्दा वनतो बहिर्जगाम । अनन्तर प्रजोत्पीडक-मथुराधिपतेः कंसस्य वधाय तत्रस्थैरुत्पीडितैर्यादववंशीयप्रकृतिभिः प्रचोदितः सन् तदानीं मथुरावास्तव्यः सभ्रातृकः स श्रीकृष्णस्तेषा यदुवंशीयानामिवार्थे दुराचारं कंसं निपात्य तद्बन्धनान्निजपितरौ मोचयित्वा भक्ति-पुष्पाञ्जलिना तयोश्चरणकमलान्यपूजयत् । ततो निजार्थे मथुरा-राज्याधिकारे विरुद्धशक्तिराहित्ये सति, तस्य च सामर्थ्ये विद्यमानेऽपि न्यायप्रयुक्तः स कृष्णो न्यायशीलमुग्रसेनमेव मथुराराज्येऽभिषिक्तवान् । ततश्च तौ रामकृष्णौ शरच्चन्द्रकिरणप्रवाहकल्प-गङ्गाजलप्रक्षालित-चरणकमलाया स्वर्णध्वजाञ्चलभूषित-मन्दिरभुजान्तरालाया मदन रिपुत्रिशूलधृताया वाराणस्यां सान्दिपनिमुनेराश्रममध्ययनार्थं मगच्छताम् ।

ततोऽध्ययनसमापनान्तरं स्वगृहमागतस्य प्रभूतबलसंयुक्त-

मगधाधिराज-कंसजामातृक-जरासन्धभीतिसङ्कुचितायाः मथुरानगर्य्या रक्षणार्थे नियुक्तस्य श्रीकृष्णस्य विपुलबुद्धिसाहाय्येन क्षुद्रैरपि यदुसैन्यैः मगधराजस्य बृहती सेना दूरीकृता, किन्तु तत्कृतेन पुनः पुनराक्रमणेनात्यन्तस्वजनक्षयहेतोर्व्याकुलहृदयः स कृष्णो मथुरानगरीं त्यक्त्वा, शैलसिन्धुसुरक्षिते जरासन्धसैन्यैर्दुर्गमे प्रदेशे द्वारकापुरीं निर्म्माय तत्र समस्तयदुकुलसहितैर्नूतनजनपदं रचयामास। तत्रोग्रसेने साधारणजनपालके सत्यपि कृष्णो हि तेषां प्रधान एवासीत्।

ततः पाञ्चालीस्वयंवरसभायामुपस्थितसमस्तराजवृन्देषु आत्मीय निग्रहाद्देशाद्देशान्तरमटत्सु ब्राह्मणवेषधारिषु पाण्डवेषु कृष्णा प्राप्तवत्सु तेषामसूयाप्रयुक्तास्तत्रागता बहुनृपा अर्जुनादिभिः सह तुमुलं सङ्ग्राममारेभिरे, किन्तु न्यायशीलोऽधर्माचारमसहमानः स कृष्णस्तान् सर्वान् धर्मार्थान् बोधयित्वा युद्धान्निवार्य्य च समस्तक्षत्रियकुलेषु प्रज्वलितयुद्धाग्निं निजबुद्धिप्रभावेण निर्वापितवान्; युधिष्ठिरादींश्च वसनभूषणशयनद्रव्यादिना संवर्द्ध्य द्वारकानगरीं प्राप्तः। यावत्ते पाण्डवाः सहायसम्पत्तियुक्ता आसन्, तावत् स कृष्णः पितृस्वसुः पुत्त्रानपि तान् पाण्डवान् प्रति न किञ्चिदपि साहाय्यं दत्तवान्, सहायविभववियुक्तानेव तान् कथमपि अनुसन्धाय तेषां तदानीमभावपूर्त्तिं चकार।

अथैकदा कस्मादपि कारणात् परिव्राजकरूपेण देशाद्देशान्तरं पर्य्यटन्नर्ज्जुनो द्वारकां प्राप्य परिव्राजकव्रते समाप्ते तत्र श्रीकृष्णोपदेशेन राक्षसविधिना तस्यैवानुजां सुभद्रामुपयेमे। कृष्णस्य एतत्कार्य्यं बहुभिः निन्दितम्, किन्तु नैतन्निन्दनीयं कर्म्म, यतः पुरा क्षत्रियेषु राक्षसविवाहो वैधः प्रशस्तः प्रचलितश्चासीत्।

ततः सुभद्रातनयाभिमन्योरुत्तरया सह विवाहकाले विराटनगरे स कृष्णः पाण्डवैः सह पुनर्मिलितोऽभूत्। तत्र दुन्दुभिनिनादैः,

पुष्पावनीगुम्फितैर्लताप्रवालभूषिते पुरतोरणे: ; निवेदितयादवसमागमै: पुरस्त्रीणामाचारलाजवर्षिभि: विवाहकर्मानुरूपविविधमाङ्गल्यध्वनिभि: , दानग्रहणभोजनानुरूपनृत्यगीतशास्त्रालापप्रभृति-नानाविधनिर्मलसुखदायकैर्मल्लयुद्धहयचालनाप्रभृतिभिर्द्दृश्यै: ,—एवंविधनानाह्लादजनकोत्सवैरभ्यर्थितास्ते सकल-नरपाला निरतिशयं सुखमापु: । विवाहोत्सवे सम्पन्ने तत्र समागता राजमण्डलो नष्टराष्ट्रान् पाण्डवान् पुन: स्वराज्ये प्रतिष्ठापयितुममन्त्रयत् , तेषां मध्ये सव एव पाण्डवसाहायकं कर्त्तुं धार्त्तराष्ट्रै सह युद्धाय तान् पाण्डवान् नोदयामास , किन्तु केवल: कृष्ण एव तान् सर्वान् येन उपायेन कुरुपाण्डवानां मध्ये सामदानाभ्यां सन्धि: स्थापितो भवेत्, स उपाय एवावलम्बनोय इति पुन: पुनरुपदिश्य स्वयमेव पाण्डवानां दूतरूपेण दुर्य्योधनसमोपमुपगम्य दुर्य्योधनादोन् सन्धिसूत्रं बोधयामास , परमेष दुर्वृत्तो युद्धं विना न किमपि श्रेयस्करमिति मत्वा सन्धिसूत्रमस्वोकृत्य च तं कृष्णमपि उपेक्षितवान् । दुर्य्योधनात्लब्धदुर्व्यवहारेण तेन कृष्णेन सबलेनापि तं दुर्य्योधनं प्रति किमपि न विरुद्धमाचरितम् ।

तत: कुरुक्षेत्रयुद्धारम्भे श्रीकृष्णचरित्रस्य पूर्णविकाश: । तत्र स कृष्ण: केवलनिजबुद्धिबलेनैव भीष्मप्रमुखात्मीयादीनां, द्रोणप्रमुखाचार्य्याणाञ्च बधे कर्त्तव्ये पराङ्मुखमर्जुन स्वयं भविष्यद्दर्शितया सकल भविष्यद्वार्त्ताम् ज्ञापयन्नेतद्युद्धकार्य्यं तस्य कर्त्तव्यमेव, अन्यथा पाप भागित्वमिति बोधयन् तं क्षात्रकर्मणि नियुक्तवान् । यावद्युद्धं विना कार्य्यसिद्धेरुपाय आसीत्तावत् स कृष्णस्तमेवावालम्बत । परं यदा स युद्ध भवितव्यमित्यमन्यत, तदा युद्धं यथाचिरेण समाप्तिमियात् तथा स आचरितवान् । युद्धे च समाप्ते तान् पाण्डवानात्मीयमृत्युशोकान्निवार्य्य शान्तेर्निरुपद्रवविमलभुजच्छाये युधिष्ठिरस्याभिषेकादीन् समाप्य तं स्वराज्ये प्रतिष्ठाप्य च निजालयं जगाम ।

सामान्यमानवमात्रस्यापि चरित्रस्य गूढत्वं नितान्त दुर्णिरूपम्। किं पुनः पुरुषोत्तमस्य श्रीकृष्णस्य षडैश्वर्य्यमहनीयचरित्रस्य? अतीव सङ्कीर्णबुद्ध्यादिगुणाः साधारणा मानवाः कथ तल्लोकोत्तरस्य गूढचरित्र-मवगम्यते? तत्तु सम्यगवगन्तुमशक्यमेव, परमंशेन साधारणमानव साध्यातीतमपि तदसीमगुणराशिगूढ़चरित्रमवगम्यते। "कृष्णस्तु-भगवान् स्वय"मिति एतद्देशवास्तव्याना विश्वासः। कृष्णः स्वय भग-वानासीद्वा नेति नास्माकमालोच्यविषयः। कृष्णो मानवरूपेण इहागतः अत एव स मानव एवासीदिति-बुद्ध्या लोकोत्तरचरित्रस्य तस्य चरित्रा-लोचनं कर्त्तव्यम्, यतस्तदसीमगुणयुक्तचरित्रस्य ससीमबुद्ध्यालोचन-मन्धस्य नष्टदृष्ट्या ग्रन्थाध्ययनमिव भवितव्यम्। तथापि अत्रैतत् स्मर्त्तव्य यद् ये ये एतद्देशवासिनो मानवा धर्म्मप्रचारका लोकोप-कारिणः पुरुषोत्तमा सञ्जातास्ते सर्वे एव भगवदंशसम्भूता अवतारा एव लोकेर्गण्यन्ते।

कृष्णचरित्रं तु द्विभागेन विभक्तव्यम्—लीलाविभागस्तस्य शैशव-कालीयजीवनवृत्तान्तस्तथा कर्मविभागस्तस्य शैशवान्तकालीयजीव-नेतिहास'। श्रीकृष्णचरितस्य लीलाविभागा बहुभिर्बहुविधा वर्णिताः, केचित् श्रीकृष्णचरित्रस्य सम्यगालोचनं विनैव कविवर्णिता-न्यालङ्कारिकवचनानि तथा प्रक्षिप्तविषयांश्चावगम्य कृष्णचरित्र दूषयन्ति; केचित् ग्रन्थसम्मता यावन्तो विषयाः सत्या इति विश्व-सन्ति, अपरे च कृष्णस्य वृन्दावनप्रवास मिथ्यैव मन्यन्ते, अन्ये च तस्य ऐतिहासिकसत्यताविषये सन्दिग्धा वर्त्तन्ते—एवंविधा अनेक रुचयो मानवा बहुविधं सिद्धान्तं विरचयन्ति।

अस्मिन् जगति मानवा बहुविधाः सन्ति। कतिपयमात्सर्य्य-परायणव्यक्तयः स्वदोषबाहुल्यान्निजप्रकृतिः सर्वत्रैव वर्त्तमानेति मन्य-मानाश्चन्द्रमसि कलङ्कमेव, सूर्य्यस्य केवल प्रखरोत्तापमेव; जलस्य प्लावनशक्तिमेव, निर्म्मलपुष्पलतादीनां कण्टकित्वमेव हि दोष

पश्यन्ति। उलूका यथालोकस्योपकारकत्वं नावगच्छन्ति, लोकोत्तर चरिता ईदृशाना मानवानां तथा प्रतिभान्ति। अत एव तेषां युक्तिर्न परिगणनीया। कृष्णस्य चरित्रमतीव दूषितचरित्रमिति यत्ते वदन्ति, तदप्राप्तयौवनकृष्णस्य विषये कथं प्रयोक्तव्यम्? यदि कोऽपि अतीव स्वभावसुन्दरो बालः साधारणमानवानां विशेषतः पुत्रवत्सलानां नारीणां तथा सवयसामपि नितान्तप्रेमास्पदं सञ्जायते, तदा किं स नितान्तदूषणीयचरित्र इति सिद्धान्तः कर्त्तव्यः?

ये तु कृष्णचरितविषयकसकललेखमालैव सत्येति मन्यन्ते तान् प्रत्येतदेव वक्तव्यं, कृष्णचरित्रवर्णिग्रन्थेभ्यः प्रक्षिप्तभाग वर्जयित्वा आलङ्कारिकभागस्य सारार्थग्रहणेनैव कृष्णचरित्र सङ्कलयितव्यमिति।

कृष्णस्य वृन्दावनप्रवासो मिथ्येति ये वदन्ति ते यदि पूर्वोक्तरीत्या सारसङ्कलनेन कृष्णचरितं पठेयुः, तदा वृन्दावनप्रवासोक्तिभिः कृष्णस्य परवर्त्तिजीवनैतिहासिकघटनावली न विरुध्यत इति स्पष्टं हि तैर्द्रष्टव्यम्। अत एव कृष्णस्य वृन्दावनप्रवासः समीचीन एव।

ये तु कृष्णस्य ऐतिहासिकसत्यताविषये जातसन्देहास्तेषां मते श्रीकृष्णचरितं कविकपोलकल्पितमेव। पुरावृत्तमवलम्ब्यैव पुराणानि विरचितानि। कृष्णचरित्रन्तु पुराणान्तर्गत पुरावृत्तमेव। किन्तु यद्यपि आदिमपुराणग्रन्थलेखकानां परवर्त्तिलेखकैः स्वलिखितग्रन्थाः क्वचित् पठिता भविष्यन्तीति मन्यमानैर्निजनामप्रकाशे आकाङ्क्षाशून्यैर्वा आदिमपुराणग्रन्थेषु स्वकपोलकल्पिता बहुनूतनविषयाः सन्निवेशिताः, तथापि पुराणग्रन्थेषु सत्यता नास्तीति वक्तुं कथं पार्य्यते? यस्य चरितवर्णनं विना पुराणस्य पुराणत्व हि न विद्यते, तस्यानैतिहासिकत्वं कथ प्रमाण्यते? पुनश्च कल्पनाकूर्चिकया काव्यपटे मानवचरितचित्ररञ्जनकोशलाः काव्यजगति वाचालाः कवयोऽपि ऐतिहासिकवार्त्तां विना अवाचाटा मूका एव प्रतीयन्ते। स्वेषां काव्यग्रन्थेष्वपि वर्णितचरित्रो जन ऐतिहासिको भवति।

यदि पाणिन्यादीनामैतिहासिकसत्यताविषये केषामपि सन्देहो न वर्त्तते, तदा कृष्णस्य ऐतिहासिकसत्यताविषये सन्देहस्य कारण नास्त्येव। पाणिनिव्याकरणसूत्रेण पुरा वासुदेव इति कोऽपि जन आसीदिति प्रमीयते, ततश्च कृष्ण इति कोऽपि जन' पुरा आसीदिति चावगम्यते। अत एव श्रीकृष्णोऽनैतिहासिको जन इति नास्माकं समीचीन प्रतिभाति। स कृष्ण ऐतिहासिक इति निश्चयः। स तु सार्द्धद्विसहस्रवत्सरात् पूर्वं अजायत इति पण्डितवराणां मतम्। गुणज्ञः स कृष्णः कृष्णोऽपि कामाधिकसुन्दरो मुक्ताधिकनिर्मल' पुण्याधिक-सकललोकप्रार्थनीयश्चासीत्, अत एव नारीजनसुलभ-पुत्रवात्सल्य-युक्ता वृन्दावनस्था. सकलगोपसुन्दर्योऽपि तमतीव आद्रियन्ते स्मेति न विचित्रम्, पुनरीदृशगुणज्ञस्य धर्म्मार्थे सकलशक्तिनियोजन मह-नीयचरित्रस्य लक्षणमेव। अधुना पुरा वा लोकोत्तरचरिताना चरित्रा-लोचनेन एतत् हि परिस्फुट भवति, यत् स कृष्णो लोकोत्तराग्रगण्यः तेषां मध्ये तस्य सूच्चस्थान वर्त्तते। गभीरतरालोचनेन तस्य जीवन-चरितस्य चिरनूतनगुणविकाशेन तस्य चरित्रम् उज्ज्वलात् उज्ज्वलतरं विकाशं गच्छति। एवंविधै मानवैः न केवल तात्कालिकमानवाना, पर तत्परवर्त्तिनामपि, महानुपकार. साधितः। यथा एतादृश मानवाना पदानुसरणेन किञ्चिदपि महत्त्व लभ्येत, तथा सर्वैरेव कर्त्तव्यम्। मानवहृदयसरसि प्रीतिपूर्ण-श्रीकृष्णस्मृतिसितपङ्कजानि यादृशानि जायन्ते, अनुगृहीतानामपि मानससरसि शतवर्षमध्ये भवानामपि बहुगुणज्ञानमहिमप्रभावशालिना नराणा स्मृतिश्वेत-पद्मानि न तादृशानि जायन्ते। मानससरसोऽमलसलिले विकाशित-प्रफुल्लायत-चारुचक्षु.कल्पकुड्मलानामिषा श्रीकृष्णस्मृतिपुण्डरीकाणा विमलसौरभेण सर्वेषा हृदयानि येनोपायेन मधुररसाप्लुतानि भवेयुः स उपाय एवावलम्बनीय इति।

---

# शिवाजिचरितम्

( पूर्व्वतोऽनुवृत्तम् )

[ निबन्धकः—श्रीकालिदासविद्याविनोदः ]

अथ राजसभां समेत्य स प्रथमो लोकहितैषिणां गुरुः ।
उपपत्तिमदायतिस्थिरं नृपमूचे वचनं हितं शुभम् ॥
स्वसुखं यदि भूप काम्यते तव राजत्वमिदं विडम्बनम् ।
अथ चेज्जगतः सुखैषणा सुरराज्यादिदमेव ते गुरु ॥
जनसेवक एव भूपतिः पतिनाम्ना ननु दासतोऽधमः ।
अपि दासजनो निजं प्रभुं भजते भूपतिरत्यसंख्यकान् ॥
लभते न कदापि विश्रमं सुरमुख्यो ग्रहराज एव यः ।
इति बोधयते स भूपतिं न च विश्रामसुखं तवास्ति भोः ॥
भविता सुतविप्रयोजनं यदि पित्रोरथ जीवतोः क्वचित् ।
नृपमेव तदापराधयेत् स्मर रामायणरामशासनम् ॥
ननु भारतवासि सज्जनो नृपतिं देववदेव मन्यते ।
अत एव नृपस्य न श्रमो निखिलं स प्रसहेत सर्वथा ॥
नृपतिर्यदि धर्म्महानिकृद् अथवा भोग-विलास-तत्परः ।
प्रकृतेर्विपदोऽप्युपेक्षते स नृपो राक्षस एव मन्यते ॥
जगदीश्वरता निरूपिता ननु दिल्लीश्वर आक्वराभिधे ॥
समदर्शितया प्रजाजने स महागौरवमेतदाप्तवान् ॥
धनजीवनरक्षणेऽपि यो भजते बाहुबलं न कुत्रचित् ।
निज-जीवनतोऽधिकां प्रियां हरतो दूरमुपैति भीतिमान् ॥
हत-भारतवर्षजं विना नहि दृष्टः पुरुषस्त्वयेदृश ।
हृतदारधनस्य दस्युभो रुदितं यस्य बलं हि केवलम् ॥

मरणं नियतं स्थितं नृणां समरे वाप्यथ रोगतोऽपि वा ।
समरे विजयोऽथवा मृतिरुभयं स्वर्गसुखाय कल्पते ॥
स्मर रोगमृतौ स्वयातनाः शतशस्ता नरकप्रदायिकाः ।
सहजा सुखकामना नृणामपि सा दुःखनिवृत्तिपूर्विका ॥
मरणं वद कीदृशं शुभं मनुजानां पुरुषार्थसिद्धये ।
स्वत एव भवेत् प्ररोचना तव सैन्यान्यपि शाधि सर्वदा ॥
तव भौतिकदेह एष यः स चिरं कालमहो न तिष्ठति ।
तव कीर्त्तिमयी तनुः शुभा न युगान्तेऽपि विलेष्यते क्वचित् ॥
कति भूपतयोऽत्र भारते निजदेहव्ययतोऽर्जितं यशः ।
तनुमेत्य वसन्ति सन्ततम् अपि प्रातः स्मरणीयतां गताः ॥
मधुसूदन-कृष्ण-वादिनो हर-बम्-बम्-शिववादिनोऽपरे ।
सकला युधि दुर्जया दृढाः सविशेषं सबलागणा इमे ॥
नृपते कृतवेदिनां वरा हरिसैन्याः शिवसैनिका यथा ।
कमलासहिता च कालिका शिवशक्तिः सकला त्वयि स्थिता ॥
निजभोगसुखेन मोहिता जननी-जन्मभुवावुपेक्ष्य ये ।
परपादमुपासते भिया पशवस्ते नरदेहधारिणः ॥
स्व-सनातनधर्मशासनान्नृप रक्ष्यास्तव सप्त मातरः ।
जननी धरणी च गौरिमाः सविशेषं वसुभिस्तथासुभिः ॥
तव पूर्वज-राजपुत्रकाः सुकिशोरा अपि बादलादयः ।
चिरकीर्त्तिशरीरमापिरे युधि हुत्वा क्षणभङ्गुरं वपुः ॥
ननु भारतवर्षवासिनो नियतं भोगविहीनमानसाः ।
चिरकीर्त्तिशरीरधारिणो दिवि हृष्टा अमराः सुखोषिताः ॥
अथ भारतवर्षरक्षणे विधिना प्रेरित एव यत्नवान् ।
स्वयमेव विधास्यते शुभं मम वाक्यं ननु पिष्टपेषणम् ॥
हत-भारतधर्मविप्लवं सुरगोविप्रवधैककारणम् ।
यवने रमणीगणाक्रमं स्वयमुन्मार्ष्यति पश्यतां मनः ॥

पुनरुक्ततया न दुष्यति प्रथितोन्मत्तवचो हि कुत्रचित् ।
तदियं भवति प्ररोचना ज्वलदग्नाविव वायुवृंहणम् ॥
हृदि सत्त्वगुणाश्रये तव यदि वैराग्यमुदेति वा सदा ।
विकलो न भवेः कदाचन स्मर राम प्रति तद् गुरोर्वचः ॥
निज-भोगार्थक-कर्म्म दुःखद परमात्म्ये यदि तत् सुखावहम् ।
जगदीश्वर एव सर्व्वदा हृदयस्थः सकलान्नियोजयेत् ॥
मनुजः खलु पापभाग् भवेत् अहमेतान् स्वयमेव हन्मि चेत् ।
मनुते परमेश्वरेऽर्पयन् नहि पापी भविता शुभाशुभम् ॥
न च शत्रुवधो मया कृतो न च राज्यं न च सर्वसम्पदः ।
त्वमिहेश्वर । यं निमित्तकं मनुसे राज्यमथास्य सम्पदः ॥
इति सन्ततमेव धारयन् मनसा योद्धमनाः सदा भव ।
अपि साधय साधयेप्सितं सकलान् नाशय धर्म्मविप्लवान् ॥
परधर्म्मविनाशतत्परा यवनाः सर्वश एव शत्रवः ।
न विजापुरभूप एकतो न हि दिल्लीश्वर एकतोऽपि ते ॥
उभयं युगपत् समाकुलं यदि चाक्रामति भूरिसैन्यभाक् ।
तदिहैकतरेण सोपधिं कुरु सन्धिं जहि तेन चापरम् ॥
प्रथमोदयभाजि भास्करे शशिरेखा दिवि दृश्यते यथा ।
अपरस्त्वयि वर्त्तता तथा परतः सर्वजयो भविष्यसि ॥
भजते मृदुता क्वचिन्नृपः समये तीव्रतमो भवत्यसौ ।
निजतेजसि गाढमुन्नते परतेजः सहते न नीतिमान् ॥
धर्म्मयुद्धमथवा प्रवञ्चनं पात्रभेदकविधिद्वय पृथक् ।
आर्य्यशास्त्रमधिकृत्य वर्त्तते पादमर्पय न शास्त्रतो बहिः ॥
धर्मयुद्धमशठे विधीयते वञ्चनञ्च शठ वैरिणि स्मृतम् ।
प्रायशो नहि भवेत् शठेतरा म्लेच्छजातिरवधीयतां सदा ॥
लोहवर्म परिधेहि सर्वदा चारचक्षुरपि सन् स्वचक्षुषा ।
पश्य सर्वविषय विशेषतो विश्वसिह्यथ निजं न चात्मजम् ॥

देहभोगपरिलुब्धमानसो मानुषो यदि भवेत् प्रलोभितः ।
किं न कर्त्तुमथ शक्नुयात्तदाऽरङ्गजेव इव तातपीड़नम् ॥
राज्यरत्नरमणीरथादिकासक्तिहीनमथ मानसं कुरु ।
ईश्वरार्पणधिया न कर्म्मणा बध्यसे न युधि पापभागसि ॥
एवमेवमुपदेशमालया गीतया भगवता यथार्ज्जुनः ।
बोधितो विजयभागभूद् भुवस्त्वं तथैव विजयी भविष्यसि ॥
त्वत्कृते कृतमिदं शुभास्पदं शास्त्रसम्मतमधर्म्मनाशनम् ।
दासबोधमधिगत्य चेतसा सर्वकर्म्म कुरु शान्तिमाप्स्यसि ॥
दीव्यन्तो दिवि ये च कर्मफलदाः स्युर्देवराजादयो
भूदेवा भुवि ये चरन्ति नियतं धर्मं शुभैः कर्मभिः ।
गावो भूचरखेचरा ऋषिगणा यज्ञव्रताचारिणः
सर्वे त्वा शिवभूपते विजयतामित्याशिषा युञ्जते ॥

---

## योगरहस्यम्

[ निबन्धक —साधनसमरप्रणेता ]

### अथ योगानुशासनम् ॥१॥

शृण्वन्तु विश्वे अमृतस्य पुत्राः ।

अथेति मङ्गलार्थकमव्ययम् । प्रत्यूहप्रतिरोधाय शास्त्रादौ तत्प्रयोक्तव्यम् । यथोचिताश्रमधर्म्मानुष्ठाने तत्परस्य पुरुषार्थ सिसाधयिषोः अतएव एव योगे प्रवेशाधिकारः सिद्धः । योगरहस्यमतिगहनमनधिकारिपतितमरण्यरोदनमिवानर्थक्यमापद्येत । योगो मिलनं स च वक्ष्यमाणद्रष्टृदृश्ययोरेकत्वरूपः । ननु प्रकाशतमसोरिव विरुद्धस्वभावयोर्द्रष्टृदृश्ययोश्चिज्जडयोरेकत्वं कल्पशतेनापि न सम्भाव्यते

इति, मेवमेतयोः विरुद्धतापाततः प्रतीयमानापि न पारमार्थिकी। तथाहि तमो न प्रकाशविरोधि यत्किञ्चित् किन्तु प्रकाशाल्पत्वमेव, एवं जडत्वेन प्रतीयमाना चिदेव जडाख्यामाप्नोतीत्यनयोर्मिलन सिन्धु-बिन्द्वोरिव सुकरं स्वाभाविकञ्चेति। अत एव न योगाङ्गेषु परिपठितः समाधिर्योग इति। योगस्यानुशासनं योगानुशासनं शेषे षष्ठी। पुरुषार्थसाधनं योगस्तथा तदङ्गानि योगजिज्ञासूनामवश्यज्ञातव्या-न्यन्यानि चात्रानुशिष्यन्त इति प्रतिजानीते।

**योगश्चित्तवृत्ति-निरोधः ॥२॥**

प्रतिज्ञातमादौ ताटस्थ्येनावतारयति योग इति। यतश्चित्तस्य वृत्तीनां निरोध स योग इत्यर्थः। वृत्तिनिरोधस्य चित्तपरिणाम-रूपत्वान्न योगत्वम्। तत्र तु योगशब्दप्रयोगो मन्त्रयोगादिवदौप-चारिकः। युज्यत एकत्वमापद्यत इति योगो नित्यसिद्ध एकात्म-प्रत्ययरूपः। स चाविद्याजन्यद्रष्टृदृश्यादिरूपभेदप्रत्ययावसानकरः, अद्वयबोधानन्दस्वरूप इति परत्र विशदयते। ततश्च योगोदयेऽ-विद्याया निवृत्तौ तत्कार्याणां चित्तवृत्तीनां सुतरां निरोधः। बाधितानुवृत्तिदर्शनाज्जीवन्मुक्तस्य नैकान्ततः, कैवल्यं गतस्य तु पुनरुत्थानासम्भवादैकान्तेनैव निरोधः।

न च विनापि योगमेकात्मप्रत्ययरूपः प्रत्याहारादिप्रक्रियाविशेषे-णापि वृत्तिनिरोधः सम्भवतीति वाच्यं, तत्राभावप्रत्ययालम्बनाऽज्ञान-प्रत्ययालम्बना वा वृत्तिर्वर्त्तत एवेत्यन्वयव्यतिरेकतोऽस्य तटस्थता सिद्धा।

---

# गुरुशिष्यसंवादः

( पूर्वतोऽनुवृत्तः )

[ निबन्धकः—श्रीशरत्कमलन्यायस्मृतितीर्थः ]

## गर्भाधानसंस्कारतत्त्वम्

प्रथमशिष्यः। गर्भाधानसंस्कारस्य लक्षणमुपयोगित्वं तत्र च विहित-वारतिथिनक्षत्रलग्नादोन्यवगतानि सर्वाणि ; षोडश-रात्रय ऋतुस्ताद्दशसमय एव गर्भग्रहणयोग्य इत्य-प्यवगतम्। सम्प्रति कियति वयसि नारीणां ताद्दशस्य ऋतोः प्रवृत्तिनिवृत्तिश्च स्यातामित्यवगन्तुमिच्छामः।

ऋतुयोगादि-कालनिरूपणम्

गुरुः। श्रीमता जिज्ञासितव्यो विषयो व्याख्यात आयुर्वेदशास्त्रेण, यथा—

"द्वादशाद् वत्सरादूर्द्ध्वमापञ्चाशत् समाः स्त्रियः।
मासि मासि भगद्वारा प्रकृत्यैवार्त्तवं स्रवेत्॥"

"द्वादशा"दिति ऋतोः प्रवृत्तिसमयः, "आपञ्चाश"दिति निवृत्ति-समयः कथितः। एतत्तु प्रायिकाभिप्रायेणोक्तं ताद्दशसमयात् पूर्वपरकालयोरपि तस्य प्रवृत्तिनिवृत्तिदर्शनात्। अत एव

"दशमे कन्यका प्रोक्ता अत ऊर्द्ध्वं रजस्वला।"

इत्यादि स्मृतिरुपपद्यते। "प्रकृत्यैव" इत्यनेन भगवदिच्छातः स्त्रीणां ताद्दशसमये रजोयोगवियोगौ स्वाभाविकावित्यवधात-व्यम्, नहि स्वभावः केनाऽपि पर्य्यनुयोक्तुं शक्यः। तदेतत् सुष्ठु वर्णितं कविना—

"उपदिशति कामिनीनां यौवनमद एव ललितानी"ति॥

ततश्च यौवनोपचयाऽपचयकालनियमेन रजःप्रवृत्तिनिवृत्ति-

कालोऽवगन्तव्य इति फलितम् , स एव काल प्रायिकाभिप्रायेण पूर्वोक्तवचनेन प्रकाशित इति बोध्यम् ।

द्वितीय शिष्यः । शुक्रशोणितसंयोगादावर्त्तते गर्भ इति व्युत्पादितं गुरुपादेन । स गर्भो यत्र शेते वर्त्तते च प्रसङ्गतस्तस्य गर्भाशयस्य स्वरूपमवगन्तुमिच्छाम ।

गुरुः । श्रूयताम्—गर्भाशयस्य स्वरूपमेतद् व्युत्पादितमायुर्वेदशास्त्रेण, यथा—

गर्भाशयस्वरूप कथनम् ।

"शङ्खनाभ्याकृतिर्योनिस्त्र्यावर्त्ता सा प्रकीर्त्तिता ।
तस्यास्तृतीये त्वावर्त्ते गर्भशय्या प्रतिष्ठिता ॥
यथा रोहितमत्स्यस्य मुखं भवति रूपत ।
तत्संस्थाना तथारूपा गर्भशय्या विदुर्बुधाः ॥"

अयमर्थः—शङ्खनाभिवत् स्त्रीयोनेरप्यावर्त्तत्रय वर्त्तते, तत्र तृतीये खलु आवर्त्ते प्रतिष्ठिता गर्भशय्या "यत्र गर्भः शेते"—इति व्युत्पत्त्या तत्स्थानस्य "गर्भाशयः" (१) "गर्भशय्या" (२) इति वा नाम प्रसिद्धम्। तस्या गर्भशय्यामुख रोहितमत्स्यस्येव भवति। तथाहि यथा रोहितमत्स्यस्य स्थितिर्जले भवति, तथा पित्ताशयपक्वाशयमध्ये गर्भशय्यायाः स्थितिर्भवति , रूपमपि तस्येव भवति—यथा रोहितमत्स्यस्य मुख स्वल्पमाशयस्तु महान् तद्वदित्यर्थः ॥

तृतीयशिष्य । गर्भाशयस्वरूपमवगतम्। सम्प्रति गर्भावतरणप्रकारः श्रोतव्यः ।

गुरुः । श्रीमतां श्रवणीयो विषयो व्याख्यात आयुर्वेदेन, यथा—

गर्भावतरणप्रकार- कथनम् ।

"कामान्मिथुनसंयोगे शुद्धशोणितशुक्रजः ।
गर्भः सञ्जायते नार्य्या स जातो बाल उच्यते ॥
ऋतौ स्त्रीपुंसयोर्योगे मकरध्वजवेगतः ।
मेढ्रयोन्यभिसङ्घर्षाच्छरीरोष्माऽनिलाऽहृत ॥

पुंसः सर्वशरीरस्थं रेतो द्रावयतेऽथ तत् ।
वायुर्मेहनमार्गेण पातयत्यङ्गना-भगे ॥
तत् संसृत्य व्यात्तमुखं याति गर्भाशयं प्रति ।
तत्र शुक्रवदायातेनार्त्तवेन युतं भवेत् ॥"

अयमर्थः—कामवशाद् दम्पत्योः सति सम्प्रयोगे नार्य्याः शुद्धशोणित-शुक्रजो गर्भो जायते, यथाकाले जातः स "बाल"—इत्युच्यते। अत्र मिथुनसंयोग इति दृष्टकारणमुक्तम्। सत्यपि मिथुन-संयोगे गर्भानुत्पत्तिदर्शनाद् दम्पत्योः सन्तानोत्पत्त्यनुकूल-मदृष्टमीश्वरेच्छादिकारणमप्यदृष्टमवगन्तव्यम्।

शुक्रशोणितयोः शुद्धत्वविशेषणेन शुक्रशोणिताभ्यामशुद्धाभ्यां गर्भानुत्पत्तिर्बोध्या, तयोश्च शुद्धाशुद्धत्वे नियमाऽनियमाभ्या-माहारविहारयोः प्रत्यक्षत एवोपलभ्येते। अपि च दुष्टरोगादि नापि भवति शुक्रशोणितयोरशुद्धिः, तादृशरोगः खलु यथेच्छा-चरणात प्रायश परिलक्ष्यते। ततश्च शुभसन्ततिकामिना सर्वमेतद् विमृशता गर्भाधानं कर्त्तव्यमिति मन्तव्यम्।

"ऋतौ"—इत्यनेन अनृतौ गर्भानुत्पत्तिरिति तादृशसमये गर्भाधानं निषिद्धम्, ततश्चैतत् स्मृतम्—"पर्ववर्जमृतौ व्रजेत्"।

सम्प्रयोगेन मिलितशुक्रशोणिताभ्यां गर्भोत्पत्तिप्रकारं वर्ण-यति—"मेढ्रे"ति तथा च—दम्पत्योस्तादृशसम्प्रयोगक्रियया पुंसः शारीरोऽग्निरनिलेन शारीरेणाहत सन् सर्वशरीरस्थं निसर्गकठिनमस्तधातुं घृतमिव लौकिकाग्निर्द्रवरूपतामापा-दयति, ततो द्रवरूपतामापन्नः स धातुस्तादृशेन वायुना चालितः स्त्री-योनौ निपतन् वायुनैव विवृतमुखं गर्भाशयं नीत-स्तत्रत्येन स्त्रिय आर्त्तवेन (रजोरक्तेन) मिलितो गर्भोत्पत्ति-मारभत इत्यर्थः। तत्र प्रत्यक्षं क्षीरस्य नवनीतं यथा मन्थन-दण्डेनाहतं तरलाकारमापन्नमुद्धृतं परिलक्ष्यते, तथा दम्पत्योः

सम्प्रयोगक्रियया प्रत्यक्षं सर्वशरीरस्य. स्वभावकठिन एषो ऽमृत-धातुस्तात्त्वशवाताग्निभ्यामुत्थाप्यमानस्तरलतामापन्नः परिदृश्यत इति शारीरतत्त्वविदा सिद्धान्तो वेदितव्यः।

प्रथमशिष्यः। यदुक्तं गुरुपादेन सर्वमेव विदित तत्। पूर्वोक्तदिशा गर्भाशयगत आर्त्तवमिलितोऽमृतधातु' प्रथमादिमासभेदेन यथा शिरःपाण्यादिमज्जीवरूपतामाप्नोति साम्प्रतं तथा व्याख्यायताम्।

गुरुः। व्याख्यात एव श्रीमता जिज्ञास्यो विषय श्रुत्या, यथा—
"ऋतुकाले सम्प्रयोगादेकरात्रोषितं कलल भवति। सप्तरात्रोषितं बुद्बुद भवति। अर्द्धमासाभ्यन्तरेण पिण्डो भवति। मासाभ्यन्तरेण कठिनो भवति। मासद्वयेन शिरः सम्पद्यते। मासत्रयेण पादप्रदेशो भवति। अथ चतुर्थे मासे गुल्फजठरकटिप्रदेशा भवन्ति। पञ्चमे मासे पृष्ठवंशो भवति। षष्ठे मासि मुखनासिकाऽक्षि-श्रोत्राणि भवन्ति। सप्तमे मासे जीवेन संयुक्तो भवति। अष्टमे मासे सर्वलक्षणसम्पूर्णो भवति"—इत्यादि। (कृष्णयजुर्वेदीयगर्भोपनिषदश्चतुर्थमन्त्रस्य प्रथमभागः) मिलित-शुक्रशोणितस्य जरायुयन्त्रस्थ अवस्थाविशेष एव कलल इति नाम्ना व्यपदिश्यते; तथाचाऽमरः—"गर्भाशयो जरायुः स्यादुल्बञ्च कललोऽस्त्रियाम्" इति श्रुतिनिगदव्याख्यातमन्यत्। नवमो मासो दशमश्च प्रसवकालो व्याख्यातो महर्षियाज्ञवल्क्येन, तथाचोक्तं तेन—

गर्भस्य शरीरिरूपता-वर्णनम्।

"नवमे दशमे मासि प्रबलैः सूतिमारुतैः।
निःसार्य्यते बाण इव जन्तुश्छिद्रेण सज्वरः॥"

गर्भप्रसवकाल वर्णनम्।

नवमदशममासौ प्रायिकाभिप्रायेणोक्तावित्यवधातव्यं, तत्पूर्वपरकालेऽपि प्रसवदर्शनात्। लोकप्रसव-रीतिमनुसृत्यैतदुक्तमिति बोध्यम्, अत एव व्यासशुकादीनामलौकिकानां पुराण

शास्त्रवर्णितस्तादृश प्रसवोऽलौकिक उपपद्यते। एतत् सुव्यक्त-माह आयुर्वेद', यथा—

"नवमे दशमे मासि नारी बालं प्रसूयते।
एकादशे द्वादशे वा, ततोऽन्यत्र विकारतः॥"

अत्रेदमवधातव्यम्—गर्भस्य शरीरि-रूपताप्राप्तौ पूर्वोक्तगर्भोप-निषत्कथितप्रकाराद्दृश्यते किञ्चित् पार्थक्यमायुर्वेदे। तथा-चाह आयुर्वेदो, यथा—

गर्भस्य शरीरिरूपता प्राप्तौ आयुर्वेदमतम्।

गर्भाशये निपतितं यादृक् शुक्रं तथार्त्तवम्।
तादृगेव द्रवीभूत प्रथमे मासि तिष्ठति॥ १
मरुत्पित्तकफैस्तत्स्थैः पच्यमानो द्वितीयके।
कललस्थमहाभूत-समुदायो घनो भवेत्॥ २
तृतीये मासि शिरसो हस्तयोः पादयोस्तथा।
पिण्डिकाः पञ्च सिध्यन्ति सूक्ष्माङ्गावयवास्तनोः॥ ३
सर्वाण्यङ्गान्युपाङ्गानि चतुर्थे स्युः स्फुटानि हि।
हृदयव्यक्तभावेन व्यज्यते चेतनापि च॥ ४

...

तस्माच्चतुर्थे गर्भस्तु नानावस्तूनि वाञ्छति।
ततो द्विहृदया यत् स्यान्नारी दौहृदिनी मता॥ ५

. ... . ...

पञ्चमे मानसं षष्ठे बुद्धिर्याति प्रबुध्यते।
सर्वाण्यङ्गान्युपाङ्गानि भृशं व्यक्तानि सप्तमे॥
ओजोऽष्टमे सञ्चरति मातापुत्रौ मुहुः क्रमात्।
तेन तौ म्लानमुदितौ स्यातां, जातो न जीवति॥
न जीवत्यष्टमे जातस्तत्रौजो न स्थिरं यतः॥
नवमे दशमे मासि नारी बालं प्रसूयते।
एकादशे द्वादशे वा, ततोऽन्यत्र विकारतः॥"

प्रथमशिष्य.। उक्तेनायुर्वेदशास्त्रेण गर्भोपनिषच्छास्त्रस्य यत् पार्थक्य, तत्रभवता तद् व्याख्यातव्यमिदानीमस्माभिः श्रोतव्यम्।

गुरुः। सुष्ठूक्तम्। व्याख्यायते श्रूयताम्। गर्भोपनिषदि—"मासाभ्यन्तरेण कठिनो भवति"—इत्युक्तम्, अत्र तु—"तादृगेव द्रवीभूत प्रथमे मासि तिष्ठति"—इति कथितम्।

आयुर्वेदोपनिषद्वचनयो पार्थक्य विकृति।

गर्भोपनिषन्मते "मासद्वयेन शिरः सम्पद्यते", आयुर्वेदमते द्वितीयमासि—"कललस्य महाभूत समुदायो घनो भवे"दिति भेदः। तृतीय चतुर्थमासयोः गर्भावस्था ग्रन्थद्वयेन प्राय एकविधैव वर्णिता। आयुर्वेदमते चतुर्थे मासि गर्भस्य चैतन्यमभिव्यज्यते, गर्भोपनिषन्मते तु—"सप्तमे मासि जीवेन संयुक्तो भवती"ति भेद। पञ्चमे पृष्ठवंशः, षष्ठे मुखनासिकाऽक्षिश्रोत्राणीत्युपनिषन्मतं, आयुर्वेदमते तु पञ्चमे मनः, षष्ठे बुद्धिप्रबोध इति पार्थक्यम्। सप्तमे मासि गर्भस्य चैतन्यसञ्चार इत्युपनिषन्मतम्, आयुर्वेदमतन्तु "तत्र सर्वेषामङ्गानाञ्च भृश व्यक्तते"ति भेदः। सर्वमन्यदेकरूपमिति विचार्य बुध्यताम्।

द्वितीयशिष्य'। स्यादेतत्। गर्भस्य पुस्त्रीनपुंसकरूपताप्राप्तौ कारणमिदानीं श्रोतव्यम्।

गुरुः। श्रूयताम्। तथाचात्र गर्भोपनिषन्मन्त्रः—

गर्भस्य पुरुषादिप्राप्तौ कारणकथनम्।

"पितू रेतोऽतिरिक्तात् पुरुषो मातू रेतोऽतिरिक्तात् स्त्री, उभयोर्बीजतुल्यत्वान्नपुंसको भवति।"

एतदेव सुस्पष्टं व्याख्यातमायुर्वेदेन यथा—

"आधिक्ये रेतसः पुत्रः कन्या स्यादार्त्तवेऽधिके।
नपुंसकस्तयोः साम्ये यथेच्छा पारमेश्वरी॥"

"यथेच्छा पारमेश्वरी"—इत्यनेन गर्भस्य तत्तद्रूपादिप्राप्तौ परमेश्वरेच्छैव बलवत्कारणं बोध्यम्। ततश्च रेतस

आधिक्येऽपि कन्या, आर्त्तवस्य आधिक्येऽपि पुत्रस्तथा उभयो-र्वीजतुल्यत्वेऽपि पुत्रो वा कन्या वा भवितुमर्हति, यदि स्यादीश्व रेच्छा तदनुकूलेति फलितमवगन्तव्यम्। एवञ्च रेत-आदीनामाधिक्यादिवशात् गर्भस्य पुंस्त्रीनपुसकरूपताप्राप्ति-रिति दृष्ट कारण बोध्यम्। बलवददृष्ट कारणन्तु तत्र परमेश्व रेच्छा दम्पत्योस्तथा गर्भस्थजीवस्य तथाभूतमदृष्टमिति ध्येयम। ततश्चाऽत्र पित्रादिनाऽदृष्ट यथा तदनुकूलं स्यात् तथा प्रवर्त्तितव्यम्। अत एव गर्भाधानसंस्कारस्याऽङ्गत्वेन ग्रहयज्ञादिहोमादीना कीर्त्तनं शास्त्रकृद्भि' सुष्ठूपपद्यते।

---

## वकदूतम्

[ निबन्धकः—महामहोपाध्याय. ✓अजितनाथन्यायरत्न ]

सङ्ख्यातीतैर्जलचरगणै' सेविते पुण्यशालि-
ग्रामोपान्ते क्वचन सरसि द्रौपदीव द्वितीया।
प्राय' पत्युश्चिरविरहतो दु'खिनी क्षीणकान्ति-
रास्ते साध्वी किल रसमयी पद्मिनी नाम काचित्॥
शीते चास्तं गतवति नभोमण्डले निर्म्मलेऽस्मिन्
मन्दं मन्दं वहति कुसुमामोदयुग्-गन्धवाहे।
चिन्तामग्ना सुरभिसमये सैकदा क्रौञ्चमेकं
दृष्ट्वा हृष्टा मधुरवचनैः स्वागतं व्याजहार॥
त्वं जानीहि प्रियमधुकरो जीवनं मे द्वितीयं
महौर्भाग्यात् चिरपरिचितं देशमित जहौ स'।
सम्प्रत्यास्ते कलसज-मुनेः कुत्रचिद् दिगविभागे
एतच्चित्रं दश दिश इमास्तन्मय लोकयामि॥

वक्रः पन्था द्रुतजिगमिषोर्यद्यपि स्यात् तथापि
गन्तव्यं ते द्विजवर । पथा धर्म्मदाया नगर्य्या ।
चित्रं चित्रं कति कति नवं वस्तुजातं विलोक्य
साफल्यं ते कुरु खगपते । नेत्रयोर्जन्मनश्च ॥

क्रमशः ।

---

## संस्कृतपत्रिकेतिहासः

बहूनि नाम व्यतीतानि हायनानि गीर्वाणगिरा सामयिकपत्रप्रचारस्यादिमप्रयत्नात् । न चाद्यपर्य्यन्तं भारतभूखण्डस्य तेषु तेषु प्रदेशेषु प्रकाशं नीताना संस्कृतसामयिकपत्राणाम् अल्पीयसी संख्या । पत्रप्रचारकाणां सौभाग्यविशेषस्याक्षीणतया तेषु पत्रेषु कानिचनाद्यत्वेऽपि प्रचरन्त्येवोपलभ्यन्ते । परं भूयांस्येव कालमाहात्म्याद् वा साधारणानामनुरागशैथिल्याद् वा बहोः कालाद् विलोपमुपगतानि केवलं प्राचीनै कैश्चिद् नामतः स्मर्य्यमाणानि स्वीय कादाचित्कास्तित्वं प्रमापयन्ति । अचिरेणैव च कालेन तानि नाममात्रशेषतामप्यनधिगच्छन्ति विस्मृतिपथमेवालङ्करिष्यन्तीत्यत्र न संशयो लेशतोऽपि वरीवर्त्ति । पाण्डित्यभूयिष्ठानि वा साधारणदुर्बोधानि वा भवन्तु नामैतानि पत्राणि संस्कृतप्रोज्जीवनकृतमानसानां मनीषिमहत्तमानाम् अनल्पप्रयत्नपरम्पराया निदर्शनभूतानीमानि नूनमेव भारतेतिहासालोचननिपुणानां परमप्रेमनिदानानि भवेयुः । भारतीयसामयिकपत्रेतिवृत्ते च साधारणासुबोधानामपि संस्कृतपत्राणामस्त्येवोपयोग. सुमहान् । आङ्गलराज्याधिकारकाले च भारतेषु संस्कृतालोचनप्रसङ्गे नवीनोऽयं संस्कृतपत्रप्रचारप्रयत्नो विशेषेण समुदेति सुधियां मानसपटेषु ।

परं नितरामत्र दुःखाकरमेतदेव नो यत् आस्तां नामितःपर्य्यन्त प्रकाश गमितानां भूयसा पत्राणां सम्यग् विवरणम् संस्कृतपत्रस्यादिमप्रचारकालो वा प्राचीनतमसंस्कृतपत्राभिधान वा न ज्ञायते प्रायेण सर्वैः। न च सम्भाव्यते एतादृश ज्ञानकृते संस्कृतपत्रेतिहासस्य कस्यचित् प्रकाशनात्।

एवञ्च भूयासमेवाभिलक्ष्योपयोग प्रस्तूयते संस्कृतपत्रेतिहासः कश्चित्। न चास्य सम्यक् सम्पादनम् एकेन सुकरं सम्भविता। नैकः सर्वमर्हति ज्ञातुम्। बहूनामुपलब्धे साहायके ईदृशेतिहासप्रणयनं सम्यक् भ्रमपरिशून्यञ्चार्हति भवितुम्। एतदर्थञ्च वय सर्वानेव संस्कृतसाहित्यपरिषत्सदस्यानेतत्पत्रिकावाचकान् परिषदनुग्राहकांश्च साञ्जलिबन्धमभ्यर्थयामो यथा, ते यथावसर सत्वरमेव स्वविदितसंस्कृतपत्राणां विवरणानि सानुकम्पं प्रेषयन्तु परिषत्कार्य्यालये, येन सर्वाणि तानि विवरणान्येकीकृत्य परमोपयोगि संस्कृतपत्रेतिहासनिर्म्माण सम्भाव्यते। आशास्महे नात्र वयं हताशा भवेम। अधोनिर्दिष्टेषु विषयेषु विशेषविवरणमपेक्ष्यतेऽस्माभिः।

१। प्राचीनतमसंस्कृतपत्रिका नाम—सम्पादक-नाम—प्रकाशस्थान—प्रकाशकालादिकम्।

२। अन्येषा पत्रिकाविशेषाणा विशेषतोऽप्रचरद्रूपाणा नाम—प्रकाशस्थान—प्रकाशकाल—स्थितिकालादिकम्।

न चैतद् वक्तव्यमुत्तामप्रासङ्गिकं भवेद् यत् प्रस्तुते इतिहासे सहायकाना सर्वेषामेव नाम सन्निवेशित स्यादिति।

विनीतनिवेदक

श्रीचिन्ताहरणकाव्यतीर्थः एम्-ए

सहसम्पादकः—संस्कृतसाहित्यपरिषदः।

---

# भक्ताेच्छ्वास.

[ निबन्धक—श्रीपञ्चाननतर्कवागीश ]

रक्तासारपतत्प्रतप्तरुधिरैर्धाराक्तसपातितै-
कीर्त्ति-श्रीयुत-देवरोधि-बलवद्-दैवारिमुण्डावलेः।
युद्धव्यापृतदुर्मुखी रणमुखे रक्ताब्धिखेलन्मुखी
सा श्यामा परमा भवार्त्तिशमना पायात् सदापायतः॥
दंष्ट्रा-भीषणलोचनत्रयवता दण्ड जटा बिभ्रता
खट्वाङ्ग शशिन' कलाञ्च शिशुना कालेन धूम्रेण च।
वक्रोत्क्षिप्तसुदृश्यजानुतनुना कान्तेन शान्तेन च
प्रेताकारहरोपरिस्थितवता रक्ताब्धि-वासोभृता॥
सानन्द विपरीतरीतिरतिका हन्तीव विश्व स्वनै-
र्विद्याद्या बहुभिर्हिताथिमनुजैर्जप्ता मनु' पूजिता।
कान्तारे वरमन्दिरे सुतिमिरे घोरे श्मशाने वने
सा श्यामा परमा भवार्त्तिशमना पायात् सदापायतः॥
विध्वस्तासुरराजि-राजित-शिरःश्रेणीकबन्धैर्वृते
रक्तौघे द्रुतसन्तरद्रुतपिवत्क्रोष्टुस्वनान् भीषणान्।
श्रुत्वा हास्यपरायणा त्रिनयना रक्ताक्ष-रक्तानना
सा श्यामा परमा भवार्त्तिशमना पायात् सदापायतः॥
यज्ज्ञान स्मृतिरूपतामपि गतं गेहे वने निर्ज्जने
प्रेताङ्गज्वलितेन्धनैः परिगते घोरे श्मशाने निशि।
चित्त भीतियुतं करोति सतत प्रेतैर्वृता तादृशैः
सा श्यामा परमा भवार्त्तिशमना पायात् सदापायतः॥
यद्भूषा भयदा शरीरनिचयः कोशोच्चयो भीषणो
यत्पूजा विहिता प्रचण्डरजनौ चाण्डालदेहे सता।
दोषेदूषितकाल आत्मनिधने घोरासने साध्यते
सा श्यामा परमा भवार्त्तिशमना पायात् सदापायतः॥

# संस्कृतसाहित्यपरिषत्कृत्यविवरणम् *

( १८१६ खृष्टीयाब्दतः—१८२७ खृष्टाब्द यावत् )

[ अनुवादकः—श्रीविष्णुपदभट्टाचार्य्यः बि ए ]

प्रायेण सभ्याना द्विशतो समादाय षोडशाधिकोनविंश-खृष्टाब्दे प्रतिष्ठितेयमासोत् संस्कृतसाहित्यपरिषत्। प्रथमे वर्षे द्वात्रिंशदधिक-द्विशतमुद्रारूपस्तावदायः परिषदि जात इति तदीयप्रथमद्वायनीय-कार्य्यविवरणपत्रतोऽवगम्यते। अनाडम्बरोपक्रमां सकललोकहित-साधिनीं शनैः शनैः सुतरामुन्नतिमधिगच्छन्तीमिमाम अधुना भार-तीयाः वैदेशिकाश्च सममेव समादर-सरसेन चेतसा मुग्धदृश पश्यन्ति। परिषत्कार्य्यप्रीतैर्माननीयैर्वङ्गशासकैः ( Bengal Government ) अभ्युदयार्थमस्याः आब्दिकवृत्तिव्यवस्था कृता। कलिकातानागरिक-सभया ( Calcutta Corporation ) चतुष्पाठीपरिचालन-पुस्तक-सङ्ग्रहप्रभृत्यर्थं सांवत्सरिकवृत्तिर्दीयते। विभिन्नप्रादेशिकशासकाधीन-शिक्षाविभागाः ( Education departments of different Provincial Governments ) मानार्हा देशीयभूपतयश्च (Native Princes) परिषद दानादिभिः प्रतिदिन परिवर्द्धयन्ति। सार्द्धैकसहस्र-संख्यकसभ्यशोभितेयमिदानीं संस्कृतसाहित्यपरिषत्, पञ्चशताधिक द्वादशसहस्रमुद्रात्मकः साम्प्रतिको वार्षिक आयः। सन्ति परिषत्-कार्य्याणा विभिन्नविभागाः। ते यथा :—

१। पुस्तकालय-विभागः तत्र—(क) मुद्रितपुस्तकानि, (ख) हस्त-लिखितपुस्तकानि च।

---

* परिषदोऽन्यतमेन सहसम्पादकेन श्रीमता चिन्ताहरणकाव्यतीर्थ एम्-ए महोदयेन लिखितादाङ्गलभाषानिबद्धविवरणादनूदितमेतत्।

२। पुस्तकप्रकाशनविभाग.।
३। मासिकपत्रिकाविभाग।
४। चतुष्पाठीविभागः।
५। संस्कृतरूपकाभिनयविभागः।

---

## पुस्तकालयः

(क) मुद्रितपुस्तकानि—संस्कृतमूलग्रन्थबहुलत्रिसहस्र-संख्यकपुस्तकैः समलङ्कृतोऽयं परिषत्पुस्तकालयः। वर्त्तन्ते चास्मिन् भारतीयविभिन्नप्रादेशिकभाषाविरचितपुस्तकानि। मन्ये नास्ति वङ्गेष्वीदृक् संस्कृतपुस्तकभूयिष्ठः पुस्तकालय इति ज्ञात्वा विद्वज्जनैरय-मभिनन्द्यते। देशीय-विदेशीयपुस्तकक्रयणेन वर्षे वर्षे विवर्द्धतेऽस्य शरीरम्। कलिकातानागरिकसभया ( Calcutta Corporation ) पुस्तकक्रयणार्थमाब्दिकसाहाय्य प्रदीयते।

(ख) हस्तलिखितपुस्तकानि—परिषत्पुस्तकालये संस्कृत-भाषामयाणां वङ्गभाषात्मकानाञ्च हस्तलिखितपुस्तकानां प्रकृष्ट-सग्रहो विद्यते। तेषां ग्रन्थानां केचित् न केवलं दुर्लभाः परं त्वन्यत्रा-विज्ञाताश्च। परिषदः अन्यतमसहसम्पादकैः एम्-ए, काव्यतीर्थोपाधिकैः श्रीमच्चिन्ताहरणचक्रवर्त्तिमहोदयैः षड्विंशाधिकोनविंशखृष्टाब्द यावत् सङ्गृहीतानां हस्तलिखितपुस्तकानां विबुधोचितसंक्षिप्तपरि-चयो भारतीयैतिहासिक-त्रैमासिकपत्रे (द्वितीयसंख्यायाम्) ( Indian Historical Quarterly Vol. II pp 866—9 ) प्रकाशितः। तेनैव च वङ्गीयसाहित्यपरिषत्पत्रिकायां ( ३४श खण्डे ) संस्कृत-साहित्यपरिषत्पुस्तकालयस्थितानां हस्तलिखितवङ्गभाषाविरचित-पुस्तकानामपि संक्षिप्तपरिचयो दत्त.। प्रयत्नस्तेषां प्रकटयति परिषदः

सग्रहगौरवम्। हस्तलिखितपुस्तकानां सुविस्तृतविवरणम् अचिरेण प्रकाशयिष्यते।

अर्थैः सहृदयकृतोपहारैश्च हस्तलिखितपुस्तकानामागमो जात। अधो महात्मनाम् अमीषा हस्तलिखितपुस्तकदातॄणा नामानि संकीर्त्यन्ते।

१। श्रीभावाजारवास्तव्यपरलोकगत-महाराज कमलकृष्णदेव-वाहादुरसगृहीतहस्तलिखितग्रन्था. कुमार-श्रीप्रफुल्लकुमारदेववाहा-दुरमहोदयै सदयमुपहृताः

२। स्वर्गतभूकैलासनिवासि-महाराज जयनारायणघोषाल-संगृहीत हस्तलिखितपुस्तकानि श्रीमद्भि सत्यधेनुघोषाल वार एट्-ल महोदयैरुपहृतानि।

३। वङ्गवैष्णवग्रन्थवहुला: स्ववशज सगृहीतहस्तलिखितग्रन्थाः श्रीमद्भिः कृष्णचन्द्रवसु-महोदयैः समुपहृताः।

४। परलोकगतै. पण्डितप्रकाण्डै सतीशचन्द्रसिद्धान्तभूषण-पादैः स्वसगृहीतहस्तलिखितग्रन्थाः प्रदत्ताः।

५। श्रीमद्रामपदचट्टोपाध्याय एम्-ए, महोदय-प्रदत्तेषु पुस्तकेषु कानिचिदद्याप्यविज्ञातानि वङ्गहस्तलिखितपुस्तकानि विद्यन्ते।*

शास्त्रसम्मतविद्यार्ज्जनविश्रुतविविधस्थानेभ्यो हस्तलिखितपुस्तक-संग्रहो जात। स्थाननामानि यथा :—वाशवेरिया, इलसावा च—हुगलीजिलायाम्। मेमारि—वर्द्धमानजिलायाम्। ब्राह्मणगञ्ज—यशोहरजिलायाम्। सातक्षीरा—खुलनाजिलायाम्। धानुका, कोटालिपाडश्च—फरिदपुरजिलायाम्।

## पुस्तकप्रकाशनम्

सत्यपि विरलप्रकाशितपुस्तकप्रकाशनोद्देश्येऽर्थाभावादेकविंश-त्यधिकोनविंशखृष्टाब्द यावत् प्रकाशनकार्य्यं किमपि न जातम्।

* इदानीमेव रङ्गपुराख्यस्थानादासादितानि कानिचनामूल्यानि हस्तलिखितपुस्तकानि।

द्वाविंशत्यधिकोनविंशखृष्टाब्दे परिषत्पुस्तकावल्याः प्रथमसंख्या प्रकाशिता, तत प्रभृति सुचारुरूपेण प्रकाशनकार्य्यं प्रचलति। अद्य यावदष्टादशसंख्यकानि पुस्तकानि प्रकाशितानि। एम्-ए, काव्यतीर्थोपाधिकैः श्रीमन्निखिलनाथचक्रवर्त्तिभिः परिषत्प्रकाशितपुस्तकानां संक्षिप्तपरिचयो भारतीयैतिहासिकत्रैमासिकपत्रे ( प्रथमसंख्यायाम्) (Indian Historical Quarterly Vol I P 781—3 ) प्रकाशित.। परिषत्प्रकाशितपुस्तकानि बहुमन्यन्ते भारतीयाः इउरोपीयाश्च पण्डिताः। भूयसो प्रशंसा च कृता परिषद्ग्रन्थावलीनां विभिन्नासु पत्रिकासु।

वङ्गशासक-(Bengal Government) दत्तवृत्तिद्वारेण साधारणदानेन च प्रकाशनव्ययनिर्व्वाहो भवति। प्रकाशनमनुकूलयितुं यैर्यैश्च महात्मभिरर्थदानादिकं कृतम्, अधस्तात् तेषां नामान्युल्लिख्यन्ते।

१। श्रीयुक्त-श्यामसुन्दरघोषः।

२। श्रीयुक्त-ज्योतिर्म्मयसेनः।

३। माननीय-प्राड्विवाकः श्रीमन्मथनाथमुखोपाध्यायः एम् ए, विएल्।

४। श्रीयुक्त शरदिन्दुविश्वासः वि-ए।

५। डाक्तार-श्रीविमलाचरणलाहा एम् ए, वि एल्, पि-एइच्-डि।

६। श्रीयुक्त यतीन्द्रनाथवसु एम् ए, वि-एल्।

---

## मासिकपत्रिका

सप्तदशाधिकोनविंशखृष्टाब्द यावत् संस्कृतसाहित्यपरिषत्पत्रिका यथाक्रम प्रचलति। केवलमियमेव सर्वजनप्रिया संस्कृतपत्रिका नियतक्रमेण प्रकाशिता भवति, प्रसारोऽप्यस्या विद्यते निखिल-

भारते। संस्कृतभाषया आर्य्याणां प्रयोजनान्तरं तिष्ठतु वा नवा, धर्म्मकार्य्यार्थं तु तेषां संस्कृतज्ञानम् अवश्यप्रयोजनीयमिति ज्ञात्वा संस्कृतभाषाप्रचारकामेयं परिषत्पत्रिका। बहुमन्यते चेयं पत्रिका विद्वद्भिः, ग्राहकास्त्वस्याः पत्रिकाया भारतस्य विभिन्नप्रदेशीयाश्छात्राः विद्वांसश्चापरे च। कोचिन-महीशूरशासकाभ्यां (Cochin and Mysore Governments) तथाच मध्यप्रदेशस्य शिक्षाविभागाध्यक्षैः (The Director of Public Instruction, Central Province) उच्चविद्यालयानां संस्कृतपुस्तकालयानाञ्च व्यवहारार्थम् इयं पत्रिकानुमोदिता। केचन स्थानीयशासकाः (Local Governments) आसाम-संस्कृतसम्मेलनञ्च (Assam Sanskrit Association) विद्यालयादिषु वितरणार्थं ग्राहकपदमध्यासतेऽस्याः पत्रिकायाः।

## चतुष्पाठी

छात्राणां संस्कृताध्ययनायास्त्यवैतनिकी चतुष्पाठी। अस्य आचार्य्यपदं माननीयैः पण्डितप्रवरैः श्रीयुक्तकालीपदतर्काचार्य्यैरलङ्क्रियते आदितः प्रभृति। प्रायेण द्विशतसंख्यकाश्छात्राः कलिकातापण्डितसभायां ढाका-सारस्वतसमाजानुमोदितेषु च विविधसंस्कृतपरीक्षासु सफलकामा जाताः। तेषु केचन केचन गुणानुसारेण पुरस्कृताश्च। नन्विदमेव शोच्यं यदर्थाभावादद्यापि प्राचीनरीत्या विद्यार्थिभवनादिकम् अस्माभिः प्रतिष्ठापयितुं न शक्यते। भारतीयपुरातनशास्त्रालोचनादीनां संरक्षणं यद्यस्माकमिष्टं तर्हि प्राचीननियमेन विद्यार्थिभवनादिकम् अस्माभिरवश्यं प्रतिष्ठापयितव्यम्।

## संस्कृतरूपकाभिनयः

संस्कृतरूपकाभिनयप्रचेष्टेयमस्याः परिषदः केवलम् आर्य्यगौरववाहिन्याः संस्कृतभाषायाः प्रचाराय, भारतीयपुरातननाट्यकलानु-

शीलनोज्जीवनार्थञ्च। स्वप्रचेष्टायां सफलकामेयं परिषदित्यत्र नास्ति संशयावकाशः। विविधसंस्कृतरूपकाभिनयेन रङ्गप्रेक्षका अविदित-संस्कृताः संस्कृतशास्त्र वाग्यामस्या सुराणा बद्धानुरागा जाताः। भास-शूद्रक-कालिदासप्रभृतीना कविकुलकिरीटभूताना प्रख्यातानि पञ्च-दश रूपकाणि, आधुनिककवीन् प्रोत्साहयितुं तेषामपि कानिचित् नाटकानि परिषत्सदस्यैर्विभिन्नेषु साधारणरङ्गेषु परिषदो रङ्गे चाद्य यावत् प्रयुक्तानीति शम्।

---

## समालोचनम्

### गीताय मुक्तिवाद

श्रीअमरीकान्तकाव्यतीर्थेन प्रणीतमिदं पुस्तकं १४७।ए सख्यक आहिरीटोलाष्ट्रीट् इत्याख्यस्थाने प्राप्तव्यम्। मूल्य रूप्यकमात्रम्।

समालोच्यमानमिद पुस्तकं सर्वशास्त्रसारभूताया भूरिप्रचाराया: श्रीमद्भगवद्गीताया आध्यात्मिकव्याख्यारूपमिति सर्वथाभिनन्दनीय-मिति नास्ति संशयलेशोऽपि। ग्रन्थकारेण च श्रमविशेषमङ्गीकृत-मस्य प्रणयनविधावालक्षयाम'। प्रभिन्नप्रस्थानाना दर्शनादिशास्त्राणा-मङ्गीकृतेषु विषयेषु वाह्यालोकेन विभिन्नवत् प्रतीयमानेष्वपि वस्तुतो विभिन्नायनता नास्तीति लौकिकदिशा प्रतिपादयितुमत्यरिच्यत प्रचेष्टा तत्रभवता ग्रन्थकाराणाम्। प्रशंसनीयसमुद्यमस्तत्रभवान् ग्रन्थकार: सानन्दमस्माभिरभिनन्द्यते, प्रार्थ्यते च इतः परमपि तत्रभवता एवंविधा-न्येव पुस्तकानि मुद्रणशुद्धिविधाववहितेन प्रकाशयितव्यानीति।

---

# नैघण्टुकधनञ्जयसमयः

[ समालोचकः—श्रीचिन्ताहरणकाव्यतीर्थ' एम्-ए ]

आन्ध्रगीर्वाणपरिषत्सभापतिना श्रीमता वीरराघवाचार्य्यमहोदयेन विरचितस्य आन्ध्रेतिहासानुसन्धानपत्रिकायां प्रकाशं गतस्य* चास्य निबन्धस्य प्रतिलिपिः समधिगतास्माभिः। निबन्धनिर्मात्रा चात्र नाममालेत्यपराभिधानस्य धनञ्जयनिघण्टोस्तथा राघवपाण्डवीयापरसञ्ज्ञस्य 'द्विसन्धान' काव्यस्य रचयितुर्धनञ्जयस्य राजशेखरकवेः प्राक्तनत्व राघवपाण्डवीयाख्यप्रसिद्धग्रन्थकर्त्तु' कविराजस्य दण्डिनश्चार्वाक्तनत्व प्रकटय्य ७५० खृष्टीयाब्दपरवर्त्तित्व ८०० खृष्टीयाब्दपूर्ववर्त्तित्व चास्य निरणायि प्रमाणपरम्पराविन्यासपुरःसरम्। 'काव्यालङ्कारसूत्रवृत्ति' कारात् वामनादपि कविराजस्य यत् प्राचीनत्व सूचित निबन्धकेन तत् प्रमाणान्तराणि सुतरामपेक्षते। आशास्महे प्रतिश्रुते कविराजसमयनिरूपके निबन्धे तानि साकल्येनोपस्थाप्येरन्। 'कवेर्धनञ्जयस्येद सत्कवीना शिरोमणि। प्रमाण नाममालेति श्लोकाना च शतद्वयम्' इति कुतत्योऽयं श्लोक इति जिज्ञासवो वय निबन्धकान्तिके।

---

* *The Date of Nighantuka Dhananjaya* by S E V Vira Raghavachariar in Journal of the Andhra Historical Research Society Vol II

## परिषत्सन्देशः

पुस्तकप्राप्तिः—अमन्दमानन्दकारणमद्य पारिषदानां समुपनत यत्—महामतीना वर्त्तमानसम्पादकानां यत्नातिशयेन रङ्गपुरवास्तव्यैः पण्डितवर्य्यैः-श्रीयुक्त-कालीचरणभट्टाचार्य्यमहोदयै रुपहृतानि कानिचन प्राचीनहस्तलिखितपुस्तकानि परिषदो हस्तलिखितपुस्तकालय गुणगौरवेण संख्यागौरवेण च समेधयन्ति। तानि चातीवोपयोगीनि वेदान्तस्मृतिकाव्यव्याकरणभूयिष्ठानीति सप्रमोदमावेद्यते।

---

## भ्रममार्ज्जनम्

विगत १८५० शकाब्दीय वैशाखात् प्रभृति अस्यां पत्रिकायाम् आङ्गलमासनिर्द्धारणविधौ कश्चिद् भ्रमो मुद्राकरप्रमादात् संशोधकैश्च संस्कृताभिज्ञैरेकदेशदर्शितया समुपेक्षणादद्य यावत् प्रचरतीति सत्रपमत्रभवद्भ्यो निवेदयाम'। स च वैशाखमासीयपत्रिकायां "मे (May) इति भवितव्ये "अप्रैल" (April) इति भूतमिति, तदाद्येवाषाढ यावत् स भ्रम आसीदनुस्यूतः, पुनरद्य श्रावणात् प्रभृति संशोध्यते, तेन च "जुलाइ" (July) इति नामाक्षराङ्किता पत्रिका ग्राहकैरापातदृष्ट्या अनुपलभ्यमानेव प्रतीयमानापि परमार्थतः पुनरधिगतपूर्व्वेति निपुणदृशा समुन्नेयम्।

# संस्कृतसाहित्यपरिषत्

इय सस्कृतसाहित्यपरिषत् प्रतिभा रवेः।
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम् ॥

१८५० शकीये भाद्रे ११श वर्षस्य ५म-सख्या


## श्रीकृष्णजन्माष्टमी

[ निबन्धक —श्रीयोगीन्द्रनाथस्मृतिसाङ्ख्यतीर्थः ]

दूर्व्वाश्यामलशालिकृष्णवसना कृष्णाभ्रमालाधरा
पृथ्वी कृष्णपयोधराद्रिगहना कृष्णेव कृष्णागमे ।
कृष्णस्थूलपयोधराम्बरधरा कृष्णाङ्गिनी कृष्णभा
प्रेम्णा कृष्णविलासिनीव रजनी कृष्णं भजेत् साम्प्रतम् ॥१
मृद्गन् कंसवनं प्रमत्तपवनो गर्व्वेण किं वात्यसौ ?
मेघो वर्षति किं तदालयलयं कर्त्तुं सवज्रस्वनम् ?
कंसध्वंसनिदानदर्शनमनाः संवीक्ष्य रात्रौ तदा
स्वस्थानं किमपेत्य याति यमुनातीरे शिवाऽध्वप्रदा ॥२
भाद्रेऽस्यामसिताष्टमीनिशि दिशि प्रोद्भासिकृष्णच्छवि
ज्योतिः किञ्च सविग्रहं समुदितं स्वाङ्के नयन् यत्नतः ।
स्नेहाशङ्कितमानसः प्रतिपलं स्मृत्वा च कंसागमं
रक्षोपायमनुस्मरन् समभवत् कर्त्तव्यमूढो वसु. ॥३
ज्ञात्वैव भगवान् वसु कथितवानाकाशवाण्या तदा
"का चिन्ता नय गोकुलं जनक ! मा कन्याञ्च तामाहर"

श्रुत्वैवानकदुन्दुभिर्वच इद क्रोडे सुतं त वहन्
कंसायानभिया गृहान्निरगमच्चक्षु क्षिपन् सर्वतः ॥ ४
निर्गत्यैव पथि स्वदुःखनिवहं वर्षोद्भवं नान्वभूद्
धृत्वा त्वङ्कतले सुत मन इव त्रस्तो ययौ गोकुलम् ।
तत्रानन्तफणी फणाः शिरसि तच्छत्र दधौ पृष्ठतो
नास्मिन् किञ्चिदचिन्त्यरूपचरिते चित्रं भवे सम्भवेत् ॥५
आयातो यमुनातट स परितो दृष्टिं ददौ यत्नतो
नो दृष्ट्वा परपारसङ्गतिगति नैराश्यमागाद् भृशम् ।
वातोत्तालतरङ्गसङ्गतजवा भीमा नदीय पुरो
हा हा ! कि विदधेऽत्र क्वापि तरणी नास्तीति चिन्ताकुल. ॥६
हंहो ! यस्य करे भवार्णवगतिर्भीत स नद्या गतौ
सम्भाव्य तरिनाविकं परतटेऽत्युच्चैः समाकारयत् ।
नैवायाच्च तदुत्तर न च जनः शून्या च दिक् केवलं
वाताघातवशात् प्रतिध्वनिरभूत् कंसात् स भीतस्ततः ॥७
किन्त्वेकाग्रमना य ईशशरण गच्छेद् विपन्मुक्तये
भक्तारक्तमना दधौ गतिविधिं तन्मुक्तये माधवः ।
तस्मात्क्वापि शिवा शिवार्थमगमत्पादेन तत्तुं नदी
भीमा ता नवनीलनीरदरुचि यस्या वसुर्व्याकुल ॥८
कालिन्दीसलिले तया च शिवया चिक्रन्तु यातं मुदा
वातोद्भूततरङ्गसङ्गतजवैर्नो तद् बबाधे तदा ।
तद्दृष्ट्वानकदुन्दुभिर्मुदमगात्तज्जानुदघ्नं पयो
मन्ये नैव शिवा परं शिवदया तार्य्या नदीयं पदा ॥ ९
इत्थं दैवनिदर्शनादिव शिवासन्दर्शितं विक्रमं
संश्रित्य प्रयतः पर रविसुतातीर निशीथे वसोः ।
हस्तात् स न्यपतच्छिशुस्तदुदके यो देवकीनन्दन
कालिन्दीहृदये मुदं जनयितु पूर्वप्रतिज्ञाश्रितः ॥१०

हा हा । मे किमभूत्कथ हृतसुत स्वामित्यमुच्चैर्लपन्
क्लान्तो भ्रान्तमना: करेण स्मृगयन् प्राप्त. सुतं मायिनम् ।
स्वस्थस्तीरगतस्तदा स विक्ता दृष्ट्वा तथा सूर्य्यजा
सच्चिन्त्योत्तरणं सुताधिगमनं प्रापत्परं विस्मयम् ॥११
प्राप्तो गोकुल-गोकुलेश्वरपद स्वस्वच्छ चित्त यथा
दत्त्वा दृष्टिमितस्तत सुनिभृत यातो यशोदागृहम्।
रात्रावेव तदा प्रसूय तनयां सुप्ता यशोदेह या
तस्याः क्रोडगतं विधाय तनय तन्नन्दिनीमाददे ॥१२
कालक्षेपणमत्र नोचितमितो यायामवुद्ध परै·
प्रागादानकदुन्दुभि सचकित कन्या दधानस्ततः ।
कारागारमुपेत्य निद्रितभट चित्रप्रभ सर्वत
स्तस्यै तां प्रददौ यया हि कथिता ऽ सस्य नाशश्रुतिः ॥१३
यावत् स श्रुतवान् प्रसूततनया सा देवकीति स्वन
तावद् गर्भवधाय दुर्मतिरगात् कसः स कारागृहम् ।
तामालोक्य सुता परामिव शिवा हन्तु यदोपक्रमे
'हन्ता ते भुवि गोकुले तनुमधात्' सोक्त्वेवमन्तर्दधे ॥१४
तच्छ्रुत्वा स्वविनाशिकृष्णमनसा चिन्ताग्निभृच्चेतसा
त्यक्ताऽस्मिन् क्षतिभीतिसम्भववशात् कसेन सुप्तिर्यदा ।
कसाधारणभारहारिहरिणा प्राधिष्ठितं गोकुल
सान्द्रानन्दसुधाम्बुधौ च भुवनं मग्नं भवेत्तत्क्षणात् ॥१५

य. पूतनामरणलब्धविशेषकीर्त्ति-
र्यद्देवशोभनमुपैति यशोदया च ।
यज्जन्मलाभजपदं तिथिरेति साथं
नाथो यदोरथ रघोस्तनुता शिव स ॥१६

---

# संस्कृतसाहित्यपरिषदो द्वादशवर्षीय-
# कार्य्यविवरणम्

[ निबन्धकः—परिषत्सम्पादकः श्रीअमरेश्वरठाकुर-
वेदान्तशास्त्री एम् ए ]

सर्वनियन्तुर्भगवतश्चरणकमलं भूयो भूयः संस्मरन् परिषदोऽस्याः समनुरक्ताननुग्राहकान् संवर्धकांश्च सदस्यान् सहायकांश्च सविनयमभ्यर्थयन् तथान्यानपि महानुभावान् कृपया समुपस्थितान् सभाजनान् यथायोग्यं नतिप्रीतिभिः समभिनन्दयन् विगतद्वादशवर्षीयकार्य्यविवरणमस्याः समासेन वाचयितुमहमुद्युक्तः।

चराचरस्थितिरियं यस्य खलु सर्वशक्तिमतो महिमानं प्रकटयति, तस्यैव परमकारुणिकस्यापारकरुणयैव संस्कृतसाहित्यपरिषदपि अविगणय्य नानाविधं विघ्नजातमनुदिनमनुगतानां जातिगतां धर्मगतांश्च समुन्नतिं ससाधयन्ती सक्लेशहर्षमतोत्य द्वादश वर्षाणि त्रयोदशे वर्षे पदं निदधाना वर्त्तते। आलोच्ये द्वादशे वर्षे यानि यानि विधेर्दुर्विलसितानि परिषदोऽस्याः सम्पतितानि, तानि प्रायः सर्वेषामेवात्रभवतां सुविदितान्येव।

तत्र प्रथमतो यः खलु परिषदोऽस्याः पतिरिवासोदन्यतरसम्पादको ज्ञानमानादिभिः समलङ्कृतो लोकललामभूतया कान्त्या पशुपतिरिव पशुपतिनाथोऽशेषविद्याविनयादिसद्गुणविभूषितो व्यवहारज्ञस्तथा कलालापकोमलश्च सोऽयमत्र भवान् सपदि स्वविवर्द्धितामिमां विहाय परिषदं स्वर्लोकं प्रति प्रस्थित। यस्यासाधारणकार्य्यपाटवेन परिषदियमद्य सर्वेषामेव जनानां दर्शनपथमापतितुं प्रभवति, समग्रे च भारते वर्षे केनाप्यभिनववस्तुरूपेण प्रतिष्ठामासादिता, हा दैवदुर्विलसितम्, सोऽयं पशुपतिनाथोऽकाल एव कालकवले निपतितः। न

केवलं परिषदि किन्तु यत्र स छात्ररूपेणाध्यापकरूपेण च वैशिष्ट्यमर्जयन् प्रथितनामासीत् तत्र विश्वविद्यालये, तथान्येष्वपि प्रतिष्ठानेषु यत्र यत्र तस्य सम्बन्धोऽघटत तत्र सर्वत्रैव तस्याकालतिरोधानेन कोऽप्यभावस्तीव्रतयानुभूयते।

द्वितीयोऽपि तावदद्वितीय एव विपत्पात'। यः खलु पितेवोत्पत्तिनिदानभूत' प्रतिपालकश्चासीदस्याः, यश्चाशैशवादिमां शरीरशोणितबिन्दुदानेनावर्धयत् सोऽपि विश्रुतकीर्त्तिर्जननायको महाजनो जनकोऽस्या' 'छिद्रेष्वनर्था बहुलीभवन्ती'ति महाजनवाक्यमन्वर्थतामापादयन् पशुपतेः प्रेमाण सारभूत प्रकटयन्निव पशुपतिपदवीमनुससार गोष्पतिरायचतुर्धरीण ।

यश्च गोष्पतिप्रतिमो गोष्पतिकाव्यतीर्थमहोदय एक एव सम्पादकरूपेण सहायकरूपेण नाट्याचार्यरूपेण च प्रतिष्ठानस्यास्य नानाविधां समुन्नति समसाधयत्, यस्याभिनयकलाकौशलेन संस्कृतनाट्यवस्तुषु किमप्यभिनव वस्तु समुद्भावितमासीत्, यस्य चानन्यसाधारणाभिनयनैपुण्यमवलोक्य सर्वे सहृदया जना अन्तरान्तरा विस्मिता विमुग्धा अश्रुपरिप्लुताश्चासन, उदारधीः सोऽप्यत्रभवान् कथाशेषता गत इति महद्दुर्भाग्यं परिषद्बान्धवाना नाट्यकलालापकुशलाना नाट्यरसपिपासूनामपि जनानाम्। शोकखिन्नाना मन्दभाग्यानामस्माक पुनरपि शोकसन्देशविनिवेदनेन भवता खेदोत्पादन भविष्यतीति भीतभीता एव वयम्।

जानन्त्येव भवन्तो यत् भगवत्करुणालब्धपाण्डित्य' पण्डितकुलचूडामणि' शशधरतर्कचूडामणिमहोदयोऽपि परित्यज्येमससारं ससार सुरलोकमध्यास्त इति। यश्च चूडामणिमहाशय' सशब्देन ब्राह्मण्येन अत्युत्कटेन तपसा अद्वितीयेन पाण्डित्येन अनन्यसाधारण्या च प्रतिभया प्रभुरिवासीत् ब्राह्मणेषु, तपःपरायणेषु पण्डितेषु प्रतिभावत्सु च, शशधररश्मिसम्पात इव यस्य शशधरस्य

वाग्मिता समुज्ज्वलान्यकरोत् अज्ञानान्धकाराच्छन्नान्यपि जनमानसानि, विद्रुतप्रायोऽपि सनातनधर्म्मो यस्य धर्म्मप्रवणया वचःसत्तया पुन स्वस्थान-मासादितस्तत्रभवानसौ भगवच्चरणमलीन इति सुखनिदानमपि तद् दुःखाय सम्पद्यते कृतताद्दशबान्धवाना धर्म्मप्रवणानां सर्वेषामेव।

अपरोऽपि अरुन्तुद एव कश्चित् शोकविनिपातः। यश्च मित्रमिवा-सीत् संस्कृतसाहित्यपरिषदस्तथा तत्पक्षपातिनाम् अपरेषामपि देश-वासिजनाना, यस्य च श्रमविरचितेनोद्यमेन परिषदियं नानाविध साहाय्यजात लब्धवती, यस्य च ललितेन स्वभावेन विवशा आसन् देश-वासिनः, विदुषा परमोपकारी स्वदेशहितव्रतदीक्षितजीवनः सकल श्रद्धापात्रमसौ कायस्थकुलतिलको विश्वविश्रुतमित्रवंशावतंसो ललित-कुमारमित्रमहोदयोऽपि परलोकं गत इत्यस्माकं महद्दुःखकारणम्।

न जाने परिषत्सर्वस्वभूतयोः गोष्पतिपशुपतिनाथयोः सुमहान् अभाव' काले विलीनो भविष्यति न वा, न च जाने तयोस्ताद्दश ताद्दशं कार्य्यजात माद्दशेन साधयितु पारयिष्यते न वा, तथापि 'अश्मापि याति देवत्वं महद्भि सुप्रतिष्ठित' इति वचनमङ्गीकुर्वन् भवद्भिर्गौर-वितेऽस्मिन् पदे स्थापितोऽयं जनो युगपत् आशा-नैराश्यालोडितहृदयः सर्वेषामेव भवता साहायकमनुकम्पाञ्च प्रार्थयते।

अयि भो सदस्यमहत्तमाः, अयि भोः परिषद्बान्धवा अयि भोः समागता' परमानुग्राहका भवन्त, गोष्पतिपशुपतिपरिपुष्टेय परिषदद्य दीना इव भवत्सु स्वरक्षण प्रार्थयते। अत्रावधानं रचयन्त्वत्रभवन्त' श्रीमन्तः। आलोचयन्तु कीद्दशमवस्थातारतम्यमस्या अस्माकञ्चैतत्पक्ष-पातिनाम्। परित्यज्येमा गताः स्वर्लोकमस्याः कार्य्यपद्धति सम्यक्तया विजानन्तो बान्धवाः, साहाय्यरूपेणाधिगताना राजकोषस्थिताना-मर्थानामागमोऽपि तयोर्ज्जीवितकाल एव लघुतरः सवृत्तः, सम्पादकयो-स्ताद्दशाकालमहाप्रयाणेन खिन्ना भग्नोत्साहाश्च वयम्। पूर्वाधिष्ठितं परिषद्भवनमपि जीर्णतया परित्यक्त गृहीतञ्चास्माभिः नूतनमेकं द्विगु-

षितप्रायेण शुल्कनेति तेनापि महद्व्ययाधिक्य जातम्। एव नाना विधविधिकृतविपत्पातेन पर्य्याकुलानामस्माकम् एव शरणमस्माकम्।

दु:खदौर्मनस्याभिभूताना कथञ्चिदेतत् समाश्वासस्थान यत् परिषत्परिचालकाना सभापतिसहकारिसभापतिप्रभृतीनामनन्य साधारणानुरक्तिरिमां सन्ततमेव अन्त:सन्तापात् परिरक्षितु प्रयतते। ते च महात्मानो महामहोपाध्याया श्रीयुक्तदुर्गाचरणसाङ्ख्यवेदान्त-तीर्थ-श्रीयुक्त-भागवतकुमारशास्त्रिमहोदयप्रमुखा स्वनामधन्या लब्ध-यशस: सभापतिप्रभृतय यथा यथैव प्रवृद्धा प्रकर्षपरिपुष्टा च स्यात्तथा तथैवानुदिन चेष्टन्ते, तथा तथैव महयोगिन कार्य्यपटवो विद्याविवेक प्रवृद्धा: सर्वे एव सहकारिसम्पादका श्रीयुक्त-श्यामाचरणकाव्यतीर्थ-श्रीयुक्त-चिन्ताहरणकाव्यतीर्थ-श्रीयुक्त-दीनबन्धु-साहित्यशास्त्रि-श्रीम-दशोकनाथभट्टाचार्य्य-श्रीयुक्तरामकृष्णचक्रवर्त्तिनश्च।

एतत् खलु विशेषतो विज्ञापयितव्य यत् स्वर्गतगोष्पतिरायचतु धुरीणकाव्यतीर्थप्रवरादेव नियमेन गृहीतोपदेशा: श्रीयुक्तजगन्मोहन-ज्योतिर्विनोदश्रीयुक्तवामापदविद्यारत्नमहोदया नाटकीयविभागे न्यस्त-भारा वर्त्तन्ते, ते यथा अकृत्रिमसुयोग अमाभिमुखताञ्च सन्दर्श्य स्वन्यस्तकार्य्य सम्पादयितु यतन्ते, येनाशास्यते स्वर्गतपरिषन्नाट्या-चार्य्यस्य गोष्पतिकाव्यतीर्थमहोदयस्य अभावपूर्त्तिर्भविष्यत्येवेति।

कार्य्यकारिण्या समितौ च प्रतिष्ठापिता ये स्वातन्त्र्यशालिनो महात्मानो वर्त्तन्ते तेऽपि अस्या समभ्युदये बद्धपरिकरा सुमन्त्रणा दिभिरपरैश्च नानाविधै: कार्य्यजातैरेनां सवर्धयन्ते। वयमेतदाशास्महे यथा यथा एतेषामनुरक्तिस्तथा तथा यदि तिष्ठेत्, भवतामनुकम्पाऽपि यदि अखण्डिता स्यात्, तदेयं सस्कृतसाहित्यपरिषत् मादृशायोग्य-जनहस्तगतापि अव्याहतगत्या अनुदिनं वृद्धिमेव प्राप्स्यतीति।

विगते वर्षे सौरभाद्रस्य चतुर्विंशदिवसे सायं षष्ठघटिकायामत्रैव (इउनिभारसिटि इनष्टिटिउट) भवने संवृत्त: परिषद एकादश-

वार्षिको महोत्सवः। तत्र रायबाहादुर-इत्युपाधिभूषितानां प्रधान-तमविचारालयस्य भूतपूर्व-प्राड्विवाकानां श्रीमद्द्वारकानाथचक्रवर्त्ति एम्, ए, वि, एल् महोदयानामाध्यक्ष्यमासीत्। तत्र नानाशास्त्रनिष्णात मतीनां प्रथितयशसां विभिन्नदेशागतानां मनीषिवर्य्याणां सानुग्रह-शुभागमनेन सभामन्दिरमपूर्वां कामपि श्रियमधत्त। महाकविभास-विरचितं पञ्चरात्रं नाम नाटकं बोधायनकृतञ्च भगवदज्जुकीयं नाम प्रहसनं परिषत्सदस्यैरभिनीते। एतद्रूपकद्वयं नाभिनीतपूर्वमासीत्। विशेषसभाया अपि अधिवेशनद्वयं गतवर्षे सञ्जातं परलोकगतयोः सम्पादकयोः शोकप्रकाशार्थम्। तत्रादौ स्यार् पि, सि, मित्र-महोदयानां द्वितीये तु रायबाहादुर-श्रीयुक्तद्वारकानाथचक्रवर्त्ति महोदयाना-माध्यक्ष्यमासीत्।

विगते वर्षे कार्य्यकारिण्याः समित्यास्त्रयोदशसंख्यकान्यधिवेशनानि जातानि। तत्र तत्राधिवेशनेषु तत्समितिस्थिता अनेक एव सदस्याः समागम्य यथायथं कार्य्यजातं संसाधयामासुः। मासिकसभाश्च एकादशसंख्याका जाताः। अधोलिखिता निबन्धाः पार्श्वलिखित-नामभिः पण्डितवर्य्यैर्निबद्धाः पठिताश्चासन्—

| मासि | निबन्ध | | कर्त्ता |
|---|---|---|---|
| वैशाखे | कृष्णचरितम् | (१) | श्रीयुक्तविष्णुपदभट्टाचार्य्य' वि-ए (पद्यमयम्) |
| | | (१) | „ हरेन्द्रकुमार गङ्गोपाध्याय. (गद्यमयम्) |
| ज्यैष्ठे | वैदेशिकानां संस्कृतचर्चा | „ | चिन्ताहरणकाव्यतीर्थ एम्-ए |
| आषाढे | शरीरजा दोषाः | „ | गिरीन्द्रचन्द्रकाव्यतीर्थ |
| श्रावणे | वार्हस्पत्यसूत्रम् | „ | दक्षिणारञ्जनशास्त्री एम्-ए |
| भाद्रे | प्रतिबिम्बवाद' | „ | जानकीवल्लभभट्टाचार्य्य वि-ए |
| आश्विने | हरिश्चन्द्रकथा | „ | कालीपदकाव्यतीर्थसूत्रविशारद |
| कार्त्तिके | नीलकण्ठोपाख्यानम् | „ | श्रीजीवन्यायतीर्थ एम्-ए |
| अग्रहायणे | ग्रहविलसितम् | „ | उपेन्द्रनीहनसांख्यतीर्थ |
| पौषे | आर्य्याणां धर्म्मग्रन्था | „ | रामकृष्णचक्रवर्त्ती एम्, ए, |

| मासि | निबन्ध | | कर्त्ता |
|---|---|---|---|
| माघे | लोक यतमतम | ,, | दक्षिणारञ्जनशास्त्री एम्, ए |
| फाल्गुने | मगधेश्वरीपूजनम | , | वेणुधरतर्कतीर्थ |

परिषदोऽस्या उद्देश्यन्तु प्राय सुविदितमेव सर्वेषाम्। तथापि कर्त्तव्यानामन्यतमतया यथाकथञ्चित् विनिवेदयामि। उद्देश्यन्तु प्रधानत एकमेव तत् पुनः संस्कृतशिक्षाप्रभावविस्तारः। स च लुप्तप्रायाणां ग्रन्थाना रक्षणेन, अप्रकाशितपूर्वाणां प्रकाशनेन, मुद्रिताना संग्रहणेन, संस्कृतपत्रिकाप्रकाशनेन, संस्कृतविद्यालयस्थापनेन, आहारवासस्थानपुरस्कारादिना संस्कृतशिक्षार्थिनामानुकूल्य विधाय तेषामध्यापनेन संस्कृतरूपकाभिनयेन च सम्भवतीति एतान्येव कार्य्यजातानि आवश्यकतयाऽस्माक कर्त्तव्यानि वर्त्तन्ते।

एतानि कार्य्याणि प्रायः प्रतिवर्षमेव परिषद' पुष्टि समुन्नति च संसाधयन्ति अव्याहतानोवासन्। परिषदो हस्तलिखितपुस्तकालये द्विसहस्रसंख्यकानि पुस्तकानि संगृहीतान्यभूवन्। गतेऽपि वर्षे अस्माभिः कलिकाता-श्यामबाजारपल्लीस्थ भूस्वामि-श्रीयुक्तकृष्णचन्द्रवसुमहोदयसकाशात् तथा भवानीपुरस्थलवास्तव्य-श्रीयुक्त-रामपदचट्टोपाध्यायमहोदयसकाशात् प्रायेण सार्द्धशतसंख्यका ग्रन्थाः सगृहीताः।

एताभ्या महोदयाभ्या परिषत्सदस्यैर्भूयो भूयो हार्दिका धन्यवादाः प्रदीयन्ते। हस्तलिखितपुस्तकाना विवरणपुस्तिका तु शीघ्रमेव प्रकाशयिष्यते।

आलोच्ये वर्षे—आनन्दलतिका नाम काव्यग्रन्थः, भाषारत्नं नाम नव्यन्यायग्रन्थः, गुणविष्णुकृतं छान्दोग्यमन्त्रभाष्यं नाम कर्म्मकाण्डग्रन्थश्च मुद्राप्यमाणा वर्त्तन्ते। यद्यपि विसदृशनानाविधविघ्नपातेन मुद्रणोचितानामर्थानामसद्भावेन च नैतावता कालेन समारब्धमपि मुद्रणकार्य्यं तेषां तेषा ग्रन्थानां समाप्तिं गत, तथाप्येवमाशास्महे यथा अचिरेणैव कालेन समाप्तिं यास्यतीति।

मुद्रितानां ग्रन्थानां सङ्ग्रहणे संरक्षणे च परिषत्परिचालकाः सदैव सम्यगनुरक्ताः। एतावत्कालम् आशातिरिक्ता एव ग्रन्था सङ्गृहीताः। गतेऽपि वर्षे परिषत्कर्त्तृपक्षीयैः चतुर्दशशतकाधिकपञ्चपञ्चाशन्मुद्रोत्तरसहस्रमुद्राव्ययेन मुद्रितग्रन्थालयस्य पुष्टिर्विहिता। तत्र चतुःपञ्चाशदधिकद्विशतसङ्ख्यकग्रन्था गृहीताः। तत्र कलिकाता-कर्पोरेसनाध्यक्षैः सार्द्धषट्शतपरिमिता मुद्राः साहाय्यरूपेण प्रदत्ता। एतेन च साहाय्येन महदुपकृता वय तेभ्योऽशेषान् धन्यवादान् प्रदाय आन्तरिकीं कृतज्ञताञ्च विज्ञाप्य भविष्यत्यपि काले यथा तेषां कर्पोरेसन सदस्यानां परिषदं प्रति एवमनुरक्तिः स्यात्, तदर्थं सानुनयं प्रार्थयामहे। भवन्तः सर्वे एव जानन्ति यथा परिषदोऽस्या ग्रन्थालयोऽनन्यसाधारणग्रन्थानामागमेन प्रायः सर्वेषामेव संस्कृतमुद्रितग्रन्थालयानां मध्ये उच्चैस्तमां पदमारूढ। व्यवहारश्चास्य प्राचीनतत्त्वानुसन्धित्सुभिर्विश्वविद्यालयस्य तथा प्रेसिडेन्सीकलेजप्रमुखाणामन्येषाञ्च विद्यालयानामध्यापकैस्तथा शास्त्रानुशीलनतत्परै सनातनरीतिमवलम्ब्याध्ययनाध्यापनव्यग्रैः शास्त्ररक्षणकुशलैः पण्डितप्रवरैश्च सम्यक्तया क्रियते। अतो यथा तेषां साहायक लभेम भवेता तत्रच्चीकृत्यास्माभिर्ग्रन्थालयस्यास्य प्रसारो विहित।

परिषत्प्रतिष्ठिता संस्कृतभाषामयी मासिकी पत्रिका विश्रुतकीर्त्तीनां पण्डितप्रवराणां निबन्धैः सङ्कुला यथानियमं प्रकाशम् आपद्यमाना भवतां मनोरञ्जने समर्थासीदित्यस्माक गौरवाय एव। अस्याश्च काचिद् विशेषसंख्या १०म-वर्षीय-फाल्गुनमासे स्वर्गतपशुपतिनाथशास्त्रिणः परलोकगमनमुपलक्ष्य प्रकाशिता।

विदुषां मध्ये प्रथितनाम्न आदर्शचरित्रस्य नानाशास्त्रपारदर्शिनः श्रीमत्कालीपदतर्काचार्य्यस्याध्यक्ष्येण परिषद्विद्यालय, संस्कृतभाषाशास्त्रानुशीलनरसज्ञानां छात्राणामध्यापकानाञ्च मध्ये प्रतिष्ठामासादयन् परिषदश्च गौरवं वर्द्धयन्नास्ते इत्यस्माकं सुमहते आनन्दाय

कल्पते। विद्यालयरक्षणविधावपि कर्पोरेशनाध्यक्षैः सार्द्धद्विशतमुद्राः परिषत्साहाय्यरूपेण प्रदत्ता इति तेभ्यः पुनरपि धन्यवादान् कृतज्ञताञ्च ज्ञापयाम। विषादासंभिन्न आनन्दः कुत्रापि न लभ्यते। विद्यालयविषयको महानेक सन्ताप सन्तापयति अस्मानपि योग्यानुष्ठानासमर्थान् निरन्तरम्। जानन्त्येव भवन्तो यत् संस्कृतशास्त्राण्यधोयानाना मध्ये प्राय सर्वं एव दारिद्र्योपपन्नाः। अध्यापकगृहे भोजन वासस्थानञ्च लब्ध्वा प्रायशस्ते कथ कथमपि अध्ययनकार्य्यं निर्वाहयन्ति। अतोऽस्माकमपि तेभ्य ईदृशसाहाय्यदानमतीवोचितम्। तत्रास्माक रुचिर्नास्तीत्यपि न। किन्तु "उत्थाय हृदि लीयन्ते दरिद्राणा मनोरथा" यथा, चिरदीनानामस्माकमपि सेवावस्था सम्प्रति। अध्यापकस्य तथा छात्राणामाहारवासस्थानादिदानविधौ यादृशोऽर्थोऽपेक्षित', लब्धकर्पोरेशनसाहाय्यानामपि अस्माक तादृशो नास्त्येव। तत स्वल्पानामेव छात्राणां पोषणाय प्रभवामो वयम्। अयि भो धर्मशास्त्रानुरक्ता देशबन्धवः, यदि नाम धर्मक्षये भवता क्षतिस्तद्वृद्धौ च भवता वृद्धि स्यात्, तदात्रावहितैर्भवद्भिर्भवितव्यमेव। संस्कृताध्यापनादिना एव धर्मस्य रक्षा भविष्यति नान्यथा, अतोऽत्र यदि दत्तदृष्टयो भवन्ति भवन्तस्तदैवैतदन्तर्दुःखमस्माकं तिरोहितं भविष्यति। एतद्भवद्भिर्द्रष्टव्य यदवस्थाप्रातिकूल्ये सत्यपि परिषदि षड्विंशतिसंख्यकाश्छात्रा अध्यापिता, तेषु पञ्चदशसंख्यका विभिन्नशास्त्रेषु परीक्षा दत्तवन्तः नवसङ्ख्यकाः समुत्तीर्णाः।

परिषदि कार्य्यकारकाणामभावो न विद्यते। अर्थाभाव एव परिषदो विभिन्नविभागीयकार्य्यप्रतिबन्धहेतुभूतस्तिष्ठति। माननोय शिक्षामन्त्रिमहोदयास्तथाऽन्येपि अधिकारवन्तो राजपुरुषाः परिषत्कार्य्याण्यवेक्ष्य तेषाञ्चोपयोगितामङ्गीकुर्वन्तः पूर्वेषु पूर्वेषु वर्षेषु साहाय्यानि दत्त्वा अस्माक कृतज्ञताभाजनं बभूवुः। आलोच्यवर्षात् पूर्वे वत्सरे साहाय्यं त्रिसहस्रमुद्रापरिमितमासीत्। तत् पूर्ववत्-

सरे त्रिसहस्रपरिमितं तत् पूर्ववत्सरे एकषष्ठ्यधिकोनविंशतिशत-परिमित तत्पूर्ववत्सरे त्रिसहस्रपरिमित तत्पूर्ववत्सरेऽपि त्रिसहस्र-परिमितं साहाय्यमस्मभ्य दत्तमासीत्। आलोच्यवर्षे तु तत्साहाय्यं सहस्रमुद्रात्मकं सञ्जातम्। एतत् तु अस्माभिः सबहुमानमशेषकृत-ज्ञताप्रकाशपुरःसरञ्च गृहीतम्। विदितमेवैतत् सर्वेषा यत् लाभा-नुसारत एव व्ययस्य निर्धारणं भवति। व्ययश्चेदेकदा निर्धारितस्तस्य सङ्कोचो दुःशक एव भवति। पूर्वेषु पूर्वेषु वर्षेषु अधिकतर-मर्थं लब्ध्वा व्ययमार्गं सामान्यतो निर्धारितवन्तः। अतस्तस्य परि वर्त्तनमधुना कथं सम्भवति? अतो मान्याना राजकोषाधिकृताना सविधे अस्माभिर्निवेद्यते, यत् राजकीयसाहाय्यस्य न्यूनीकरणेन वयं भीतभीता एव तिष्ठामः। राजकीयेनैव साहाय्येन परिषदिय कथं कथमपि स्वकार्य्यजातं साधयितुं शक्नोति। तत्र यदि न्यूनता स्यात्, तदा कथं विद्वज्जनमात्रसंसेविता दरिद्रभूयिष्ठा परिषत् स्वकृत्यं साधयितुं प्रभविष्यति। अतः सविनयमस्माभिर्निवेद्यते, यत् तत्र-भवन्तो राजकोषाधिकृताः सानुग्रहा भवन्तु, यथा तेषामनुग्रहेण पूर्वा-नुरूप साहाय्यमियं लभेत तथैव तेषा कृपया विधातव्यमिति।

विगते वर्षे शोभावाजाररराजवंशप्रदीप-श्रीयुक्त-प्रफुल्लकृष्णदेव-बाहादुरसकाशात् मुद्राणा शतं, नडाइल-वास्तव्योदारधी-श्रीयुक्त वनविहारिरायमहोदयसकाशाच्च शतमन्येषाञ्च कतिपयवदान्यचरि-ताना महात्मनां सकाशात् समष्ट्या प्रायो मुद्राणा द्वे शते एककालीन दानरूपेण परिषदा लब्धानि। तेभ्योऽमीषाम् आन्तरकृतज्ञता विज्ञाप्य भविष्यत्यपि काले यथैवमनुरक्तिः स्यात् तदर्थं प्रार्थयामहे।

विगते वर्षे सौरश्रावणस्य, तृतीयदिवसे राजकीयशिक्षाविभागस्य भूतपूर्वसेक्रेटारीलिण्ड्से-महोदयास्तदीया विदुषी पत्नी च परिषदि शुभागमन विधाय परिषत्प्रीतिं सम्यक् प्रकटितवन्तः। ते च परिषदः कार्य्यजातं परिदृश्य नितरां सन्तोषमेव प्राकाशयन्।

एतत् खलु भवद्भिर्ज्ञातमेव यत् बहुषु शास्त्रेषु कृतपरिश्रमः सार्त्त-धुरन्धरो धीरमतिः राजकीयसंस्कृतविद्यालयस्य प्रधानाध्यापकः श्रीयुक्त-शितिकण्ठवाचस्पतिमहोदयो विगते वर्षे महामहोपाध्यायो-पाधिना भूषितः। तत्रभवान् परिषत्सदस्यः परिषदोऽलङ्कारभूतश्च इति तस्यानेन सम्मानलाभेन वयं नितरां परिहृष्टाः सुखिनश्च।

अयि भोः महात्मानः समागताः! परिषदवस्था भवतां समीपे मया आलोचिता। परिषदियं भवतामेव स्वकीया सम्पत्। अस्याः परि-रक्षणे परिपुष्टौ च भवन्त एव प्रभवन्ति। भवतां शुभाशीर्वादः आनुकूल्यञ्च परिषदः परमवलम्बनम्, अतः पुनरपि कृपया समागता-नत्रभवतो महानुभावान् सदस्यान् सादरं सम्भाष्य यथायोग्यं प्रणम्य च विरमाम इति शमास्तां न॥

---

## काशि ! कासि ?

[ निबन्धकः—श्रीकानाइलालपञ्चतीर्थः ]

का त्वं धरासुरवरानवगीतगीते'
शश्वत्स्तुता जनतयाकुलकर्णपीतेः।
बध्नासि पुण्यगुणपाशमिलत्प्रतीकान्
मूर्द्धस्थितान् खगवदात्मनि काशि लोकान् ॥१
का त्वं निशाकरकलासमवेतमूर्त्ति-
र्ब्रह्माण्डभाण्डपरिपूर्णसुधाभकीर्त्ति'।
लोकोत्करस्य परिरम्भणमोहितानां
निद्रेव मुद्रणकरी सकलेन्द्रियाणाम् ॥२
का त्वं सदा सुकृतपुष्पितमञ्जुगन्धे-
नाहरती निरयपूतिममेध्यवृन्दे।

संसारनाशि यमनर्मगृहे स्थितैका
भासि श्मशान इव चम्पकवृक्षलेखा ॥३
का त्वं वराभयकरा सचराचराणां
खद्योततां विदधतो प्रभया ग्रहाणाम्।
उद्धृत्य माधवहृदः श्रियमन्धकूपात्
भैकोमिवाङ्गजलधौ वहसीह साक्षात् ॥४
का त्व महोध्रपदलग्नघनालिकेशा
नृत्यन्मयूरचयबर्हकृतावतंसा ।
सूर्य्येन्दुवह्निनयनैर्भवसि त्रिनेत्रा
गौरी च पावनतयाप्यहिमाद्रिगोत्रा ॥५
का त्वं सदेन्द्रपुरलोकचलाचलाख्य
स्वच्छाच्छपुण्यसरसि स्नपितेव सद्यः ।
आलिङ्गिता दृढमनङ्गजितापि गत्वा
मुग्धोज्झसे भवदपाङ्गवशेन पत्या ॥६
का त्वं श्रुतिध्वनिमयो चतुराननास्य-
व्यूहस्य दिग्विजयगर्वमलं निरस्य ।
वाणीं तदम्बुजचरोमलिराजकन्या
दत्त्वा करोषि विधिविप्रवराय धन्याम् ॥७
का त्वं प्रियामिलितगायककोकिलानां
सोपानपञ्चकसदृक् सततस्वराणाम् ।
मूर्द्ध्नि स्थिता मधुरसासमतां वहन्ती
चित्रस्मितानि कुसुमानि विकाशयन्ती ।८
का त्व श्रिता कनकचूड़सिताभ्रसौधै-
र्भिन्नैः सितैः शरदिवार्कशिरःपयोदैः ।
फुल्लैर्मुखैर्मिलसि तदृगृहदेवतानां
कह्लारपद्मकुमुदैरिव तन्नतानाम् ।९

का त्वं निरर्गलधृतामृतसारधारा
प्रावृड् यथा सुकृतिदुष्कृतिनिर्विचारा।
दातुः सुधा दिविषदे दितिज प्रवञ्चय
स्त्रोच्छन्न निन्दसि हरेर्घननीलताञ्च ॥१०

का त्वं सुदर्शपदनूपुरविम्ब्यशैला
काञ्चीकृतत्रिपथगा जघनेऽपि बाला।
वामादिपाणिवलयीकृतवारणासि-
र्हंसं स्मरारिहृदय भग्नभूषितासि ॥११

का त्वं धुनध्ययनतन्तुयुताश्मसारै
सोपानतुङ्गबहुरङ्गजलावतारैः।
काञ्चीमकिञ्चनकृपामिव काञ्चनाङ्के
विश्वेश्वरैकपतिकार्हसि लोकसङ्के ॥१२

का त्वं सुखेन भवसागरपारहेतुः
स्वश्वाभभैरवभरेण धृताश्मसेतु.।
विश्वेश्वरेण सह यत्र रतान्नपूर्णा
कैलाससङ्गतसुमेरुतनोः सवर्णा ॥१३

का त्वं बिभर्षि सुरभीकृतदिग्व्रजाज्यै-
र्दीनान् जडान् वधिरमूकमुखान् सुभोज्यैः।
सङ्कृत्य नात्मगरणस्य जनस्य दुःखं
शक्ता न दातुमपि तद्विनिवृत्तिमोक्षम् ॥१४

का त्वं स्वगौरववचोऽमृतसिक्तकर्णां
कृत्वा घटीमिव सभां रसिकाम्बुपूर्णाम्।
दत्त्वा स्तनन्धयमुखे जननीव दुग्धं
श्रुत्वातितुष्यसि ततो निजनाम मुग्धम् ॥१५

का त्व बिभर्षनडुहः सितकायकान्तान्
विश्वेशधाम परितो भ्रमतोऽतिशान्तान्।

दिष्ट्या हृतच्छदभृतो रजताङ्गशैलं
कूटानिवास्य परिवेष्टयतोऽतिवेलम् ॥१६
का त्वं महेश्वरि ! शिवाय धवाय सद्यः
स्रोत्पन्नभोज्यनिवहस्य रसान्निवेद्य ।
गृह्णासि भोजयसि च स्वयमन्तरङ्ग
तत्त्वोपदेशिनि भुवामयि ! भूतसङ्घम् ॥१७
का त्वं नृणां क्षितिशिलाहतिभिर्मनांसि
स्नानामृदूनि सकिणावयवैः सदृंशि ।
स्पर्शात् करोषि विमलानि सुकोमलानि
द्राक् पक्वताक्तकदलस्य यथा फलानि ॥१८
का त्वं रसादिविषयैः परवत्कृतानि
प्राप्तस्य भिन्नभुवनाद्बहिरिन्द्रियाणि ।
तुच्छार्थतुष्टिशिखयाग्नितनो ! प्रदह्य
प्राक्कर्मतन्तुमिव मोचयसि प्रसह्य ॥१९
का त्वं सनाथा जननी धराणा
प्रातः स्ववन्द्यभवता नराणाम् ।
हे काशि ! वाराणसि ! तात शम्भो !
इत्थ स्वैरपि विनिद्रता भोः ॥२०
प्रश्ना इमे या प्रति सैव काशी
साधो ! भवाख्या प्रतिजन्मवासो ।
छलेन यस्मै स्तुवतोऽत्र पाप
स्तोकोऽन्त एषोऽस्य करोतु लोपम् ॥२१

---

# आर्द्रकवणिक् च वहित्रयात्रा च

[ निबन्धकः—के. ए रामलिङ्गशास्त्री ]

वात-पित्त-श्लेष्ममय पुण्यपापमिश्र पाञ्चभौतिकं सप्तधातुकमिदम् अस्मदादिशरीरम्, सत्त्वरजस्तमोगुणसाम्य (मूल) प्रकृतिरिति, तद्वैषम्ये च मायाऽविद्या प्रपञ्चादिबहुविकृतिरिति व्यपदेशमिव च, दोषसाम्ये स्वास्थ्य प्रकृतिम्, दोषवैषम्ये च अस्वास्थ्य विकृतिम् अश्नुवानं नानारोगास्पद सदवसीदत् पदात् पदमपि चलितुम् अशक्नुवानम् अपचीयते—अपचीयते, विनश्यति अथवा शीर्यते इत्यनुभवसिद्धमिदमखिलस्यापि विमर्शकस्य, अहन्ता ममताऽऽक्रान्तस्वान्तेन जन्तुना नागरिकम्मन्येन यावद्यावत् संस्क्रियते च सम्परिपोष्यते च अभिमन्यते चैतत्, तावत्तावत् तदिदम् ईषदपि न शुचि च, न परिष्कृतञ्च, न कृतघ्न च, नाविकृत च न पूत चेति स्वभावोक्तिरिय नातिशयोक्तिरिति, नागानन्दे श्रीहर्षदेवः—प्राख्यापयदिति ज्ञायते। तद्यथा—

'सर्वाशुचिनिधानस्य कृतघ्नस्य विकारिणः।

शरीरकस्यापि कृते मूढाः पापानि कुर्वते॥' इति।

तदेतत् सूक्तं कुवलयानन्दे उदाहृतमिति विदितमेव विदुषाम्। 'शरीरमाद्यं खलु धर्मसाधनम्' इति कालिदासः प्रशंसति, 'पूतिकुष्माण्डायते कायोऽयम्' इति पदार्थतत्त्वविदः प्रणिगदन्ति। समस्तदेवतायतनमिति उपासकोत्तमा आमनन्ति, तथा च स्तुतिनिन्दाभाजनमिदं वपुः किञ्चिदलस्य चेत्, न कस्यापि कर्मणः करणे निपुणम्, जनिश्च मृतिश्च क्रियासमभिहारेण हारेणेव अलङ्कृतिं विन्दते एतत्, अस्य च उत्क्रान्त्यवस्था प्रकृतिरिति, जीवितावस्था विकृतिरिति। नन्वत एव विकृत्यवस्थापन्नस्य क्षणमात्रावस्थानमपि असहमानस्य अस्य यदि कदाचित् क्षणिकमवस्थानं दैवाधीनम्

श्वेंशुराप्नोति तावन्मात्रेण चेतन' स जन्मसाफल्यवान्—'लाभवान्' इत्यादितत्त्वजातं कविसार्वभौम प्राचीकशद् रघुवंशे अजमहाराज-विलापाभिलपनावसरे—

'मरण प्रकृति' शरीरिणा विकृतिर्जीवितमुच्यते बुधैः।
क्षणमप्यवतिष्ठते श्वसन् यदि जन्तुर्ननु लाभवानसौ॥' इति।

अदः स्वस्थं चेत्, माद्यति, अमन्दानन्दसन्दोहान्दोलिकोल्लासन-जन्य शर्म प्राप्नोति, अतश्च स्वास्थ्यास्वास्थ्यनिबन्धनाः समवस्थाः समस्ता श्रीमद्यास्कपरिपठितासु षट्सु भावविकृतिष्वेव अन्तर्गच्छन्ति इति, नात्र विशिष्य अवान्तरभिदा अवस्थानाम् आलोचनीया इति मन्महे, एवं च विकारजाल सकल कलेवरस्यैव, न तदसङ्गिन आत्मनः इति 'जीवापेतं वाव किलेद म्रियते, न जीवो म्रियते' इति श्रुतिशीर्षं सर्वथा सत्यापयति, अस्तु नामैतत्, प्रकृते किमायातम्? इति चेदनुयुज्यते, ईर्य्यते—परमानन्दघनस्य आत्मनः अनुभूतिसाधनस्य अस्य अपघनस्य स्वास्थ्याधानहेतुभूतानि वस्तूनि बहूनि निर्मितानि निखिलेश्वरेण, तानीमानि महामुनिभिरुपज्ञानि, यद्यपि मणि-मन्त्रौषधरूपाणि त्रीणि साधनानि निकाममुपलभ्यन्ते, तथापि, अधुनाऽस्माभि भेषजमेकमेव अत्र आदीयते, आर्याणां पारम्पर्या-याता.—

'अच्युतानन्त! गोविन्द! नामोच्चारणभेषजात्।
नश्यन्ति सकला रोगाः सत्यं सत्यं वदाम्यहम्॥
अच्युतानन्त! गोविन्द! विष्णो! नारायणाऽमृत!
रोगान्मे नाशयाऽशेषान् पाहि धन्वन्तरे! हरे!॥

इत्याद्याः पुराणगाथाश्च चकासति स्तोतॄणां कृते, 'अच्युत!' 'अनन्त!' 'गोविन्द!' इति नाममन्त्रत्रय जपित्वैव प्रेरितेन सायकेन भण्डासुरवधः साधितः श्रीललिताम्बया इति, श्रीललितोपाख्यान विख्यापयति, स्तुत्यादिक मन्त्रे अन्तर्भवति इति अतिरोहितमेव।

आर्य्यैरनुदिनमल्पमूल्यम् आर्द्रक-मरीचि नागर-लशुन जीरकाद्य किल वस्तुजातं सकलैः किञ्चित् किञ्चिदासेव्यमानम् आमयमखिलं खिलीकुर्यात्, स्वास्थ्यं च निरतिशयमापादयेदिति आयुर्वेदिकमतज्ञिकाः कलयन्ति, सर्वत्रापि भारतधात्र्यां प्ररोहन्ति अमूनि वस्तुतत्त्वजानि स्वल्पव्ययेन क्रीत्वा, वैदेशिकैः स्वीय प्रयमानाय्य, यन्त्रसाहाय्येन रसायनतन्त्ररीत्या द्रवमयाणि विरचय्य, स्व-जनपद-पर्याप्ताधिकानि प्रेष्यन्ते पुनर्भारतमेव सुभिक्षमभिलक्ष्य। आसीत् पुरा खलु एकैकस्य कुटुम्बिन कुटीरनिष्कुटकोणे प्रपोष्यमाणमौषधगुल्ममिदं, पटोलिका वार्ताकीर्वास्तुकशिग्रु-कारवेल्लादिसस्यवृन्दञ्च, अधुना नागरिकम्मन्यैः स्वोपुसरूपैरुद्वाधिदेवतैर्वैदेशिकनामधेयभाञ्जि औषधानि च सस्यानि च निर्लज्जमुपादीयन्ते च उपयोज्यन्ते चेति अनुभवशालि लिखितुं हृदयम् अस्मदीय जिह्रेति, किं कुर्मः? कालस्य कुटिला गतिः, ततश्च आर्द्रकादि दिव्यमौषधनिधिनिकुरम्बम् अत्यावश्यकमेव एकैकस्यापि स्वास्थ्यकामुकस्येति निश्चप्रचम्, अत एतानि वस्तूनि परिमितेन मूल्येन क्रीत्वा, प्रतिग्राम गतागतानि निरन्तर रचयति यो हि नाम वणिक्, स एव आर्द्रकवणिक् इत्युच्यते, 'आर्द्रकवणिक' इति उपलक्षण-मरीचादीनाम्, अत आर्द्रकादिवणिगित्यर्थः, आर्द्रकादिपण्यवाणिज्यं यः खलु श्रेष्ठी, श्रेष्ठिकल्पो वा आपत्कालिकवृत्तितया आहृतवणिज्याजीविको वा अल्पेनैव नीवीधनेन (Capital) पञ्चाशद्रूप्यकान्यूनेन (Rs 50) दिने दिने नैरन्तर्येण अल्पलाभोद्देशेन आरचयति, स नूनं प्रतिमासं स्वकुटुम्बपोषणावशिष्टानि, पञ्च, दश वा रूप्यकाणि निक्षिपेत् शेवधिस्थाने, एतद्वणिज्यासौकर्यं दृष्टवान् दीनो वणिक् परिहृत्य, स्वपुत्रपौत्रादिकं पारम्पर्यायाते पर्याप्तायदायके आर्द्रकादिपण्यक्रयणे एव प्रेरयेत्, नान्यद् वाणिज्यं चेतसापि चिन्तयेत्, कुतस्तरां वैदेशिकवस्तुवाणिज्यम्? कुतस्तमां च वहित्रयात्राप्रस्तावम्? तदेतदेव प्रश्नेन अनेन आभाणकेन आवेद्यते

'किमार्द्रकवणिजो वहित्रचिन्तया ?' इति, कौलीनम् इदम् उपायोजि—परब्रह्मायोजितान्त:करणेन महनीयषड्दर्शनीयमहारण्यस्वैरसञ्चारि-केसरिवरेण श्रीमद्गौडब्रह्मानन्देन गौडरसनेन्द्रियेण तात्पर्येण राद्धान्तनिरूपणनिगमने लघुचन्द्रिकादिदिव्यप्रबन्धेषु इति नेदं विशिष्य वक्तव्यम् ।

स्यादेतत्, अस्य च आभाणकस्य, आर्यैः आद्रियमाणस्य आदर्तव्यस्य च स्वव्यस्य धर्मस्य सम्बन्धः कश्चन अस्माभिः प्रतिपादयितुम् इष्यते इदानीम्,—'न हि कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृत्' इति वदुपदेशानुसारं सर्वो जन्तुः सर्वदा सर्वथा स्वस्ववासनापरवश साधु वा असाधु वा कर्म कुर्वन्नेव, तत्फलं च अस्मन्नानन्दविषादौ अनुभवतीति प्रकाशम्, औदासीन्यावस्थायामपि उदासाऽवस्थापकः आन्तरो यत्नविशेष आतन्यत एवानेनेति, यस्य कस्यापि कर्मणः कारणम् अन्तरेण अनवस्थानम् न अनुपपन्नम् इति वेदनीयम्; आर्द्रकादिवाणिज्यस्थानीयः को हि नाम भो धर्मोऽल्पीयान् शक्यतेऽस्माभिराचरितुम् इति चेत्, अभिदध्मः ;—इदानीन्तने हि समये इष्टापूर्ते द्वे एव कर्मणी शर्मसाधनं द्विजानामुदाहरामः, एते एव ऐहिकामुष्मिकसमस्तेप्सितप्रतिपादके इति, को नु खलु आस्तिकाग्रगण्यो नाभ्युपैति । कुतः ?

'इष्टेन पूर्तेन नलस्य वश्या' स्वर्भोगमत्रापि सृजन्त्यमर्त्या ।
महीरुहा दोहदसेकशक्तेराकालिकं कोरकमुद्गिरन्ति ॥'

इति श्रीहर्षमहाकविना नानाशास्त्र कला-पारावार-पारीणेन सहर्षमावेदितत्वादेतस्य, तयोश्च—पूर्तम् अधुना निरूप्यते ।—किं नाम पूर्तम् ?

'वापी-कूप-तटाकादि देवतायतनानि च ।
अन्नप्रदानमारामः पूर्तमित्यभिधीयते ॥'

इति प्राचीननिर्वचनानुरोधेन, यत्र यत्र ग्रामे, नगरे, घोषे,

पक्कणे, चण्डालादिकुटीरनिकटे वा, वाप्याः, कूपस्य, तटाकस्य, निपानस्य, देवतनिकेतस्य, छात्रावासस्य, भजनमठस्य, सकलभाषा-मयपत्रिका-पुस्तकादिवाचकशालायाः, वेदशास्त्रपाठशालायाः, विश्व-विद्यालयस्य (University) वा अत्यावश्यकता, तात्पर्येण तत्र सर्वत्र प्रभुणा एकैकेन यावच्छक्यं तत्तेषाम् प्रतिष्ठापनं स्थाने संपाद-नीयम् इत्ययमंशो नयनयोः पुरस्तात् सर्वदा आविरस्ति प्रथमतः, यात्रिकाणां सार्ववर्णिकानां पृथक् पृथक् नानाविधानाम् अन्नसत्रा-णाम्, अनाथार्भकाणां चीरयवागू मण्ड-तण्डुल-चेलखण्ड-खण्डशर्करा-तिलतैल भैषज्यादिदानशालायाः, सर्वजातीयानां नानाविधानां (प्रपाणां) पानीयशालानाम्, च अन्येषां च समुचितानां मतिमद्भिरभ्यूहितानां तादात्विकानामारचनम्, देवताराधनार्थं पुष्पावचित्यै, सायन्तने समये सुखावहमन्दमारुतासेवनार्थं समस्तजातिप्रभवाणां प्रभूणाञ्च दीनानाञ्च, पण्डितानाञ्च पामराणाञ्च जातौ चम्पक-केसर-पुन्नाग-नन्द्या-वर्त-करवीर पारिजात-मल्लिका-मालती-जपा-स्थलकमलिन्यादिदिव्य-सुगन्धिगुल्ममेदुरोद्यानानाञ्च निर्माणम् अत्यावश्यकमक्ष्णो पुरत आविर्भवति तदनन्तरम्, अधुनापि ते ते महान्त स्वयमेव अभ्यूह्य, तत्तादृशान् धर्ममयान् उल्लोचान् सकललोकलोचनगोचरान् कुर्वन्त्येव। अत्र किञ्चिद्वक्तव्यम् बहूनां नवनवानां निर्माणापेक्षया यत्र कुत्रापि स्थापितस्य पुनर्नवीकरणम्, जीर्णोद्धारणम्, नीवीधनसव्यपेक्षाणां परि-पणार्पणं च श्रद्धावद्भिरनसूयद्भिरास्तिकप्रकाण्डैरकाण्डे एव भूमण्डल-मखिलं तीर्थयात्रामिषेण आहिण्ड्य, समुचितनिवृत्तिनिर्वृत्त्या प्रेय-श्रेय-प्राप्तिजन्या अयातयामा मानातीता निर्वृतिः सम्पादनीया तत्त-ज्जातीयैः सम्पन्नैरिति सादरमासूच्यतेऽस्माभिः।

अद्यत्वे, केचित् सर्वजातीयैकमत्यसम्पिपादयिषया प्रयस्यन्तः प्रज्ञावन्तः,—सर्वजातीये पूर्ते 'सर्वजातीयवापीकूपतटाक-देवता-लयान्नसत्रोद्यानादिषु सर्वजातीयैरसङ्कोचं प्रवेशनीयम्, समर्पणाय

(सन्धिः) सहभोजनं करणीयम्, उत्तमाधमभावः परिहरणीयः; स्वस्वावश्यकवस्तूनि स्वेनैव निर्मेयाणि, देशान्तरीयाणि वस्त्राभासरूपमारकौषधानि विवर्जनीयानि, समबुद्धिर्विशिष्यते, आडम्बरदृष्टिर्निकृष्यते; ..इत्यादिकमभिलपन्ति, प्रेक्षावताममीषां भाषणानि क्रौस्तवादिमतप्रचारकाणामिव समञ्जसासमञ्जससंस्कारपरिपूर्णानि गुञ्जाफलानीव विप्राणां मारकयन्त्राणि इत्यस्माभिरभिप्रेयते; अत एतानि ब्राह्मणतनुजैर्दूरतः सर्वथा उच्चारणीयानि इति सकरुणं प्रणिगद्यते। पूर्तादिधर्म्मलेशानुष्ठानेनैव स्वर्गाधिपत्यनीकाशं शर्म लभ्येतैव असंशयम्, 'स्वाराज्यं भोज्यं वैराज्यमाधिपत्यम्' इति श्रुत्या निर्दिष्टं फलं सकलम् इष्टेन पूर्तेन च नितरां करतलामलकवदाप्येतैव ध्रुवम्; 'आम्रान् पृष्टः कोविदारानाचष्टे' इतिवत् यस्य यस्य यद्यत् साधनं, तत्तत् अविदन्तः, अविन्दन्तश्चैते स्वयं नष्टाः, परानपि नाशयितुमुपक्रमन्ते इति हा हा॥ कष्टतमम्!!! चित्रा दैवी वीचा! सर्वजातीयविवाहव्यवस्थापनेनैव आर्य्यधर्म्ममर्म्म तुच्छयत् सन्धानकरणीं सञ्जीवनीं वा आनेतुम् आञ्जनेयस्य आस्यं प्रतीक्षते, एतस्मिन्नन्तरे, यातनान्तरमिव, आभ्युदयिककर्मारिप्सासमये अङ्गारपिशाचोपस्थितिरिव च वर्त्तते, अमीषां प्रचारकाणाम् अरुन्तुदमारटनम् इति आशाश्यतेऽस्माभिः, अस्तु नामैतदप्रकृतं च अतिव्यथकञ्च वृत्तमेतत्, प्रकृतमनुसराम। महामहिमवन्तो महाप्रभाववन्तः किल श्रीमन्मन्वादयो महर्षय इत्थमुपदिशन्ति—

'धर्मं शनैः सञ्चिनुयाद्वल्मीकमिव पुत्तिकाः।
परलोकसहायार्थं सर्वभूतान्यपीडयन्॥
नामुत्र हि सहायार्थं पिता माता च तिष्ठतः।
न पुत्रदारा न ज्ञातिर्धर्मस्तिष्ठति केवलः॥
एकः प्रजायते जन्तुरेक एव प्रलीयते।
एकोऽनुभुङ्क्ते सुकृतमेक एव च दुष्कृतम्॥

मृत शरीरमुत्सृज्य काष्ठलोष्टसमं क्षितौ ।
विमुखा बान्धवा यान्ति धर्मस्तमनुगच्छति ॥
तस्माद्धर्मं सहायार्थं नित्यं सञ्चिनुयाच्छनैः ।
धर्मेण हि सहायेन तमस्तरति दुस्तरम् ॥
धर्मप्रधानं पुरुषं तपसा हतकिल्बिषम् ।
परलोकं नयत्याशु भास्वन्तं खशरीरिणम्' ॥
'पानीयं प्राणिनां प्राणाः विश्वमेव च तन्मयम् ।'
'पानीयं प्राणिनां प्राणाः प्राणा वारिणि संस्थिताः ।' इति च

दानमन्त्रश्लोकः पूर्तधर्म्मं सर्वादरणीयं (इति च) प्रतिपादयति, अतः आर्य्यावर्तवास्तव्यैरार्य्यैः पूर्तधर्म्मः सर्वात्मना यावच्छक्यम् अनुष्ठानगोचरः क्रियतातमाम् इति सौत्सुक्यमनुनाथामो मोहिनी-महेश्वर कुमार श्रीधर्म्मशास्तारं साञ्जलिबन्धं बन्धनिवर्तयितारम् इति भद्रम् ।

---

## चिन्ता

[ निबन्धकः—श्रीललितमोहनकाव्यतीर्थः ]

अनुपदार्थविशेषभवा भवे निखिलजन्मिपराभवकारिका ।
अपि तु यद्‌विषयत्वमगादिदं जगदसौ जयति प्रतिभावना ॥१
द्रुतविलम्बितमात्मपराक्रमं प्रतिजनं ननु सा त्ववलम्बते ।
अभिभवत्यपि तत् किल मानसं प्रभवमाप यतः किमितोत्तरम् ॥२
निःशल्ये भवने वने च शयने दानेऽर्थसंरक्षणे
माने वा धनसाधने धनवतां कर्म्मार्थिनामर्थिनाम् ।
दुःस्थानामपि योगिनां किमपरं देवाधिपानामपि
स्वान्तं दोलयते लयेन भुवने चिन्ता सदा सङ्गिनी ॥३

नानाकारतया तया सुरतया व्याप्ता त्रिलोकी सदा
लोको यस्त्वपि भावनाविरहितः स स्याज्जडो जीवने ।
चिन्तायाः खलु शक्तिरत्र भुवने श्रुत्वा वरीवृत्यते
चेतो यामनुभूय नन्दतितरां दुःखायते च क्वचित् ॥४

द्वेधा विभज्य ननु सात्मविभूतिमेत
लोकं विमोहयति कृत्रिमविक्रमेण ।
वेशाङ्गनेव चपला च वशीकरोति
ररम्यते क्वचिदपि प्रमदेव रक्ता ॥५

एका तयोर्नयनरोधकरी च्छलेन
वामेव कौतुकवती कुटिलार्थकामा ।
एवं नयत्यनियत विनयं विनैव
द्रागुत्पथं पथिकवत् त्वयपत्त्वरात्रि' ॥६

सा दुर्गतापि रमते हृदि दुर्गताना
आपातभोगसुरसानि च साधनानि ।
अर्थाय सन्दिशति दुर्मतिसार्थकाय
व्यर्थेषु तेषु विषमा दहतीव मर्म्म ॥७

यानाश्रयत्यनुगतेव मते स्थितेव
प्रागानता विषयसम्मदमावहन्ती ।
अन्तर्निवेश्य सहसा विषमा वहन्ति
तानेव हन्त कुटिला कुगता हि चिन्ता ॥८

कामातुरान्तरमिय भजते त्वकामा
मायेव मोहनविधौ विविधात्मवेशा ।
नैवं जहाति चपलापि खलस्य चित्तं
सौदामिनीव रसदायकधूमयोनिम् ॥९

एकाकिनीयमपि लोकगणं महिम्ना
मुग्धीकरोति सदृशी गुणिभिन्नशक्त्या ।

नानाकृतिष्व विषयेषु पदार्थनिष्ठा
धारेव मेघपतिता स्थलभेदितापाम् ॥१०
कादम्बिनीव लवणाम्बुधिनीरलीला
सूर्य्यं रुणद्धि सहसा च विवेकमेषा।
देहप्रभां हरति हन्त रुजेव दीर्घा
ज्वालेव सदहति मर्म्मदृणं मनोऽपि ॥११
कर्म्मस्पृहामपि जरेव निराकरोति
ज्योतिर्दृशोरिव नयत्यनयेन मान्द्यम्।
हेलेव खेलनचलान्तरवर्त्तितेव
हन्त्यायतावुदयपद्धतिमङ्गलानि ॥१२
व्याजेन केनचिदिय प्रसभेन लोक
दुर्लङ्घिताश्रयति नाम पिशाचिकेव।
कालेन शान्तिमपहन्ति तनोति दुःख
प्राणान् वहिर्नयति च क्षिपतोच्चणेन ॥१३
आनन्दयत्युपकरोति च सत्पथान्ते
ज्योतिष्मती निशि नु दीपशिखेव चार्थम्।
सन्दर्शयत्यपि निदर्शनदर्शरात्री
मोहान्धकारमपरापरमेव हन्ति ॥१४
हत्वान्तरायविषमा विषयप्रसक्ति
भक्तिः सतीव महती महमावहन्ती।
संयोजयत्यभिमतेन पदेन तेन
यत्सम्पदा भवविपन्न पुनर्दुनोति ॥१५
चिन्तेयमन्तिकगता रमणीव रम्या
चेत. प्रमोदयति मोदयविभ्रमेण।
चिन्तामणिं मनसि नाम निधाय धाम्ना
योगेन दर्शयति तत्परमं पदार्थम् ॥१६

सद्वृत्तिरुन्नतदशा सदृशेन्दुभासा
हंसानुकूलगमना सुमना इवासौ ।
योगानुरागि हृदयं सदय सदैव
दैवानुभावत इवाश्रयते मनोज्ञा ॥१७

चिन्ते ! यदि स्वजनकं कृशता श्रयन्तं
मोह मुहुर्नयसि हा पथि धावयन्ती ।
कस्तर्हि वाञ्छतितरामुदयं सुताना
स्वार्थप्रिय हि नियतं प्रतिभाति विश्वम् ॥१८

तस्मान्ममैकमुदितं मुदित कुलस्य
स्वीयं कुभावमपहाय सुभावमेहि ।
कल्याणि तत्पदमुपानय यस्य लाभात्
शान्तिं नु दुर्ललितमानसमेष्यतीति ॥१९

भावनेऽयि सुगते यदि त्वया नन्दनन्दनमनिन्द्यसुन्दरम ।
वीक्ष्य एव शिवसम्पदा तदा लक्षिता पुनरथोन्नता गतिः ॥२०
त्वत्कृते ललितमानसे सदा खेलता विकचमोहनीरजे ।
कृष्णरक्तपदकेलिहंसकौ नूपुरस्वनविकस्वरस्वरौ ॥२१

---

## शिक्षा स्वाधीनता च नारीणाम्

[ निबन्धक —श्रीसुरेन्द्रमोहनपञ्चतीर्थवेदान्तशास्त्री ]

प्राचीनतमे वैदिकयुगीयेतिहासे यथा वयं "विश्ववारा"—प्रभृतीना शिक्षितरमणीना निर्देशमाप्नुमस्तथोपनिषद्युगेऽपि 'गार्गी-मैत्रेय्या दयो' विदुष्यो नार्य्य उपलभ्यन्ते । न केवल नामत एव तासां 'विदुषीति' विशेषणम्, प्रकृत्यैव काचिद् गार्गीति नाम परमविदुषा याज्ञवल्क्येन सह विशालायां राजसभायां ब्रह्मविद्याविषये तर्क-

कारिणो ब्रह्मवादिनो तापसी। कोऽयमात्मा कोऽनात्मेति मानवाना श्रेष्ठप्रश्नविधौ—आत्मानात्मविवेकसाक्षात्कारे—या हि सङ्ख्यातीताना संख्यावतामृषीणां सविधे निर्भयमालपितु समर्था, सा न नगण्या, नवाऽधन्या, अपि तु मान्या वरेण्यैव, तदधिगताया विद्याया परिमापोऽपि दुष्कर एव।

ततस्त्रेताया रामायणीय विवरणम्, द्वापरे च महाभारत भारतो तत्र तत्र नानाचरित्रोपेताना नानानारीचित्राणा समावेश.। रामायणस्य मुख्यो वृत्तान्त. किमस्मान् शिक्षयति ? शिक्षयति हि नारीं प्रति नराणा सम्मानज्ञानं, पत्नीं प्रति पत्यु: प्रगाढ प्रेमाण पत्नीहारकस्य पापाधमस्य शासनार्थं पत्यु प्राणान्तक प्रयासञ्च। अपि च, नार्य्यमर्य्यादाकारी चेत् प्रबलबलोपेत: प्रतापान्वितो नृपतिरपि भवेत्तथापि नास्ति तस्य निष्कृति', जटावल्कलधारिणो भिक्षुकस्य करेऽपि तस्य निधनमनिवार्य्यम्। स्त्रिय: प्रति सम्मानप्रदर्शनकामिन: कति वयं तादृश्या विधया राघव-प्रदर्शितयाऽग्रेसरा भवाम: ?

वयमधुना वाग्विलासेनैव नारीजातिं प्रति मर्य्यादादाने विश्वतोमुखा, विशालाया सभाया क्षुद्राया वा गोष्ठ्या सर्व्वत्रैव वद नारीदु:खेन क्रन्दनं नाटयाम:, न पुन स्मरामो रामायणस्य प्रकृत विवरणम्, न पठामो रामायण सश्रद्ध, न हि पुनरुच्चारयाम: सीतारामनाम सगौरवम्।

द्वापरे खलु द्रौपद्या केशाकर्षणेन भारतेऽस्मिन् यत्तुमुलमायोधनं संप्रवृत्तं, नारीं प्रति नरस्यामर्य्यादया यद् भीषणं "कुरुक्षेत्र" सृष्ट तस्मिंस्तुमुले सङ्ग्रामे, तस्मिन् दारुणे कुरुक्षेत्रे भारतवर्षस्यास्य स्वामिना भारतीयाया: पत्न्या.कृते एतादृश.एव प्रतिशोधो नीतो येन हि निखिलाया भारतभुवो दृष्टिविंस्फारिता सञ्जाता, महाभारतमपि सृष्ट, पत्नीप्राण: पतिगणोऽशेषक्लेशपरम्परासहनसमर्थ इत्यपि प्रतिपन्नम्। अक्षक्रीडायां पराजिता: पञ्च पाण्डवा न तादृग्दु:खभाजो जाता.,

परं प्रकाश्ये राजसदसि रजस्वला पत्नी बलेन समाकृष्टामवलोकयता तेषा भीमाकृतिर्भीमसेनो दुःशासन-शोणितपाने प्रतिज्ञां कृतवान्, दुर्य्योधनमपि स्वकीयोरुभागेऽश्लीलमिङ्गित प्रकटयन्तं निरीक्ष्य तस्योरुभङ्गे शपथो विज्ञापितो मध्यमपाण्डवेन। अथ यथाकालं पाण्डवशत्रवो यथाकाममेव शासनमाप्ताः, पत्नीमर्य्यादाकारिणो हि पतिभिः प्रकामं पराभूता । महाभारतस्य तादृश सुवीर्य्यवर्द्धकं विवरणं कति वयं सानुरागं पठाम , कति वा तस्य प्रकृतमर्थमवगच्छामः ?

एतैरेव नहि पर्य्याप्तम्। भारतस्य सुचारुसाहित्यग्रन्थाना पृष्ठे नारीजातेर्विशुद्धिरक्षार्थं यावन्तः सुनियमाः परिदृश्यन्ते, तावन्ति सुललितवचनान्यपि लक्ष्यन्ते नारीं प्रति नराणा महत्त्वप्रदर्शकानि। कस्यापि प्रदेशस्य कस्मिन्नपि ग्रन्थे नारी किल गृहिणी, सचिवः, सखी, प्रियशिष्या, सती साध्वी पतिव्रतेति वर्ण्यते वा नवेति न ज्ञायतेऽस्माभिः ।

भारतवर्षस्यास्य समुन्नतिमीप्सवोऽनेके महात्मानः समुदारहृदया मनुस्मृतेः काश्चनांशान् समुद्धृत्य एतद्देशीयाः सर्व्व एव शास्त्रकृतो मनीषिणः स्त्री-स्वाधीनताया विरोधिन आसन्निति प्रकटयन्ति। ते तु समुदाहरन्ति

"बाल्ये पितुर्वशे तिष्ठेत् पाणिग्राहस्य यौवने।
पुत्राणां भर्त्तरि प्रेते न भजेत् स्त्री स्वतन्त्रताम् ॥"

अपरत्रोक्त "न स्त्री स्वातन्त्र्यमर्हति।" स्त्रीजनस्य स्वातन्त्र्यं, स्वतन्त्रता, स्वाधीनतेत्यर्थः नास्ति। मन्वादीनामेतादृशी वचनपद्धतिर्नारीजनस्य स्वाधीनताविरोधिनीति ते वदन्ति, पर न पश्यन्त्यपराणि वचनानि।

"यत्र नार्य्यस्तु पूज्यन्ते रमन्ते तत्र देवताः।"
"न गृह गृहमित्याहुर्गृहिणी गृहमुच्यते।"
"सस्त्रीको धर्म्ममाचरेत् ।"

"कन्याऽप्येवं पालनीया शिक्षणीयाऽतियत्नतः ।"

इत्येवंविधानि वाक्यानि तेषां नयनपथे पतित्वाऽपि नापतितानि। अंशेषु दृष्टिमन्तः समग्रेषु च दृष्टिहीना श्रुतिविहीनाश्च ते पक्षपातिनः संस्कारकाः। यत्र हि परिवारे समाजे वा नार्य्यः पूज्यन्ते, तत्र देवा सुप्रसन्ना इत्येवममूल्यं तत्त्वं नारीविषयक कस्य देशस्य कस्मिन् शास्त्रे विद्यते तत् केचन नो वदिष्यन्ति किम् ?

प्रतिपक्षसमर्थको विद्यते कश्चित् श्लोकांशः—

"स्त्री-शूद्र-द्विजबन्धूनां त्रयी न श्रुतिगोचरः॥"

इति वचनस्यास्य गूढोऽर्थो नानामुनिभिर्नाना क्रियते। अतोऽत्र सुधियः प्रमाणम्।

"पुराकल्पेषु नारीणां मौञ्जीबन्धनमिष्यते।
अध्यापनञ्च वेदानां सावित्रीवचनन्तथा॥"

इति यमवचनं पुराकल्पपरं न तु कलियुगपरम्।

साम्प्रतमनेकेषामिव संस्कारपक्षपातिनामाननेषु कस्यचिद् वङ्ग कवेरुक्तिः श्रूयते—

"ना जागिले सब भारतललना,
ए भारत आर जागे ना जागे ना।"

भारतललनानां जागरणाभावेन भारतस्यास्य जागरणं सुदुष्करम् इति। अस्माभिस्तु न ज्ञायते नारीजागरणस्य कीदृशः प्रकारः। विदेशिनीनां रमणीनामनुकरणमनुसरणञ्च यदि नारीजागरणस्य लक्षणं भवेत्तदा देशेऽस्मिंस्तादृग्जागरणं प्रागेवारब्धमिति मन्यामहे। 'स्त्री-स्वाधीनता'पदं यदि विलासिताधीनतां प्रतिपादयेत्तदा सा शनैः शनैरत्र देशे समायाता।

तथाकथितैः स्वाधीनैः (?) पुरुषैः सह प्रतियोगितया स्वाधीनताभिलाषिणीभिर्नारीभिरुपानह', अनुपदीनाः (Stockings) अङ्ग

रक्षकाः (Shirts) "ओयेष्टकोट, ओभारकोट्, आल्ष्टार"प्रभृतयः परिच्छदाश्च धार्य्या भवेयुः, 'चा चुरुट् विडी सिगारेट्' प्रभृतयश्च सेव्याः, विमुक्ते वायुमण्डले एकाकिनीभिर्भ्रमितव्यम्, अबान्धवाभिर्वा यानारोहणं कर्त्तव्यमिति हि यदि स्वाधीनतालक्षणं भवेत्तदा तल्लक्षणं नियतमेव चक्षुरिन्द्रियग्राह्यं भवति। अपराणि च स्वाधीनतालक्षणान्यनुमन्तव्यानि :—सुदीर्घकुन्तलराजीनामकाण्डे ह्रस्वत्वविधानं पुरुषकुन्तलवत्, एकदा तु वैदेशिकः सभ्यसमाज एतद्देशीयाननार्य्यान अर्द्धवसनावृतानर्द्धनग्नानवेक्ष्य तानसभ्या इति तिरश्चकार, अधुना किल परिदृश्यते शीतप्रधानदेशवासिन्योऽपि रमण्यः पुरुषानधःकृत्य स्वासां परिच्छदे वसने च तादृक् कार्पण्यं प्रकटयन्ति, येन कार्पण्येन रमणीनां सर्व्वाण्यङ्गानि नाव्रियन्ते, आवरणप्रचेष्टाऽपि तासां न लक्ष्यते। ऊर्द्ध्वं वक्षः, अधश्च जानु, एतदुभयमेव तासां सर्वेष्वेवर्त्तुषु चारित्रवतां दर्शकानामलोभनीयामाकर्षति दृष्टिम्।

अस्मद्देशीया हि योषितो यदा तादृशीं वसन-स्वाधीनतां व्यसनमिति न मत्वा भूषणमित्यालिङ्गिष्यन्ति, तदैव सुव्यक्ता भवेत् स्त्रीणां परिपूर्णा स्वाधीनता, बन्धनमुक्तिश्च। वङ्गीयमासिकपत्रादीनां चित्रेषु तथा आख्यायिकासु च नारीणां नग्नरूपता समाद्रियते, न तु वीभत्सेति निन्द्यते। नारीजातिमाश्रित्य समाजस्यैतावत्येव क्रीडा व्रीडां न जनयति। आङ्गलविद्यालये तथा शिक्षामन्दिरे च नारीणां पुरुषोचिता शिक्षा, 'वि ए, एम् ए,' इत्याद्युपाधिप्राप्तेरनन्तरं दास्याङ्गीकरणप्रयासः, स्वल्पया हि शिक्षया 'हावड़ा' प्रभृति वाष्पीयशकटस्थानेषु कर्म्मचारित्व, नानाकार्य्यालयेषु च वर्णमालाग्रन्थनं, (Typist), स्वामिना सह वियुक्तायाः सन्तत्यभावः, संयुक्ताया अपि पुत्रकन्यादीनामवेक्षणरक्षणविधावौदासीन्यं, दासदासी-परतन्त्रता, पाचकपुङ्गवकरपक्वान्नव्यञ्जनादिसंसेवनं, स्वकीययौवनस्याविनाशाय सद्यः प्रसूतानपि शिशून् जननीस्तन्यपानवञ्चितान् विधाय धात्रीहस्ते समर्पणं,

स्नेह-दया-माया-ममताविसर्जन, प्रयोजने सति राजकीयव्ययेन स्वमन्तानानामनाथाश्रमे ( कानीनाश्रमे वा ) संस्थापनं, इत्यादीन्य-नेकान्येव स्त्रीशिक्षाया स्त्रीस्वाधीनतायाश्च लक्षणानि ।

पाश्चात्त्याननुकुर्वतो' स्त्रीपुंसयोरनात्मीययोरपि परस्परं सम्मेलनम्, प्रकाशे रङ्गमञ्चे नटनटीभावेनाभिनयचातुर्य्यप्रदर्शन, परिणयात् प्रागेव मधुचन्द्रसंसेवनम् (Honey monly), "स्त्रीषु दुष्टासु वार्ष्णेय जायते वर्णसङ्कर" इत्यादि श्रीमद्भगवद्गीतावचनेष्पेक्षा, वह्निसान्नि-ध्याद् घृतस्य द्रवत्वमिति रासायनिकसत्यस्य मिथ्यात्वेनानङ्गीकारः, इत्यादीन्यपि बहूनि लक्षणानि नारीस्वाधीनतायाः ।

अस्मन्मते तु, वङ्गदेशीया. प्रकृत्यैव शिक्षिता नार्य्य अनुसन्धेयाः संस्कारपक्षपातिभिस्ततश्च ता एव यदि सर्व्वासामादर्श इति भवे-त्तदेव स्त्रीशिक्षायाः स्त्रीस्वाधीनताया अर्थ' परिस्फुटो भवेत् । कया शिक्षया स्वाधीनतया च अस्मद्देशीया नारी विद्यासागरवत् पुत्र जन-यति, केन खलु विशेषगुणोत्कर्षेण गुणवती रमणी भूदेव-गुरुदासवत् सुत प्रसूते, कीदृशी हि शिक्षिता महिला प्रफुल्लचन्द्र जगदीशाशुतोषा-दीना जन्मदायिनी स्यात, किंविधाया विद्याया अधिकारिणी जननी चित्तरञ्जन-विवेकानन्दौ लब्ध्वा रत्नगर्भेत्याख्यायते, तादृगेव शिक्षा स्वाधीनता च वर्त्तमान-कालजाना कुलजानामनुकरणीया, तादृशीना-मेव नारीणा विद्याबुद्धिविवेकान् विचार्य्यास्मद्देशीयानामुन्नति-लिप्सूना रमणीनामीप्सितवर्त्मना गमनमुचितम् ।

चैतन्यरामकृष्णादीना जनयित्रीणा शिक्षाप्रसङ्गस्तावद् दूरत एवास्ता, वङ्गादवहिर्बालगङ्गाधरस्य तथा महात्मनो गान्धिनः प्रसवि त्रीणा विद्यावत्ताऽपि नैवात्र प्रकाश्यतेऽस्माभि ।

शङ्करावतारस्य शङ्करस्य तथा तत्पूर्ववर्त्तिनामशेषशास्त्रतत्त्वज्ञाना-मृषीणा, वैज्ञानिकाना, ज्योतिर्विदा जननीगणोऽपि कस्मादपि विद्या-लयात् शिक्षामधिगम्य तादृशान् ज्योतिष्कसमान् सुतानसूतेति वार्त्ता

न ज्ञायते, न ज्ञायते च तेषां मातृवर्गस्य पुरुषैः सह प्रतियोगितेति-हासः। पक्षान्तरे तु सर्वैरेव सुधीभिरिदमनुसन्धेयम्। अधुनातने वङ्गसमाजे या शिक्षा समुन्नतादर्शरूपेण परिगृह्यते, यया शिक्षयाऽनेका मातरो भगिन्यश्च, सुताश्च सुशिक्षितास्तासां मध्ये कतमा विद्यासागरमिव पुत्रमलभन्त, कति वा रवीन्द्राशुतोषप्रफुल्लजगदीशवत् सुतानसुवत?

शिक्षितानां नारीणां सन्ततयो यदि शिक्षिता न स्युः, पक्षान्तरेऽशिक्षितेति प्रतिपन्नानां रमणीनामुदरेषु यदि वह्निस्फुलिङ्गवत् सन्ततयो जननं लभन्ते तदा वयं मध्यस्थाः कीदृशीं शिक्षामभिनन्दामः कीदृशीं वा शिक्षां वर्ज्जयामः?

वेशान्त-सरोजिनी-सुथुलक्ष्मीप्रभृतीनां जनन्यः तथा तासां स्वरूपं यदि सूक्ष्मं परीक्ष्यन्ते तदेतादृक् सत्यं नैवाविष्कृतं भविष्यति यत् पाश्चात्यदेशीया शिक्षैव श्रेष्ठतमाऽस्मद्देशीया तु नगण्या। अस्मन्मते तु स्त्रीशिक्षायाः सप्रयोजनत्वेऽप्येतद्देशीयप्रथयैव तया भवितव्यम्। वैदेशिकी शिक्षा चेदस्माकं रमणीभिरभ्यर्थिता भवेत्तदा वयमपि सर्वे एकदा सम्यग् विदेशिनो भवेम स्त्रियश्च नो विदेशभावानुमण्डिता स्वदेशभाववर्ज्जनपण्डिता भवेयुः।

प्रातःस्मरणीया 'राणीभवानी, अहल्यावाई, वीराङ्गना च लक्ष्मीवाई, शक्तिमती श्रीमती तारावाई, महाराणी भिक्टोरिया, चाँद सुलताना, एलिजावेथ' प्रमुखाणां योषितां शिक्षा स्वाधीनता च कासाञ्चित् कामनीया कथं न स्यात्? पुरुषैः सह प्रतियोगितया पुरन्ध्रीणां पुरुषत्वाधिगतिप्रयासस्तावत् परमपितुः परमेश्वरस्य सृष्टिव्यापारप्रतिकूलतायामुद्यमः। नार्य्यः स्वेच्छया स्वासां कुन्तलकलापं प्रकामं खर्व्वीकुर्वन्तु नाम, प्रकृत्या समुन्नतं वक्षःप्रदेशमप्राकृत-व्यवस्थया शोषयन्तु पीडयन्तु च नाम, तथापि भगवतः सृष्टिकौशलं नैव व्यर्थतामापत्स्यते, नर-नार्य्योर्निर्माणपार्थक्यञ्च नैवान्यथा भविष्यति। दृश्यते

हि नारीजागरणं नारीसंग्रामश्च साम्प्रत विधातृविधानविरःधकरे, स्रष्टुः पक्षपातित्वप्रतिषेधकरे च।

फरासीदेशीयस्तावत् कोऽपि 'नारीसङ्घ', काचिदपि तासां गुर्विणी न भवितेति प्रचारितवान्। यत सर्वत्रैव पुमांसो न कस्मि-न्नपि काले गुर्वी प्रसववेदना सहन्ते न जानन्ति च सन्तानपालन-प्रपीडनमतो वनिता अपि कथ तत्र समर्था भविष्यन्ति? एतावती हि तासां प्रचेष्टा किं जनन सयमनायोत जननिरोधाय (Birth control) तत् केन परिज्ञायते।

"वाइवेल"ग्रन्थस्य "आदम" ( आदिमनु. ? ) "इभ् च" सांख्य-दर्शने पुरुषप्रकृती इति। जडविज्ञाने चाकर्षणी विकर्षणी च शक्तिः (Positive and Negative)। द्वैतभावमिम परित्यज्य निखिल-भुवनस्य नारीसङ्घो यदि कदाचित् शिक्षया स्वाधीनतया च "अखण्ड-मेकमद्वय ब्रह्मतत्त्व"मधिगच्छेत्तदा सर्वमिद जगद्‌द्वैतं विलीनं भवेत्, रज्जौ सर्पभ्रान्तिर्विदूरिता स्यात्, नित्य सत्य चिन्मयज्योतिविकाशेन परमानन्दसन्दोहः समुत्पद्येत, नारोपरिषद्वर आधयो व्याधयश्च दूरं पलायिष्यन्ते, शिक्षितानामबलाना बल जनिष्यते, दृष्टिशक्तिः पुन-रावर्त्तिष्यते, उपनेत्रधारणप्रयोजन न भवेत्, शिक्षिताना प्राप्तवयस्का-नाञ्च नारीणां सन्ततयः परिपुष्टकलेवरा विद्वांसो दीर्घायुषश्च भवेयुः, कि बहुना नारीणां शिक्षया स्वाधीनतया नरसमाजोऽपि यदि गन्तव्य-मधिगच्छेत्, प्राप्तव्य प्राप्नुयात्तदा न स्यास्यत्र जगति केषामपि शोकभयाशङ्का। भूमा आनन्दः, दुःखनिवृत्तिरनन्तसुखाधिगतिश्च।

---

## परिषदो वर्त्तमानवर्षीयपरिचालकनामानि

### सभापतिः—

महामहोपाध्याय-श्रीयुक्त-दुर्गाचरण साङ्ख्य-वेदान्ततीर्थः

### सह-सभापतयः—

१। महामहोपाध्याय-डाः-श्रीयुक्त-भागवतकुमारगोस्वामी, एम्-ए, पि एच्-डि

२। महामहोपाध्याय-श्रीमद्-अनन्तकृष्णशास्त्री

३। पण्डित श्रीयुक्तद्वारिकानाथन्यायशास्त्री

४। पण्डित श्रीयुक्तसीतारामशास्त्री च

### सम्पादकः—

पण्डित श्रीमद् अमरेश्वरठाकुरवेदान्तशास्त्री, एम्-ए

### सह-सम्पादकाः—

१। पण्डित-श्रीयुक्तदीनबन्धुसाहित्यशास्त्री

२। „ „ वामाचरणकाव्यतीर्थः

३। „ „ चिन्ताहरणचक्रवर्त्ती, एम्-ए, काव्यतीर्थः

४। „ „ अशोकनाथभट्टाचार्य्यः एम् ए

५। „ „ रामकृष्णचक्रवर्त्ती, एम् ए च

### पत्रिका-सम्पादकः—

पण्डित श्रीयुक्त-कालीपदतर्काचार्य्यः

### पत्रिका-सहसम्पादकः—

पण्डित-श्रीयुक्तदुर्गामोहनकाव्य-साङ्ख्य पुराणतीर्थः, एम्-ए

## ग्रन्थाध्यक्षाः—

| | |
|---|---|
| पण्डित-श्रीयुक्तजानकीनाथ साहित्यशास्त्री<br>„ „ चिन्ताहरणकाव्यतीर्थः, एम्-ए | हस्तलिखित-पुस्तकविभागे |
| „ „ वामाचरणकाव्यतीर्थ<br>„ „ अशोकनाथभट्टाचार्य्य, एम् ए च | मुद्रित-पुस्तक-विभागे |

## अध्यापकः—

पण्डित-श्रीयुक्त-कालीपदतर्काचार्य्यः

## नाट्यसम्पादकौ—

१। पण्डित-श्रीयुक्त-जगन्मोहनज्योतिर्विनोदः
२। „ „ वामापदविद्यारत्नश्च

**सङ्गीताचार्य्यः**—श्रीयुक्त-सतीशचन्द्रनियोगी

## आय-व्यय-लिपिरक्षकः—

श्रीयुक्त-रामकृष्णचक्रवर्त्ती, एम्-ए

## आय-व्यय-परीक्षकः—

श्रीयुक्त-मलयकुमारदेवः बि एस् सि, जि-डि ए

---

## कार्य्यनिर्वाहकसभ्याः—

१। पण्डित-श्रीयुक्त-जगदीशचन्द्रवेदव्यासः
२। „ „ जगन्मोहनज्योतिर्विनोदः
३। „ „ अक्षयकुमारशास्त्री
४। „ „ वामापदविद्यारत्न
५। कविराजः श्रीयुक्त-श्यामादासवाचस्पतिः
६। „ „ ताराचरणदर्शनतीर्थ.
७। „ „ वागीश्वरकाव्यतीर्थः
८। पण्डित-श्रीयुक्त-जानकीनाथसाहित्यशास्त्री

९। पण्डित-श्रीयुक्त-नगेन्द्रनाथसिद्धान्तरत्नः
१०। " " कालीपदतर्काचार्य्यः
११। " " योगेन्द्रमोहनविद्यारत्नः
१२। " " श्रीधरव्याकरणतीर्थकाव्यविनोदः
१३। " " चण्डीचरणतर्कतीर्थः
१४। " " नरेन्द्रनाथपञ्चतीर्थः
१५। " " दक्षिणाचरणभट्टाचार्य्यः
१६। " " माधवदाससांख्यतीर्थः, एम् ए
१७। " " कृष्णचन्द्रस्मृतितीर्थः
१८। " " राधारमणविद्याभूषणः
१९। " " भुवनमोहनसांख्यतीर्थः
२०। " " प्रभातचन्द्रकाव्यतीर्थः, एम् ए, पि-एच्-डि, पि-आर्-एस्
२१। " " जानकीवल्लभभट्टाचार्य्यः, एम्-ए
२२। " " दक्षिणारञ्जनशास्त्री, एम् ए
२३। राय-वाहादुर श्रीयुक्तचुणीलालवसुः, एम् ए, एम् वि
२४। श्रीयुक्तयतीन्द्रनाथवसुः, एम्-ए
२५। डाक्तार-श्रीयुक्तकृष्णगोपालभट्टाचार्य्यः, एम्-वि
२६। राय-श्रीयुक्तवद्रिदासगोयेन्काबाहादुरः, वि-ए, सि-आइ-इ
२७। पण्डित-श्रीयुक्तदुर्गामोहनकाव्यसांख्यपुराणतीर्थः, एम्-ए
२८। श्रीयुक्तमन्मथनाथसेनः, एम् ए, वि-एल्
२९। पण्डित-श्रीयुक्त-कालीपदव्याकरणतीर्थः
३०। " " क्षितीशचन्द्रचट्टोपाध्यायः, एम्-ए
३१। श्रीयुक्त-काशीनाथभट्टाचार्य्यः, वि-एस्-सि, (इञ्जिनि०)
३२। डाः " सुनीतिकुमारचट्टोपाध्यायः, एम्-ए, डि लिट्
३३। श्रीयुक्त-रतिपतिरायचतुर्धुरीणः

सभापति-सहसभापति सम्पादक-सहसम्पादकाश्च

# परिषदः त्रयोदशवार्षिकमहोत्सव.

[ लेखकः—श्रीउपेन्द्रमोहन काव्य-साङ्ख्यतीर्थः ]

व्यतीत सौरभाद्रपदस्य तृतीयदिवसे रविवासरे साय सार्द्धषष्ठघटिकायाम् "इउनिभार्सिटि इनिष्टिटिउट्" इत्याख्य-साधारणसभागृहे परिषदः त्रयोदश वार्षिकमहोत्सवो महता समाडम्बरेण सुसमपद्यतेति प्रथममानन्दनिदानं विदितमस्तु परिषत्पक्षावलम्बिना विदुषाम्। तत्र परिषत्स्थिरसभापतीना महामहोपाध्याय-श्रीयुक्तदुर्गाचरण-साङ्ख्य-वेदान्ततीर्थमहोदयाना प्रस्तावेन,सहसभापतीनां म म-श्रीयुक्त-भागवतकुमारशास्त्रिमहोदयाना समर्थनेन माननीया' प्राड्विवाकवरेण्या' श्रीमन्तो द्वारकानाथमित्रमहोदयाः सदयं सभानेतृपदमलमकुर्वन्निति द्वितीयं पदमानन्दस्य। समवेतेषु च पण्डिता महामहोपाध्यायप्रायाः, आङ्गलशिक्षिता' विश्वविद्यालयोच्चोपाधिधारिप्रायाः, वैषयिकाश्च गण्यमान्यवदान्यधनिप्राया' सभ्याः सभातलमलमकार्षु'। सभादौ किन्नरकण्ठेन श्रीयुक्तविष्णुपद-दत्तेन विशुद्धताललयसंयोगेन गीतमुद्बोधनसङ्गीतं बृहत्तरं सभामन्दिर सद्योत्तर सभ्यवृन्दञ्च सममेव नि शब्दस्तम्भितमकार्षीत्। सभापतिवरणादूर्द्धं परिषत्सम्पादकेन श्रीमद्-अमरेश्वरठाकुर एम्-ए वेदान्तशास्त्रिणा संस्कृतभाषामय सुललित कार्य्यविवरण पठितमासीत्। ततश्च सभापतिना स्वर्गतसम्पादकस्य पशुपतिनाथशास्त्रिणस्तैलचित्रावरणे समुन्मोचिते, केचिद् वाग्मिनो वाक्पटुतया सभ्यानरञ्जयन्। इदमत्र यथावसरं वक्तव्यमेव यदस्य तैलचित्रस्याङ्कन विधौ निपुणचित्रकरेण श्रीमता सुरेन्द्रनाथवागचिमहोदयेन महान् परिश्रमः कृत इति तस्मै यथायोग्यं धन्यवाद' प्रदीयते। ततश्च राजकीय-संस्कृतमहाविद्यालयाध्यापकस्य श्रीयुक्त शितिकण्ठवाचस्पतिमहोदयस्य 'महामहोपाध्यायो'पाधिप्राप्तौ तथा रायबाहादुर बद्रिदासगोयेन्काहोदयस्य 'सि आइ इ' इत्युपाधिप्राप्तौ श्रीमद्-उपेन्द्रमोहनसाङ्ख्य-

तीर्थनिबद्धा अभिनन्दनश्लोकाः परिषत्सहसम्पादक-श्रीयुक्तचिन्ता-हरणकाव्यतीर्थ एम्-ए महोदय-परिषत्पत्रिकासहसम्पादक श्रीयुक्तदुर्गा-मोहनकाव्यसांख्यपुराणतीर्थ एम् ए महोदयाभ्यां यथाक्रमं वाचिताः। सभापतेरभिभाषणानन्तरं सभापतेर्धन्यवादेन निष्ठां गतं सभाकार्य्यम्। ततश्च परिषत्सदस्यैः भवभूतिकृत"श्रीउत्तररामचरित"स्य बोधायनकविकृत"भगवदज्जुकीय"स्य च रूपकयोरभिनयेन समागताः सभ्याः समनुरञ्जिताः। सर्वाङ्गसुन्दरोऽयमभिनयः समजनीति सामाजिकानामविसंवादी वादः। तत्र च प्रथमत एव लवभूमिकामारूढस्य चतुर्दशवर्षदेशीयबालकस्य अभिनयचातुर्य्यं मनांसि समाक्रामत् श्रोतॄणाम्। संस्कृतभाषामनभ्यासात्मप्यधीयानस्य तस्य सुपरिशुद्धा वाक्पद्धतिरुच्चारणशैली च, प्रवेशनिर्गमननैपुण्यम् आङ्गिकक्रिया च तथा सुप्रयुक्ता आसन्, यथा तेषु विषयेषु ततोऽधिकं नैपुण्यं प्रवयसामपि चिरानुशीलिताभिनयव्यापाराणामपि नैव सम्भवेदिति न वाञ्छातम्। चन्द्रकेतुरपि नाटके यथोपवर्णितः कविना, तथैव प्रकृतेऽपि नैकान्ततः परिहीयते लवादिति बलवान् लोकसङ्कल्पः। किन्तु कवेर्लेखमयश्चन्द्रकेतुर्यथा स्वत एव लवादीषन्न्यूनतामावहन् प्रतिभाति सामाजिकवर्गेषु, तथवाभिनयेऽपि तदधिकृतैर्विनेटभिर्निपुणतया कविप्रत्ययमनुरुन्धानैरिव शैलूषस्यापि चन्द्रकेतोः किञ्चिदन्तरं विहितमित्यन्तर लोकानाम्। सीतायाश्चाभिनयः सर्वाङ्गपूर्णोऽपि प्रमाणाधिकस्य रामभद्रस्य समीपे वर्त्तमाना क्षीणाङ्गयष्टितया केषाञ्चिद् वैमनस्यहेतुरभवदित्यकिञ्चित्करमेतत् 'द्वयष्टवर्षोऽष्टवर्षा वै"ति स्मृतिप्रामाण्यात्तथादर्शनस्य वैरस्यापातासम्भवात्। विशेषतश्चोत्तररामचरितीय सीतायाः पतिसान्निध्यस्याल्पकालिकत्वादाकार-वैसादृश्यं विरुद्धमतिकारि नैवाभवदित्यपि केचित् सुधियः प्रमाणयन्ति। पर "परिपाण्डु-दुर्बलकपोलसुन्दरं, दधतो विलोलकबरीकमाननम्" सीता, प्रियवचनतया सर्वानेव रङ्गप्रेक्षकान् अक्षिपक्ष्मपातविलम्बमप्यसहमानानकार्षीदिति प्रत्यक्षमेव

सर्वेषाम्। सहचर्य्याश्चास्यास्तमसाया रूपमाधुर्य्यं योजनोचित-तत्तद्-भावाभिव्यक्ति, तथा तदुचितस्वरलालित्यञ्च सर्वेषामेव मनोऽमादयन्नित्यत्र अपि वयं नोदास्महे। यद्यस्याः कण्ठस्वरः प्रयुक्तस्वरापेक्षया काञ्चित्तारता-मभजिष्यत तदा नूनमभिनयोऽपि परामेवोत्कर्षकाष्ठामारोक्ष्यत्, तेन च सीताभूमिकैवास्याः समुपयुज्यमाना दर्शकान् प्रमोदसिन्धौ न्यमज्जयिष्यदिति। एतदनन्तरमेव शम्बूकभूमिकामवलम्बमानो मनः समाक्रामति, रामभद्र-खड्गप्रहारेणारूढ-"दिव्योज्ज्वलवेशः" शम्बूकः प्रकृत्यैव सामाजिकनयनेषु स्वर्गीयसुषमां समापातयदिति प्राप्तचक्षुर्जन्मफलास्ते कृतकृत्या इव सामाजिकाः। अभिनयोऽप्यस्याङ्गिको वाचिकश्च परामुपभोग्यतामभजदिति नास्ति कश्चित् सन्देहः। वासन्ती च सीतायाः प्रियसखी अङ्गेन वाचा च तत्तद्-सानुकूल्येनाभिनयन्ती सर्वेषामेव रङ्गप्रेक्षकाणां हृदयङ्गमा जातेति किं बहुनोक्तेन। अरुन्धत्याश्चाभिनयोऽपि मनोरमो जातः, परं पारिपार्श्विक्या कयाचित् कारणपरम्परया तदभिनयस्तथात्वेन नोपलब्धः सामाजिकैरिति स-दुःखमावेदयामः। कञ्चुकिनश्च वार्धक्यं वचसा वेशेन च सुतरामभिव्यज्यमानमानन्दहेतुरभवद्दर्शकानामिति। सुमन्त्रेण च रथयन्त्रिणा परं नैपुण्यं प्रकटय्याभिनयेऽपि वाचिके कौशलं नाविष्कृतमिति • व वक्तुं शक्यते, परमभिनेयवस्त्वभावात् सुप्रयुक्तोऽप्यभिनयो दर्शकानां हृदयक्षोभेऽपि पर्य्याप्तप्रमोदाय न समपद्यत इत्यनिच्छन्तोऽपि बलादिव ब्रूमः। विद्याधरविद्याधर्य्यौ च शरीरशोभया सुप्रयुक्तस्थानादिमाहात्म्येन च पर्वतपृष्ठे आलिखिताविव सभ्यानां भ्रमं समुदपादयतामित्यत्र द्रष्टारः प्रमाणतामधिगच्छन्ति। तयोरभिनयोऽपि रमणीयः समभूत्। कुशस्य त्वभिनयः सर्वावस्थादिति तदानीं प्रायेण सामाजिकाभावात्र तस्योक्तेर्नाम श्रूयते, परं सोऽपि दर्शकानां नैव विरागमावहदिति प्रत्यक्षदर्शिना मतम्।

दुर्मुखश्च राजधर्मणि जागरूकः कविनैव न विशेषेण प्रियंवदः

क्षत इति निर्दोषमभिनयन्नपि शोच्यस्तपस्वी। लक्ष्मणश्च देहकान्त्या सुलक्षणो यथायथमभिनीतवान् स्वां भूमिकाम्। तस्याप्यभिनेयांशे नास्ति काचिद् विचित्रतेति किमधिकमेतस्मादभिप्रेम:। रामस्त्वव-शिष्यते,—का वा तस्य समालोचना, विस्मयेन परवन्तो वयं विमूढा एव जातास्तदभिनयदर्शनेन। मूर्त्तिमतो रसान् साक्षात्कुर्वंत इव तस्याबियुक्तदशायाम् "इय गेहे लक्ष्मीरियममृतवर्त्तिर्नयनयो"रित्या-दीनि, वासन्तीसविधे च "देव्या शून्यस्य जगतो द्वादश: परिवत्सर:" इत्यादीनि, सीतासमक्षञ्च "गृहीतो य: पूर्वं परिणयविधौ कङ्कण-धर:" इत्यादीनि अभिनीतवस्तूनि सर्वानेव विस्मयरस-समुद्रमग्ना-नकुर्वन्। यच्च तेषामादावेव स्वकपोलकल्पितमुपविष्टाया' सीतायाः समीपे अपटीक्षेपेण व्यग्रमुपस्थानं, तदतीव हृदयग्राहकमभूत् नाट्य-कलानुशीलनपराणामुपस्थितसभ्यानाम्। केचिच्च तस्यात्यावश्यक-स्याभिनयस्यापि अतिभूमिगतत्वमुत्प्रेक्षमाणा: श्रूयन्ते। अवश्यकर्त्तव्येषु सन्ध्यावन्दनादिष्वपि बाहुल्याशङ्किन: केचिदाधुनिका इव तेऽपि सहृदयैरवश्यमनुकम्पनीया:। स्वयमनन्यप्रेरणया अनुभूय प्रयुक्ता-स्तस्याङ्गिकाभिनया: सचेतसो विशेषज्ञविशेषानतिमात्रं प्रामोदयन्। अलमत्यालोचनया, पिण्डितार्थस्तु अभिनेतार' सर्वं एव निपुणा: निपुणविनेतृभिरनुशिष्यमाणाश्च न मनागपि हीयन्ते शैलूषताजीविभ्यो-ऽपि सम्प्रदायविशेषेभ्य:। तावेवात्र सुतरां प्रशस्तिमन्तौ नाट्यसम्पादकौ श्रीयुक्तजगन्मोहनज्योतिर्विनोद श्रीयुक्तवामापदविद्यारत्नौ, ययोरात्राण-पातपरिश्रमेणैते शैलूषास्तथाविधानभिनयानकार्षु:, परिषदश्च सम्माना-तिरेकं प्राचीकशन् इति। नाटकाङ्गीभूतानि गीतानि च सुरचितानि सुगीतानि च श्रोतॄणां कर्णमनोरसायनानि अभिनेयवस्तुन: परमुपकुर्वन्ति स्मेति वक्तव्यं। तत्र च रचयितृतया श्रीयुक्त कालीपदतर्काचार्य्य:, गायक-तया च श्रीयुक्तश्यामाप्रसादवन्द्योपाध्याय-श्रीयुक्तविष्णुपददत्तमहोदयौ धन्यवादार्हा: समजायन्त पारिषदाना समागतसामाजिकानाञ्चेति।

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम् ॥

| | | |
|---|---|---|
| October, 1928 | १८५० शकीये आश्विने ११श-वर्षस्य ६ष्ठ-संख्या | Vol XI No, 6 |

## प्रार्थनावेदनम्

[ निबन्धक :—श्रीयोगेन्द्रनाथ-साङ्ख्य-स्मृतितीर्थः ]

देवि ! त्वमेव निजभूतिविकाशहेतो-
र्लीलाच्छलेन जगदात्मकता-ग्रहाय ।
दृष्टासि वीक्षणपरा भव-नामरूपे
कुम्भादिभाण्डमयता खलु मृत्तिकेव ॥ १ ॥
मायाप्रपञ्चभवरङ्गनिकेतनेऽस्मिन्
माता पिता प्रणयिनी सहजस्तनूजः ।
शत्रुः सखाथ गुरुरिष्टमते स्वनाट्यं
त्वन्माययाभिनयति स्वयमेव वा त्वम् ॥ २ ॥
इत्थं स्वरूपकलनादिह विश्वमूर्त्ते !
निर्णीयसे कथमहो त्वमनन्तरूपे ! ।
स्त्रीपुंस्वरूपभजनादपि केन नाम्ना
त्वामाह्वयामि वद मां मिथुनस्वभावे ! ॥ ३ ॥

नानाश्रुतिस्मृति-पुराण-सुदर्शनेभ्यो
भिन्नेऽध्वनि प्रचरिते परमेतदेवम् ।
भेदाद् रुचेर्बहुपथं जुषतां जनानां
गम्या त्वमेव जलधि पयसामिवासि ॥ ४ ॥
दुर्गे ! समुद्धरसि सङ्कतितः सपुण्यं
स्यात् पुण्यतस्तरति स क्व नु ते महत्त्वम् ।
यद्यप्यमुं तरसि तारिणि ! पापिनं मा
तत्त्वन्महत्त्वमपि तु प्रकृतं महत्त्वम् ॥ ५ ॥
ध्यानाय कल्पिततनुस्त्वमये मयासि
स्तोत्रेण निर्व्वचनता न्ववमानिता ते ।
दूरीकृता च विभुता बहुतीर्थयाने-
र्दोषत्रयं कृतमिदं जननि क्षमस्व ! ॥ ६ ॥
ध्यानावरुद्धमनसा मनसाऽप्यचिन्त्यं
ज्योतिः परञ्च मुनयो ह्यवलोकयन्ति ।
पश्यन्तु किन्तु सुतनुः प्रतिभातु सा न-
श्चेतश्चमत्कृतिकृते वितनोतु भक्तिम् ॥ ७ ॥
मूको भवेद् वचनभाग् नयनैर्युतोऽन्धः
खञ्जो जनो द्रुतगतिर्बधिरः सुकर्णः ।
मूर्खः सुधीरिह शिवे ! करुणाकणैस्ते
पुत्रा वयं तव कथं करुणाविहीनाः ॥ ८ ॥
कर्म्मेन्द्रियैर्मम सदा चरणादिभिर्यै-
र्ज्ञानेन्द्रियैश्च नयनादिभिरेभिरन्यम् ।
कायेन कर्म्मभिरथो मनसा कृतं यं
सर्व्वं क्षमस्व तमिमञ्च ममापराधम् ॥ ९ ॥
पुण्यं ह्यनुष्ठितमथो चरितञ्च पापं
नास्मिन् विधानमविधानमवैमि तत्त्वम् ।

ध्मातन्तु यन्त्रमिव तेऽखिलविश्वयन्त्रि !
त्वं यत्तु कारयसि मा क्रियते मया तत् ॥ १० ॥
जल्पामि यत्तु नियतं यति कल्पयामी-
त्युत्थाय यान्ति विलयं स्वमनोरथा मे ।
वैधव्यदग्धमनसां कुलबालिकानां
वक्षोभुवाविव निरर्थकभूनिपाती ॥ ११ ॥
दारिद्र्यवारिधिसमुत्तरणप्रवृत्तो
मायानिधानतनयादिभृतौ प्रसक्तः ।
अर्थाशयाऽत्र परितः समटन् प्रलुब्धो
वाहीव पीडिततनुः श्रममेव भुङ्क्ते ॥ १२ ॥
यत्किञ्चिदर्जितमहो महता श्रमेण
वर्षातपौ तनुतपौ शिरसा विषह्य ।
षट्शत्रवस्तदखिलं विलयं नयन्ति
हा हा ! हतोऽस्मि भवपत्नि ! वृथा प्रसक्त्या ॥ १३ ॥
पूजा हि ते विषयभोगविधिर्ममायं
निद्रा समाधिरचना स्तुतयो गिरश्च ।
यानं प्रदक्षिणविधिः प्रणतिर्निपातो
यद्यत् करोमि वरदे ! तव पूजनं तत् ॥ १४ ॥
उद्बोध-भारतमिदं तमसाऽप्रकाशं
दुःखाकरव्यसनपीडनलुप्तवीर्य्यम् ।
पाश्चात्त्यभावितविलासितचित्तवृत्ति
भ्रष्टार्य्यगौरवपथं कुपथाश्रित सत् ॥ १५ ॥
किं याच्यतेऽपरमशेषविशेषशक्ते !
मातस्तवैव तनया अपि शक्तिहीनाः ।
शक्तिञ्च रक्तिमथ भक्तिमकामजन्यां
स्वार्थं परार्थमनिशं वितर प्रजासु ॥ १६ ॥

दुःखं त्रितापजनु मानसतामसं नौ
भद्रे ! निरस्य जनयस्व मतिं स्वधर्म्मे ।
बुद्धिं हिते जननि ! कर्म्मणि चित्तशुद्धिं
प्रज्ञां शुभां तव पदे हि निवेदनं मे ॥ १७ ॥

---

# श्रीकृष्णचैतन्य-चरितम् ।

[ निबन्धक :—भक्तिसागरः श्रीकालीहरदासवसुविद्याविनोदः ]

## श्रीनवद्वीप-लीला

### प्रथमः परिच्छेदः

श्रीहट्टप्रदेशे ढाकारदक्षिण इति ग्रामोऽस्ति । तत्र उपेन्द्रमिश्रो नामैकः ब्राह्मण आसीत् । तस्य सप्त पुत्रा अभवन् । तेषां तृतीयो जगन्नाथमिश्रो विद्याशिक्षार्थं पित्रा प्रेरितो नवद्वीपेऽवसत् । तस्मिन् प्रदेशे जयपुर इति अपरो ग्रामोऽस्ति । तन्निवासी नीलाम्बरचक्रवर्त्ती नाम अपरो ब्राह्मणः स्वनिवासभूमिं परित्यज्य नवद्वीपे वासमकरोत् । जगन्नाथः कतिभिर्व्वर्षैः परमपण्डितः सन् पुरन्दर इति उपाधिं लेभे । नीलाम्बरचक्रवर्त्तिनो गुणवतीं ज्येष्ठां कन्यां श्रीशचीमुपयेमे च । श्रीशच्यास्तस्या नवमगर्भे विश्वरूप इति जगन्नाथस्य प्रथमः पुत्रोऽजायत । अत. परं उपदशेषु वर्षेषु गतेषु सप्ताधिकचतुर्दशशततमे फाल्गुनपूर्णिमायाञ्चन्द्रग्रहणपुण्यायां सन्ध्यायां सिंहलग्ने सिंहराशौ तस्यां जगन्नाथपत्न्याः शचीदेव्या गर्भक्षीरोदसिन्धोर्नवपूर्णेन्दुः श्रीचैतन्यदेवो गगनेन्दुं मलिनीकृत्येव समजनि ।

प्रत्यहेषावलोकितस्य तस्य शिशोः पीयूषकोमलाङ्के एकदा

लावण्य-तरङ्गाः क्रीडन्ति, सुवर्णप्रभा मधुरं हसति, नेत्रानन्दि मधु च्छरति, आनन्दामृतं स्रवति च। यस्तं सकृत् पश्यति, स एव दर्शनमात्रं तस्योज्ज्वलकान्तिसुधया मुह्यति। निम्बवृक्षतले प्रसूत इति माता शिशोः "निमाइ" इति नाम कृतम्। अस्य वर्णस्य काञ्चनसदृशतया नागरिकाः सर्व्वे तं 'श्रीगौराङ्गा'भिधानमकुर्व्वन्।

तस्यालौकिकशिशोर्मधु-लसन्मूर्त्तिसन्दर्शनेन निजनेत्रयुगलं निवेदयितुकामः प्रतिवेशिनीगणः सततमागच्छंस्तं सवेष्टयति। स शशिसुषमः शिशुभङ्ग्या अजस्रं रोदिति। क्रन्दन्तं तं सान्त्वयितुं प्रतिवेशिन्यस्ता भृशं चेष्टन्ते। तथापि स शिशु रोदनान्न विरमति। अवशेषे ता रमण्यः हरेर्नाम कामं प्रकामञ्च, गायन्ति। तथाकृतं हरेरमृतमधुरं परं नाम श्रुत्वा शिशुर्गौरचन्द्रो हसन् शान्तः प्रफुल्लश्च भवतीति प्रायेण हि दृष्ट्वा—तस्य स्वरे मधुरता रोदने चापूर्व्वतामनुभूय—सर्व्वास्तास्तत्सम्वर्द्धनपराः गौरहरिरित्यभिधा सहर्षं ददति स्म।

नखचन्द्रशोभितस्य शिशोर्वदनं मधुरं हास्यं मधुरम् अस्फुटवचनं मधुरं, पल्लवयुक्तस्य करयुगलस्य सञ्चालनमप्यति प्रीतिप्रदम्।—

> मधुरं मधुरं वपुरस्य विभो-
> र्मधुरं मधुरं वदनं मधुरम्।
> मधुगन्धि मधुस्मितमेतदहो
> मधुरं मधुरं मधुरं मधुरम्॥ (कर्णामृते)

पित्रा श्रीजगन्नाथेन प्रदत्तं नाम "विश्वम्भरः" इति। विश्वम्भरस्य अङ्गप्रभया स्मितज्योत्स्नया च जगन्नाथगृहं सततमालोकितम्। एवं लसन्तम् उषसि वसन्तमिव तनयं क्रोड़े धृत्वा माता परमपुलकेन आप्लुता सततं परमां निर्वृतिमाप्नोति।

एकदा माता श्रीविश्वम्भरं तल्पे शाययित्वा गृहकर्म्मान्तरे व्यापृताभूत्। क्षणान्तरे सहसा पुत्रं विनिद्रम् एकेन सर्पेण सह क्रीड़न्त-

व्यापश्यत्। तद्दर्शनाद् भीता माता उच्चं शब्दं चकार। तं श्रुत्वा स सर्पो बालकस्य किञ्चिदपि अनिष्टमकृत्वा शचीगृहं त्यक्त्वा दूरमगमत्।

अलङ्कारैर्भूषितः श्रीविश्वम्भर इदानीं पङ्गाम् इतस्ततश्चलति। एकश्चोरस्तदवस्थं तं प्राप्य भूषणलोभात्त स्कन्धे कृत्वा प्रतस्थे। कयाचिन्मायया भ्रान्तः स तस्कर इतस्ततो भ्रमित्वा पुनर्जगन्नाथभवनस्य अन्तिके आगतः। बालकं विश्वम्भरं स्कन्धादवतार्य भूमौ निधाय भीतः स यथायथं पलायाञ्चक्रे। भूषणैस्तनयं हसन्तं दृष्ट्वा पितरौ पुनर्देहे प्राणान् प्रापतुः। मेघमाली नाम एष चौर उत्तरकाले श्रीगौरस्य परमस्पर्शफलस्वरूपं वैराग्यम् अवाप्य महासाधुर्बभूव। अवितथफलो हि तस्य स्पर्शः।

शचीजगन्नाथयोर्भाग्यं केनापि न वर्णयितुं शक्यम्। ब्रह्माण्डे आश्चर्य्याणि यानि यानि सन्ति तानि सर्व्वाणि शचीगृहे एकीभूतानि बभूवुः। विश्वम्भरस्य चन्द्रमुखोद्‌गीर्णात् "मा" इत्यक्षरात् स्वतः सुधा स्यन्दते। तच्छ्रवणात् मातुश्चित्तम् अमृतायते शीतलीभवति च। वयसा बालकः अतिचाञ्चल्यं लेभे। चाञ्चल्येन सदा प्रतिवेशिनां गृहेभ्यो दधि घृतमन्नञ्च चोरयित्वा सोऽश्नाति।

विश्वम्भरस्य पादयोर्नूपुरौ न स्तस्तथापि एकदा पितरौ "रुणुरुणु" श्रुतिमधुरं नूपुरशिञ्जितं गृहमध्ये श्रुत्वा विस्मितौ। एतद्विस्मयावहं न किम्? एष पुत्रः देव उत मानव इति तयोर्मनसि वितर्कोऽजायत। जगन्नाथो गृहदेवता जागरितेति विभाव्य पुलकाप्लुतो वैशिष्ट्येन शालग्राममपूजयत् हरिगुणांश्चाकीर्त्तयत्।

एवम् अतिक्रामति काले कदाचिदेकस्तैर्थिको ब्राह्मणः शचीगृहे आतिथ्यमगृह्णात्। मिश्रः सपत्नीकः पाद्येन अर्घ्येण च सम्पूज्य पाकस्य उपकरणादिकमानिनाय। स्वादु अन्नादिकं यत्नेन पक्त्वा स भक्तिमान् ब्राह्मणस्तत् सर्व्वं स्थाल्यां सज्जीकृत्य ध्यानमन्त्रेण भगवन्तमाहूय भोगं तस्मै न्यवेदयत्। तत्क्षणमेव धूलिधूसरिताङ्गो दिगम्बरो

विश्वम्भरः तत्र गत्वा सहास्यं निवेदितद्रव्यं प्रकाम भुङ्क्ते स्म। तन्निरीक्ष्य ब्राह्मण उत्कण्ठितोऽभूत्। पिता क्रुद्ध सहसा तं प्रहर्त्तु-मुद्यतः अतिथिना सनिर्ब्बन्धं निवर्त्तित। ब्राह्मणः सोऽनुरुद्धः पुनरन्नं पचति स्म अभीष्टदेवतायै निवेदितवांश्च। स च कुमारः सुगुप्त-मागत्य पुनस्तद्भक्षितवान्। रुष्टो जगन्नाथः पुत्रं निर्ज्जनगृहे बन्दी-कृत्यारक्षत्। धीरधीः स ब्राह्मणो विरक्तो भूत्वा पुनरपि अन्नव्यञ्जनादिकं पक्का भगवते न्यवेदयत्। सपदि बन्धनमुन्मोच्य विश्वम्भरः रक्षतः पितु-स्तृतीयवारं नैवेद्यं बुभुजे। पश्यतो ब्राह्मणस्य विस्मयं दूरीकुर्व्वता विश्वम्भरेण इत्थमभ्यधायि, भो ब्राह्मण,भवान् मन्त्रं जप्त्वा मामाह्वयती-त्यह भक्तप्रदत्तमन्नं गृह्णामि गिरामि च। एवमभिधाय विश्वम्भरो निजैश्वर्य्यं प्रकटयन् ब्राह्मणं कृतकृत्यमकरोत्। तदा ब्राह्मणस्याङ्गं सात्त्विकतरङ्गाप्लुतं चित्त परामृतपूर्णं नेत्रयुगलञ्च प्रेमाश्रुसिक्तं बभूवुः।

शुभवासरे प्रशस्तलग्ने विश्वम्भरस्य विद्यारम्भः कृत। त्रिभि-र्द्दिवसैः स अक्षराणि निर्म्मातुं वाक्यानि लिखितुं सलीलं पठितुञ्चा-शिक्षत। तस्य स्वभावचाञ्चल्यम् औद्धत्यञ्च वयसा वव्रुधे। सतीर्थैः गङ्गायां स्नातुं प्रत्यहं स गच्छति, वयस्यैर्जलकेलिं करोति च। तदा अवतरणिकाया स्नानार्थमाकण्ठमग्नं कमपि पदे धृत्वा गभीरसलिलं प्रसह्य नयति, कस्यापि नेत्रयोर्जलं निक्षिपति। कस्यापि सन्ध्यावन्दना-दिकञ्च तेन उल्लङ्घ्यते। अधिकन्तु स बहून् स्नातुकामान् पीडयति, कस्यापि ध्यानभङ्गं करोति, कस्यापि पुष्पाणि हरति, कस्यापि वसनं धृत्वा कर्षति।

नवमवर्षस्य माघे मासि शुभलग्ने विश्वम्भरो ब्रह्मचर्य्यमवलम्ब्य यथाशास्त्रं यज्ञसूत्रं दधार। जगन्नाथपुरन्दरः पश्चिमे वयसि ज्येष्ठ-तनयं विश्वरूपं बहुविद्यागुणवन्तं सुशीलञ्च पश्यन् सुखितस्तस्य परिणयं यदा प्रास्तौत्, तदा तज्ज्ञात्वा विश्वरूप कथमपि सुनिभृतं गृहान्निष्क्रम्य उदासीनो बभूव। विदूयमानः पिता जगन्नाथः शुचः

कारणं स्मारं स्मारमचिरेणैव विश्वम्भरस्य उपनयनं समाप्य उपरराम। पितरि लोकान्तरिते मात्रानुज्ञातो विश्वम्भरः विद्यापीठं गत्वा शास्त्राणि अध्येतुमारेभे। विश्वम्भरो गङ्गादाससमीपे साहित्यं व्याकरणञ्च, विष्णुमिश्रसमीपे स्मृतिं ज्योतिषञ्च, सुदर्शनपण्डितसमीपे दर्शनं, सार्व्वभौमभट्टाचार्य्यसमीपे न्यायमधीत्य परमपाण्डित्यं लेभे। अनन्तरं शान्तिपुरं गत्वा श्रीमदद्वैताचार्य्यात् वेदं भागवतञ्च सम्यगधिगम्य विद्यासागर इति उपाधिभूषणेन भूषितोऽभूत्। सप्तदशवर्षीयो बालको वङ्गदेशे ख्यातनामा प्रधानपण्डितो दिग्विजयिजयी बभूव।

एकदा केशवकाश्मीरी भारतवर्षस्य सर्व्वान् पण्डितान् विजित्य-यावत् नवद्वीपम् आगत' तावत् तत्रत्या अपरे पण्डिता भीताः पलायिताश्च। केवलं "निमाइ" पण्डितो निर्भीकस्तिष्ठति स्म। नानादिग्भ्य आगतैर्बहुभिश्छात्रैः परिवेष्टितो विश्वम्भर एकदा सायं चन्द्रालोकस्नाते सुरधुनीतीरे उपविश्य निजच्छात्रैः सानन्द शास्त्रालापं करोति स्म। तदा काश्मीरी तत्र समागतः।

केशवो विश्वम्भरस्यालोकसामान्येन रूपमाधुर्य्येण सविशेषं मुग्धोऽवोचत्—"त्वं "निमाइ—पण्डित" इत्यहं मन्ये। व्याकरणं बालशास्त्रतत्त्वम् अध्यापयसीति च सोपहासं स गिरमुदीरयति स्म। तदाकर्ण्य विश्वम्भरः स्वभावगाम्भीर्य्येण सुबहुविनयेन च पण्डितश्रेष्ठं तं तस्योत्साहभङ्गमकृत्वा सबहुमानं तस्य चरणौ प्रणम्य प्रतिवचनमेवं प्रतिपेदे, 'भो अहं बालकः शास्त्रसमुद्रस्य शीकरलवमात्रं मयाधिगतम्। भवतो मुखाद् गङ्गास्तोत्रं श्रोतुमिच्छामि। अपनयतु नः कुतूहल'मिति। पृष्ट एवं स दिग्विजयिपण्डित आनन्दोत्फुल्लः शतश्लोकीयं मनोज्ञं स्तोत्रं मनसा विरचय्य श्रावयामास। तस्य कण्ठात् नदीप्रवाहवत् कान्तपदाः श्लोका अनर्गलं निर्गच्छन्तीति दृष्ट्वा विश्वम्भरो विस्मयाविष्टः श्लोकानां दोषादिकं श्रोतुमैच्छत्। अतः परं दिग्विजयिनानुरुद्धो बालको विश्वम्भरोऽलङ्कारदोषान् बहूनदर्शयत्। बालकस्यास्य

अलङ्कारशास्त्रेऽपि अद्भुतपाण्डित्यं दृष्ट्वा तस्य देवभावञ्चानुभूय गुण-मुग्धो भक्त्या विश्वम्भरस्य पुरतः अवनतः प्रणतश्चाभवत् ।

( क्रमशः )

---

## भाषारत्नम्

[ निबन्धकः—श्री　　　　]

सन्ति किल लब्धप्रचाराणि भारते वर्षे दर्शनान्यसङ्ख्येयानि, तेष्वपि सुप्रसिद्धानि सङ्क्षेपतः षडेव आस्तिकदर्शनानि न्यायवैशेषिकसाङ्ख्यपातञ्जलमीमांसावेदान्तदर्शनाभिधानि । तेषामेकैकं दर्शनमुपादाय शिष्य-प्रतिपिपादयिषया वा स्वीय-दार्शनिकतत्त्वानुसन्धित्साकौतूहलनिवि-वर्त्तयिषया वा दार्शनिककीर्त्तिविततासया वा अन्यथा वा कति नाम ग्रन्थकृतो दर्शनसूत्रग्रन्थान् दर्शनप्रकरणग्रन्थान् मूलव्याख्यानानि च समपादयन्निति नैव संख्यानेन शक्यनिर्णयं भवति । तेषु य एव ग्रन्था प्राप्तप्रचाराः शिष्यादिपरम्परया, त एवालोच्यमाना सम्प्रति प्रति-पादयन्ति प्रतिपाद्येषु विषयेषु परां प्रतिष्ठाममीषाम् ।

तत्रैव किञ्चिदिदं वस्तु भाषारत्नं नाम श्रीकणादेन वैशेषिकव्याज-मनुरुन्धता नव्य-नैयायिकानां मतमभितः प्रचारयितुं प्रणीतमिति समुपलभ्यते । यद्धि संस्कृतसाहित्यपरिषदादेशेन यथामति समालोच्य मया साम्प्रतं सम्पाद्यमानमास्ते । अस्ति किल कणादो नाम मुनिः सूत्रकारो वैशेषिकदर्शनस्येति सुविदितमेव सुधियाम्, अयन्तु कणादः सञ्ज्ञामात्रेण कणादोऽपि तस्माद् भिन्नं अभिनवकणादसंज्ञया प्रख्यायते । दृश्यते बहुष्वेव हस्तलिखितभाषारत्नग्रन्थेषु तस्य ग्रन्थकृतोऽभिनव-

संस्कृतसाहित्यपरिषदो मासिकाधिवेशने वाचितम् ।

कणाद इति सञ्ज्ञासमुल्लेखः। अस्यैव प्रकरणस्य प्रतिज्ञाश्लोके श्रीकणादेनेत्यत्र श्रीशब्दप्रयोगोऽपि तदेवाकूतं सूचयतीव। नहि मुनीना कणादाना प्रणामाद्यवसरे प्रशस्तपादेनापि 'मुनिं कणादमन्वतः' इत्यादौ श्रीशब्दसमुल्लेखेन वैशेषिकसूत्रकारा विशेषिता, अत एव तत आत्मनो विशेषप्रतिपत्तये स्वनामनिर्द्देशप्रस्तावे श्रीशब्द समुल्लिखितो दृश्यते प्रकृतग्रन्थकर्त्ता। अपिच अस्ति किल भाषारत्ने दीधितिकृता नामत' समुल्लेखेन मतविचार प्रक्रान्त, यदुक्तं—'दीधितिकृन्मते तु परमात्मनो नव गुणा, तेन तस्य नित्यसुखस्वीकारात्' इति। अस्ति च 'विशिष्टाभावस्य अतिरिक्ततावादि-मणिकृन्मते तु तादृशविशिष्टाभावोऽञ्जनसंयोगसत्त्वे आलोकसंयोगस्य चासत्त्वे, आलोकसंयोगस्य सत्त्वे अञ्जनसयोगस्य चासत्त्वे तिष्ठति' इत्यनेन सन्दर्भेण तत्त्वचिन्तामणिकारगङ्गेशोपाध्यायपादानामपि नामत' समुल्लेख', तत् तत. सुतरामर्वाचीनतामेव भाषारत्ननिर्म्मातु कणादस्य वय प्रत्येतु' पारयाम.। 'प्रभाकरास्तु नातिरिक्ताभाव' स्वीकुर्व्वन्ति, वदन्ति च अधिकरणस्वरूप'मित्यनेन प्रभाकरसम्प्रदायप्रवृत्तेरपि सिद्धमर्व्वाक्तनत्वमस्य।

किञ्च भाषारत्नस्य मङ्गलाचरणश्लोके ग्रन्थकर्त्त्रा 'चूडामणिपदाम्भोज-भ्रमरीभूतमौलिना' इत्यनेन सन्दर्भेण चूडामणिर्नाम कश्चन नमस्कृतो दृश्यते, स चास्य गुरुर्व्वा पिता वा जनान्तर' वेति परतो विचारयिष्यते. परं कणादस्य महर्षे' प्रणत्या विषयीकर्त्तव्यस्तया कश्चन चूडामणिर्नाम देवादिरन्यत्र नोपलभ्यते, यन्नमस्कारेण आत्मग्रन्थस्य निर्विघ्नपरिसमाप्ति' कामयमानः खल्वेष तं नमस्कुर्य्यात्। अस्ति खलु सूत्रकाराणामेष नियमो यदेते प्रायेण अथ-शब्दादिभिरेव ग्रन्थारम्भमङ्गलमुपपादयन्तीति,—यथा नाम वैशेषिकसूत्रारम्भे 'अथातो धर्म्मं व्याख्यास्यामः' इति, मीमांसासूत्रारम्भे 'अथातो धर्म्मजिज्ञासे'ति, ब्रह्मसूत्रारम्भे च 'अथातो ब्रह्मजिज्ञासे'ति, न्यायसूत्रारम्भे अथशब्दाभावेऽपि 'प्रमाणं प्राणनिलय' इति प्रमाणेन प्रमाणशब्दस्य

ईश्वरप्रतिपादकस्य उपादानेन सिद्धं मङ्गलाचरणमिति दृष्टम्। अपरञ्च कणादेन महर्षिणा वैशेषिकसूत्रे पदार्थसमुद्देशप्रकरणे अभावज्ञानस्य भावज्ञानपरतन्त्रतया षडेव भावपदार्था द्रव्यगुणकर्म्म-सामान्यविशेषसमवायरूपाः 'धर्म्मविशेषप्रसूताद् द्रव्यगुणकर्म्मसामान्य-विशेषसमवायानां पदार्थानां साधर्म्म्यवैधर्म्म्याभ्यां तत्त्वज्ञानान्नि:-श्रेयसम्' इति सूत्रेण समुद्दिष्टा लक्ष्यन्ते, अत्र च प्रारम्भ एव ग्रन्थ-कारेण 'पदार्थो द्विविधः भावोऽभावश्च' इत्यादिना पदार्थसप्तकस्यैव समुद्देशः कृत, नहि युज्यते एकमेव मतवाद प्रचारयतो भिन्नस्थले भिन्नरूप-पदार्थसमुद्देश इति जानीमः। लेखशैली चास्य सुतरामाधु-निकीव प्रतीयमाना विलक्षणलेखशैलीमनुरुद्धत सूत्रकृतः कणादमहर्षेरस्य भाषारत्ननिर्म्मातुर्विशेषं गमयति। तदयमभि-नवकणाद. सुतरां महर्षेः कणादाद् भिन्न एवेति वस्तुस्थितिः।

अथ कोऽयं चूडामणिर्नाम यस्य पदाम्भोजे भ्रमरीकृत्य मौलीमेष ग्रन्थारम्भे प्रणतिमुदपादयद् इति किञ्चिदिव विचार्य्यते।—

केचिद् वदन्ति चूडामणिरिति ग्रन्थकृतः पितुर्गुरोर्वा नाम, आदौ गद्यभागेन सर्व्वाभ्यर्हितस्य भगवत. प्रणामं विधाय गुरोः पितुर्व्वा प्रणामस्यैव परिप्राप्तत्वात्।

अन्ये तु चूडामणिरिति न गुरोः पितुर्व्वा मुख्यं नाम, परं विद्यादिकृतमुपनामैव। उपनाम्ना तन्निर्द्देशश्च नमस्कार्य्यस्य तस्य गौरवातिशयमेव द्योतयति, न च उपनाम्ना जननिर्द्देशो नान्यत्र दृष्टचर इति वाच्यम् साम्प्रतिकेष्वपि तर्करत्न-तर्कवागीश-न्यायाचार्य्य-सार्व्वभौमादौ तथा निर्द्देशस्य दृश्यमानत्वात्।

अपरे पुनरेव वदन्ति यथा—चूडामणिरिति कोटालिपाडापत्तनीय काश्यप पौरन्दरिः श्रीनाथचूडामणिरेव, यस्य किल पण्डितधुरीणस्य सरस्वत्युपनामा गीतारहस्याद्वैतसिद्धि-प्रस्थानभेदादिप्रचुरदार्शनिक-ग्रन्थनिर्म्माता मधुसूदनः भ्राता पितृव्यो वा, तदीय एवायं शिष्य इति।

अद्यापि शशीनाथचूडामणिवंशीयाना 'चूडामणिसन्तति'रिति प्रसिद्धे-रुपलभ्यमानत्वात्। तदिद मत कथञ्चिदुपपादयितु शक्यमिव प्रतिभाति।

अथेद भाषारत्न' न्यायदर्शनप्रकरण वैशेषिकदर्शनप्रकरणं वेति विचार्य्यते।—

आदौ तावत् कणादेति ग्रन्थकर्त्तुः स्वनाम्नः समुपलम्भादेव वैशेषिकदर्शनप्रकरणमिदमिति बुद्धिमारोहति। ये यत्सम्प्रदायमनु-वर्त्तन्ते तेषा तत्सम्प्रदायसिद्धनाम्नो बहुत्रैव सन्दर्शनात्। अत एव बृहदा-रण्यकश्रुतौ 'गौपवनात् गौपवनः पौतिमाष्यात् पौतिमाष्य' इत्येवं गुरुनाम्ना शिष्यनामनिर्द्देशः समुपलभ्यते। तद्वदस्यापि कणादमहर्षि-नामग्रहणात् कणादमतानुवर्त्तनस्य सिद्धतया इद प्रकरण कणाद-प्रणीतवैषिकदर्शनमनुवर्त्तत इति स्थितम्। यच्च ग्रन्थारम्भे पदार्थसमुद्देशप्रकरणे 'पदार्थौ द्विविधः भावोऽभावश्चे'ति वैशेषिक-मताद् वहिरभावपदार्थसमुद्देशन तदपि वैशेषिकसूत्रभाष्य-वृत्तिटीकादिसमालोचनेन न वैशेषिकमताद् विशेषं प्रतिपादयति। तत्र तत्र केवलमभावस्य भावज्ञानपरतन्त्रज्ञानकतया एव नाभावसमुल्लेखः न तु तुच्छतया इत्यादि-भावप्रकटनेन अभावस्यापि तन्मते सुतराभभ्युपगमस्य प्रतिपादितत्वात्। अपिच ग्रन्थारम्भे तत्रैव पदार्थसमुद्देशप्रकरणे 'तत्र भावपदार्थौ वैशेषिकमते षड्विध द्रव्य-गुण-कर्म्म-सामान्य-विशेष-समवायभेदात्' इति वैशेषिकमतसिद्ध-पदार्थस्य समुद्देशोऽपि प्रकृतग्रन्थस्य वैशेषिकप्रकरणत्व-मभिव्यनक्ति। नहि न्यायप्रकरणग्रन्थ' प्रक्रम्य वैशेषिक-पदार्थसमुद्देश. कथमपि सामञ्जस्य' लभते। न च मतान्तरप्रदर्शन-मात्राभिप्रायेण तदिति शक्यं वक्तु, तथा सति तस्य निरासेन स्वमतसिद्ध-पदार्थसमुद्देशस्यापि परतः कर्त्तव्यत्वात् तस्य तस्य च प्रकृते अनुपलम्भात्।

किञ्च अर्थाभिधेयत्वं द्रव्यादीनां त्रयाणां साधर्म्यं वदताऽनेनापि ग्रन्थकारेण 'अर्थाभिधेयत्वम् अर्थपदबोध्यत्वेन वैशेषिकपरिभाषाविषयत्वं तदर्थ' इति प्रतिपादनादपि प्रकृतग्रन्थस्य वैशेषिकप्रकरणत्वमधिगन्तुं शक्यते। नहि सम्भवति न्यायप्रकरणे साधर्म्यव्याख्यानप्रसङ्गे वैशेषिकपरिभाषामुपादाय साधर्म्यनिरुक्तिः। दर्शनान्तरपरिभाषाविषयत्वमादाय साधर्म्यान्तरसहस्राणामपरेषामपि तथैव वक्तव्यतापातात्। तदिदं वैशेषिकदर्शनप्रकरणमित्येव सिद्धम् भवति। नन्वेवं "तच्च प्रमाणं चतुर्विध, प्रत्यक्षानुमानोपमानशब्दभेदात्, तथाच न्यायसूत्रं 'प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि' इति" ग्रन्थोऽयं कथं सङ्गच्छताम्। वैशेषिकमते हि प्रत्यक्षम् अनुमानञ्चेति प्रमाणद्वयमेवाङ्गीक्रियते,—तदुक्तं वरदराजेन तार्किकरक्षाया,—'प्रत्यक्षमेकं चार्वाकाः कणादसुगतौ पुन। अनुमानञ्च तच्चाथ सांख्याः शब्दञ्च ते अपि॥ न्यायैकदेशिनोऽप्येवमुपमानञ्च केचन। अर्थापत्त्या सहैतानि चत्वार्याहुः प्रभाकराः॥ अभावषष्ठान्येतानि भाट्टा वेदान्तिनस्तथा। सम्भवैतिह्ययुक्तानि तानि पौराणिका जगुः॥" इति। समवायोऽपि वैशेषिकमते न प्रत्यक्षः तस्य च प्रकृते ग्रन्थे 'विशेषणतासन्निकर्षेण अभावसमवाययोः प्रत्यक्षं जन्यते' इति सन्दर्भेण प्रत्यक्षत्वं वदता स्वयमेव स्वप्रकरणस्य निरस्तं वैशेषिकप्रकरणत्वमिति प्रतिपद्यते, तदत्र कः समाधिरिति चेत्, सत्यं न्यायमतमभ्युपगम्यैव तत्र तत्र तन्मतस्य परिग्रहणात्। नह्यभ्युपगमवादः शास्त्रकृतामलीक इति मतान्तरमभ्युपगत्य तथानिरुक्तावपि न स्वग्रन्थस्य स्वरूपहानिरिति वदामः।

वस्तुतस्तु नेदं वैशेषिकदर्शनप्रकरणं नापि प्राचीनन्यायदर्शनप्रकरणं परं तृतीयप्रकारं नव्यन्यायदर्शनप्रकरणमेव, येन वैशेषिकमतसिद्धपदार्थानां बाहुल्येन उपग्रहेऽपि तदनङ्गीकृतप्रमाणचातुर्विध्य-समवायप्रत्यक्षत्वादयो निरुक्ताः पदार्था नैव विरुध्येरन्। प्रमाणचातुर्विध्यादौ न्याय-

सूत्रसमुल्लेखादिकमपि तन्मतप्रमाणस्य प्रदर्शनीयत्वेन न समञ्जसं भवति ।

अत एव हि 'वैशेषिकस्तु शब्दो न प्रमाणान्तरम्' इत्यारभ्य 'उक्त-प्रतिबध्यप्रतिबन्धकभावलक्षणस्यैव बाधकत्वात्' इत्यन्तग्रन्थेन शब्दस्य प्रमाणान्तरत्वकल्पे दोषं पूर्व्वपक्षीकृत्य 'अत्र नव्यनैयायिकाः,—वैशेषिकमते बहुशो गौरव'मित्यादि ग्रन्थेन नव्यनैयायिकमतसिद्धं सिद्धान्तमुपकल्प्य प्रकृतप्रकरणस्य नव्यनैयायिकप्रकरत्वमेव ग्रन्थकृता सुसम्पादितमुपलभ्यते । तदिदं नव्यनैयायिकमतप्रदर्शकप्रकरणमित्येव निरपवादं वचनमाभाति ।

अस्य ग्रन्थकृतः 'तर्कवादार्थमञ्जरी"-नाम ग्रन्थान्तरमस्त्येव लेखा-दुपलभ्यते । तदुक्तं स्वयमत्रैव भाषारत्ने,—'अतिविस्तरस्तु अस्माकं तर्कवादार्थमञ्जर्यामनुसन्धेय' इति । एतत्सम्बन्धी विशेषस्तु समये-ऽस्माभिः प्रतिपादयिष्यते ।

---

## लङ्काद्वीपे संस्कृतभाषासाहित्यम्

[ निबन्धकः —भिक्षु इन्द्रसरः ]

अतिपुरातनकालतः प्रभृति सिंहलद्वीपे संस्कृतभाषा प्रचलिता बभूव । न जानीमो वयं तत्कालप्रमाणं प्रवक्तुम् । तथापि पालि-भाषाख्यतया शुद्धमागधभाषया लिखितस्य महावंशाख्यग्रन्थस्येति-हासानुसारेण सिंहलीयानां प्रारम्भोऽतः चतुःशताधिकानां द्विसहस्र-वर्षाणां पूर्व्वं इत्यस्माकं स्वीकृतिः ।

सिंहलद्वीपे पांडुवासुदेवनाम्नि द्वितीये राज्ञि राज्यमनुशासति वेदवेदान्तपारंगता नानाशास्त्रान्तरप्रवीणमनीषिणो ब्राह्मणा आसन् ।

तेनोक्तं महावंशे ,"पस्सित्वा तं वियाकंसु ब्राह्मणा मन्तपारगा"इति तदा सर्वे सिंहलीयाः सब्रह्मभक्तिका आसन् । तस्मात् तस्मिन् काले सिंहल-

द्वीपे संस्कृतभाषा-साहित्यमतिशयेनैव प्रचलितमिति नात्र कोऽपि संशयः। अपि तु त्रिवेद संस्कृतभाषयैवाश्रित नान्यभाषयेत्यस्माकं मतिः। कस्मात्? तस्मिन् काले त्रिवेदसग्रान्थया भाषयानुक्तत्वात्। ज्योतिःशास्त्र-प्रभृतीनि संस्कृतभाषया रचितान्यनेकशतानि विद्यन्ते, तानि सर्वाणि लङ्काद्वीपगैः संस्कृतभाषयैवाधिजगिरे किलेत्यस्मदीयानुमितिः।

अतः प्रभृति मया सिंहलेषु संस्कृतसाहित्यस्य प्रारम्भश्च वृद्धिश्च हानिश्च वृद्धिकाले विरचितकतिपयग्रन्थाश्च प्रदर्श्यन्ते, तच्छ्रोतॄणां भारतीयानां मनस्यमन्दानन्दो जायेत इति मन्येऽहम्।

प्रारम्भः—प्रागुक्तकाल एव। तस्मिन् काले विद्वद्भिर्ब्राह्मणैर्ये ग्रन्था रचितास्ते नष्टप्राया नाधुनास्माकं चक्षुर्विषये वर्तन्ते। ततः कतिपयानां वर्षाणामतिक्रमे चन्द्रगोमी नाम महाविद्वानासीत् किल। तेन चान्द्रव्याकरणाख्यं विशिष्टशब्दशास्त्रं रचितम्। यदुक्तम्,—

इन्द्रश्चन्द्रः काशकृत्स्नापिशली शाकटायनः।
पाणिन्यमरजैनेन्द्रा जयन्त्यष्ट हि शाब्दिकाः॥

इत्यस्मिन् श्लोके "चन्द्र" इति प्रागुक्तो चन्द्रगोमी न वा इत्यस्य निर्णये इतिहासज्ञा एव प्रमाणम्। अहमेतत् सिंहलभाषया लिखितेतिहासानुसारेण कथयामि, न तु मम मतिमात्रेण। चान्द्रव्याकरणमिदानीं भारतवर्षेऽपि विद्यत इति न मया श्रुतपूर्व्वम्। तिष्ठतु तावत् चान्द्र-व्याकरणम्, अन्यानि सप्त व्याकरणान्यपि सर्व्वाणि भारतवर्षेऽधुना न दृश्यन्ते। अपि तु "कथासरित्सागरे" एतदुक्तम्। प्रादुर्भूते पाणिनीय-व्याकरणे चान्द्रादीन्यन्यव्याकरणान्यनभ्रास्थल गतानि। आचार्य्यैः केवलं पाणिनीयमेव पठितं च पाठितं चासीदिति।

पुनरपि, अतोऽष्टशतवर्षेभ्यः पूर्वं सिंहलेषु महास्वामिपदं प्राप्तेन पारोपुग-नाम्ना महापरोहितेन स्थविरभिक्षुणा चान्द्रव्याकरणस्य पञ्जिकायाष्टीका कृतेति "दाठावंसाख्ये" पालिग्रन्थे दृश्यते,—तद्यथा

"यो चन्द्रगोमिरचिते वरसद्दसत्थे।
टीकं पसत्थमकरी वरपञ्जिकाय"—इति

यथा पाणिनीयप्रवेशाय लघुकौमुदी कृता, तथैव चान्द्रप्रवेशाय तत्समकालीनेन वा काश्यपनाम्ना स्थविरभिक्षुणा "बालावबोधन" नाम कृतम्। तद्यावदद्यापि सिंहलेषु वर्त्तते। तस्य प्रारम्भश्लोके तृतीय-चतुर्थपादौ कथ्येते मया।

बालावबोधन विन्दु चान्द्रसिन्धौ करोम्यहम्" अलमतिपल्लवितेन। तस्मात् प्रारम्भ एतत् चरितमिति मम मति.।

वृद्धि—यदा चान्द्रव्याकरणं रचितं तत. प्रभृत्येव यावत् विक्रमादित्यशकनृपाब्दाश्चतुर्दशशताब्दाः एतदन्तरे सिंहलेषु संस्कृत-साहित्यमतिप्रचलितम्। विविधैराचार्य्यैर्विविधा ग्रन्था रचिताः। तद्यथा, काव्यग्रन्थाः, व्याकरणग्रन्थाः, नीतिग्रन्थाः, सङ्गीतग्रन्थाः, ज्योतिर्ग्रन्था इत्यादय। तेषु केचित् संस्कृतभाषया रचिता केचित् सिंहलभाषया। तेष्वपि केषाञ्चित् ग्रन्थाना नाममात्रमेवास्माक मनः प्रीणयति, न तु ग्रन्था।

तस्मात् तेषु ये ग्रन्था अवशिष्टास्तेषा कतिपयानां नामानि मयात्र निरूप्यन्ते। संस्कृतकाव्यग्रन्थाः—लङ्काद्वीपमनुशिष्टवता कुमारदास-नाम्ना राज्ञा अतः सहस्रवर्षेभ्यः पूर्वं रामरावणयो. संग्रामवर्णनात्मकं त्रिंशत्सर्गात्मकं जानकीहरण नाम महाकाव्यं रचितम्।

स खलु राजा शैशवे जम्बूद्वीपमागत्य वेदवेदान्तादीनि विविध-शास्त्राण्यधीत्य पश्चात् सिंहलान् गत्वा राजा बभूव, स सौगत एव। तथापि स्वभाव एष सिंहलीयानां सौगताना काव्यरचनायां भारतीय-काव्यरचनावलम्बित्व तदीयोपमाग्राहित्वञ्च।

तत् काव्यमपि नष्टप्रायमासीत्। तथापि सिंहलभाषया लिखितं पञ्चदशसर्गात्मक व्याख्यानमवशिष्टम् तस्मिन् श्लोका. नासन्, केवलं व्याख्यानमेवावशिष्टम् लिपिभ्रमादिदोषदुष्टञ्च। तदप्यतस्त्रिंशद्-वर्षेभ्यः पूर्वं सिंहलीयेन महाविदुषा श्रीधर्मारभारख्येन स्थविरभिक्षुणा व्याख्यानुसारेण पद्यत्वमुपनीतम्। तदपि भारतीयानाममन्दानन्दाय

वर्त्तत इति मन्येऽहम्। अनुरुद्धशतकादीनि बुद्धगुणवर्णनात्मकान्यन्यानि कतिपयकाव्यानि सन्ति, तान्यपि शुद्धसंस्कृतभाषयैव रचितानि। यच्च बौद्धशतकं नाम सिंहलेषु रचितमस्य कर्त्ता गौडदेशीयो ब्राह्मणः।

सिंहलभाषया सर्वं काव्यादर्शं पद्यत्वमुपनीतः। स "सियबसल्कर" (स्वभाषालङ्कार) इति नाम्ना प्रसिद्धं। तस्य कर्त्ता "शिलमेघवर्ण" नामा सिंहलराजः। संस्कृतकाव्यरीत्या रचितानि बहूनि सिंहलकाव्यानि, किं तेषां नामप्रदर्शनेन।

व्याकरणग्रन्थाः—प्रागुक्तचान्द्रव्याकरणम्, शरीपुत्रस्थविरेण कृता पञ्जिकालङ्कारटीका, काश्यपनाम्ना स्थविरेण कृत चान्द्रव्याकरणस्य प्रवेशोपायो "बालावबोधनम्" श्रीराहुलस्थविरेण कृता तस्य टीका इत्यादयः। सर्व्वं सिंहलव्याकरणं संस्कृतव्याकरणानुयायि भवति। तस्मादेव सिंहलभाषायाः "सिद्धान्तसंग्रहो" नाम व्याकरणमतिसंक्षिप्तम्।

संस्कृतनीतिग्रन्थाः—संस्कृतभाषया रचिता नीतिग्रन्था नष्टप्राया इति चिन्तयाम.। प्रत्ययशतक नामैक एव ग्रन्थो वर्त्तते, तथापि सिंहलभाषया रचिता भारतीयरीत्यनुयायिनो नीतिग्रन्था बहवो वर्त्तन्ते।

सङ्गीतग्रन्थाः—पुरातनग्रन्था नष्टप्रायाः।

ज्योतिर्ग्रन्थाः—दैवज्ञकामधेनुनामा ग्रन्थो विद्यते, सः अनवमदर्शि-नाम्ना महास्वामिपदप्राप्तेन स्थविरेण सर्वं ज्योतिःशास्त्रसागरमालोच्य संस्कृतभाषया रचितं। तस्मिन् ज्योतिःशास्त्रं नातिविस्तृतं नातिसंक्षिप्तञ्चास्ति। यथा वराहमिहिरे अथवा वृहज्जातके राहुकेतू न स्तः न तथा एतस्मिन् ग्रन्थे। एतस्मिन् सर्वे नव ग्रहा निर्दिष्टाः, एतदेव ज्योतिःशास्त्रं ज्ञातुमिच्छूनां सिंहलीयाना प्रमाणमिति केचिद् वदन्ति। तथापि सिंहलभाषाया बहवो ज्योतिःशास्त्रप्रकाशकग्रन्था आसन्। तेषु केचिच्छिष्टाः केचिन्नष्टाः अन्येऽपि अमरकोषादि-

कोषग्रन्थाश्च सिंहलभाषया लिखिता व्याकरणोपयुक्ता वर्त्तन्ते, तथैव वैद्यककोषग्रन्था वैद्यशास्त्रोपयोगि-ग्रन्थाश्च ।

पालिभाषया लिखित. "भेसज्ज-मञ्जूसा" नाम ग्रन्थो वर्त्तते । तस्य कर्त्ता बालबोधनकारकस्य समकालीन एव महास्थविरः । तस्मिन्नपि सर्वं वैद्यशास्त्रं नातिसङ्क्षिप्तं नातिविस्तृतञ्चास्ति । अपि च पालि-भाषाया व्याकरणानि सर्वाणि संस्कृतानुयायीनि । "कच्चायन" (कात्यायन) नाम पालिभाषाया प्रधानव्याकरण कातन्त्रम्, अथवा कलापव्याकरणमनुयाति । मोग्गल्लाअण (मौद्गल्यायनम्) नाम व्याकरणं पाणिनीयानुयायि भवति, तस्य कर्त्ता मोग्गल्यायननामा महास्थविरः, तथापि तस्य कर्त्तृवर्णनाश्लोकं दर्शयितुमिच्छामि ।

या शक्तिः पाणिनी या च चन्द्रकात्यायनादिषु
सेयं मूर्त्तिमती मन्ये मोद्गल्यायनसर्पिणी ॥

पालिभाषाया "सुबोधालङ्कार" नाम्ना प्रसिद्धोऽलङ्कारग्रन्थो विद्यते संघरक्षितनाम्ना महास्वामिपदप्राप्तेन स्थविरभिक्षुणा रामशर्मादिभि-राचार्य्यैः प्रणीतानलंकारग्रन्थाननुगम्य रचित । तेषा ग्रन्थाना नामान्यपि इदानीं भारते न श्रूयन्ते, ते काव्यादर्शतोऽपि प्राचीनतमा इत्यस्माकमनुमितिः । उक्तञ्च तत्र ,—

रामसम्माद्यलङ्कारा सन्ति सन्तो पुरातना: ।
तथापि तु बालजेन्ति सुद्धभागधिका न ते ॥

छन्दःशास्त्रं—वुत्तोदयनाम्ना प्रसिद्धम्, तत् तेनैव महास्वामिना वृत्तरत्नाकरमनुगम्य प्रणीतम् । एतयोर्द्वयोर्ग्रन्थयोः कश्चिदपि विशेषो नास्ति, विशेषस्तु भाषाविशेष एव ।

तथापि ननु सिंहलच्छन्दःशास्त्रं सर्वं संस्कृतानुयायि, केचित् क्वचिद् विशेषाः सन्ति । तत् "एलुसँदे स‌लकुण" (सिंहलच्छन्दो लक्षणं) इति नाम्ना प्रसिद्धं भद्रनाम्ना स्थविरभिक्षुणा प्रणीतञ्च ।

महावंशः खलु पालिभाषायाः प्रधानं महाकाव्यम् । तत् शत-

सर्गात्मकं भवति, काव्यरसाभिलाषिणां चित्ताह्लादं जनयति च। अपराणि च "समन्तकूटवर्णना" "दष्ठा-वंशा"दीनि महाकाव्यानि सन्ति।

अधुना यानि सिंहलभाषया रचितानि पुरातनकाव्यानि विद्यन्ते, तेषु "कव् सिलुमिण" ( काव्य-चूडामणि ) इति नाम्ना प्रसिद्ध काव्य प्रधानमेव। ततः सुन्दरतमं गम्भीरतम वा काव्यं सिंहलभाषाया न दृश्यते, तस्य कथाशरीर बौद्धजातकग्रन्थे स्वागतं कुसजातकम्। तस्य कर्त्ता अतः सप्तशतवर्षेभ्यः पूर्वं लङ्काद्वीपमनुशिष्टः "कलिकाल-साहित्यसर्व्वज्ञ-पण्डित-पराक्रम-बाहु" नामा राजा बभूव। सति-वेज-पारंगतस्त्रिपिटकधारी च। स एव लङ्काद्वीपे राजमाला काव्य कुसुमैरलचकार। तस्मिन् समय एव लङ्काद्वीपे काव्यलता पुष्पिता, विविधाः कवयश्चासन्। एवं यावत् श्रीराहुलस्थविरस्य समयः, तावत् संस्कृतसाहित्यस्य वृद्धिर्बभूव। एतदन्तरे बहुभिः सिंहलीय-कविभिः स्वभाषया नानाग्रन्था रचिताः। तद्यथा, मयूरसन्देशः, हंससन्देशः, कीरसन्देशः, गुत्तिलकाव्यम् इत्यादयः।

श्रीराहुलस्वामिना काव्यशेखरमहाकाव्य पारावतसन्देशश्च रचिते। तेनैवान्येऽपि बहवो ग्रन्था रचिता विस्तारभिया तान् विस्तारयितुं नाहमिच्छामि।

परिहानिः—अतः प्रभृति लङ्काद्वीपे संस्कृतभाषासाहित्य परि-क्षीणत्वं गतम्। पुनरपि पञ्चशत-वर्षाण्यतिक्रम्य इदानीं काचिदुन्नति-र्दृश्यते। अलमतिपल्लवितेन।

एवं सिंहलेषु साहित्यवृद्धिर्भारतवर्षादेवाभवत् नान्यस्मात्। तस्मात् सर्वैरेव सिंहलीयैर्भारतवर्षं पूज्यम्। भारतीयैरपि सिंहलीयेभ्यः पुनरपि साहित्यं दातव्यम्। भारतवर्षं विना लङ्काद्वीपसदृशः संस्कृतसाहित्येन भ्राजितो देशो नास्तीति—शम्॥

---

## वकदूतम्

( पूर्व्वतोऽनुवृत्तम् )

[ निबन्धक —महामहोपाध्याय' अजितनाथन्यायरत्नः ]

कच्चित् क्षेम तव खगपते ! शावका' किं नु सुस्था'
जानीमस्त्वा निखिलपतता माननीय शरण्यम् ।
तस्मादेक किमपि खगराट् ! प्रार्थयेऽहं भवन्त
लोकस्थित्यै किल गुणवता श्रीमतामेव जन्म ।

तस्माद्दौत्यं कुरु मम सखे ! प्रार्थये साञ्जलि त्वा-
मद्यैवाशु व्रज तु नगरीं कृष्णपूर्व्वामपूर्व्वां ।
रम्या वापी विततपरिखा वेष्टिता सौधराजी
वक्ती कीर्त्तिं नृपकुलमणे' कृष्णचन्द्रस्य यत्र ॥
आकाशस्थः प्रथमत इतो दक्षिणस्यां दिशाया
भद्रावासां विपुलनगरीं धर्म्मदां द्रक्ष्यसि त्वम् ।
मध्ये यस्या निखिलवणिजा पण्यशाला विशाला
ग्रामोपान्ते मधुरतटिनी गुड्गुडेति प्रसिद्धा ॥
यस्यास्तीरं द्विज ! निजगणैस्त्वत्समानाः समानाः
संसेवन्ते कतिचन वकाः सुद्विजा' स्थाणुभाजः ।
यस्यास्तोयं मधुरमधुर शैत्य-सौगन्ध्यपूर्णं
स्वादं स्वाद नृपतिगुरवो नाद्रियन्ते सुधाञ्च ॥

( क्रमशः )

## पादुकातत्त्वम्

[ निबन्धक :—कविराज-श्रीवसन्तकुमारराय-विद्यारत्नः ]

मणिरत्नमयी कार्य्या हेमरूप्यमयीपि वा ।
चन्दनेनापि कर्त्तव्या पादुका-प्रतिमापि वा ।

श्रीपर्णा श्रीद्रुमा वापि देवदारुमयीपि वा ।
षडङ्गुला च सा कार्य्या पादुके पूजयेत् सदा ॥"

( देवीपुराणम् )

अधुना तु कलौ काले पादुका किल अधिकुरुते मानवसभ्यतायाः सर्वोच्च स्थानम् । को नाम देश कस्माच्च कालात् पादुकाव्यवहार कुर्व्वन्नास्ते इति सभ्यतायाः विशिष्टतम परिचयः एवमुल्लिखितं सन् अस्ति । अतश्चेद्भारतीयप्राचीनशिल्पपरिचयं प्रदीयते तदा पादुका-तत्त्वं नोपेक्षणीयम् । भारतवर्षे कदा पादुकाव्यवहारः प्रचलितोऽभूत् तस्यानुसन्धानोपायो नास्ति । परन्तु तैत्तिरीयसंहितायां "कार्ष्णी उपानहौ उपमुञ्चति" एवमुल्लेखो दृश्यते । इदं हि प्रमाणं प्रकटयति पादुकाव्यवहारे कीदृशी पुरातनप्रथेति ।

भारतवर्षं ग्रीष्मप्रधानो देश । अत्र सभ्यताविकाशस्य प्रथमोप-क्रमात् पादुकाव्यवहाररीतिः सम्भाव्यत इति मन्यामहे वयम् । स्वयं युधिष्ठिरो भीष्मदेवं पप्रच्छ—

"यदिदं श्राद्धकृत्येषु दीयते भरतर्षभ ।
छत्रं चोपानहौ चैव केनैतत् सम्प्रवर्त्तितम् ॥

( अनुशासनपर्व्व )

प्रतिवचनप्रसङ्गतो भीष्मदेवेन जमदग्निसम्बन्धिनी काचिदाख्यायिका समवतारिता । सा चेत्थम्

एकदा मध्याह्ने जमदग्निः ऊर्द्ध्वं वाणं निक्षिपन्नासीत्, तदा तु तस्य भार्य्या रेणुकादेवी वाणाहरणे व्यवस्थापिता । सूर्य्यतापतप्ता रेणुकादेवी वाणाहरणे असमर्था अभवत् । अतो जमदग्निर्मार्त्तण्ड-देवं प्रति समुचितशास्तिविधानार्थं धनुषि वाणमारोपितवान् । तदा जमदग्नेः शरणागतः सन् सविता तापनिवारकेण छत्रेण चर्म्म-पादुकाभ्याञ्चोपानयनैरनुकूलयति स्म । दानकाले सूर्य्यदेवेनोक्तमिदं—

"महर्षे शिरसस्त्राणं छत्रं मद्रश्मिवारणम् ।
प्रतिगृह्णस्व पद्भ्याञ्च त्राणार्थं चर्म्मपादुके ॥"

पौराणिकी आख्यायिकेयं कति कालात् भारतवर्षे—प्रतिष्ठामलभत, कियन्ति च वर्षाणि अतीतानि इति न ज्ञायते । अनुसन्धानोपायश्च नास्ति । पादुकाव्यवहारप्रवर्त्तनात् परं भारतवर्षे तु इयं यथायोग्यं मर्य्यादामलभत । नग्नपदेन विचरणं न सुकरमिति समीक्ष्य शास्त्रकाराः पादुकापरिधानं व्यवस्थापयामासुः । विष्णुपुराणे (२ अं २१ अः) एवं पठ्यते—

"वर्षातापादिके छत्री दण्डी रात्र्यटवीषु च ।
शरीरत्राणकामो वै सोपानत्कः सदा व्रजेत् ॥"

कालक्रमेण पादुकाव्यवहार एतादृशः प्रबलोऽभवत् यत् उपनयनस्यान्ते समावर्त्तनात् च प्राक् पादुकाव्यवहारो भवितुमर्हति नवेति तद्विषये शास्त्रशासनेन प्रयोजनमपेक्ष्यत । गोभिलगृह्यसूत्रे ( ३ प्रपाः १ म खः २६ सूः ) एवं दृश्यते,—"अन्तग्राम उपानद्धारणम्" । अर्थात् ब्रह्मचर्य्यावस्थायां ब्रह्मचारी यस्मिन् ग्रामे वसन्नास्ते, केवलं तस्मिन्नेव ग्रामे विचरणसमये पादुकाव्यवहारं न कुर्य्यात् । एतेन मन्यते यत् ब्रह्मचर्य्यावस्थायामपि स्वग्रामादृते अन्यत्र विचरणसमये पादुकाव्यवहारो न निषिद्ध आसीत् ।

अस्पृश्यतया एवरीतिरासीत् यत् पद्भ्यामृते पादुका न वोढ़व्या । गोभिलगृह्यसूत्रे (३प्रपाः ५खः २२सू.) एवमुल्लेखो वर्त्तते—"नोपानहौ स्वयं हरेत्" । ब्रह्मचर्य्यान्ते समावर्त्तनकाले च उपानहो धारणमन्त्रः अद्यापि सुपरिचितः सन् अस्ति । पारस्करगृह्यसूत्रे विद्यते मन्त्रोऽयं—

"प्रतिष्ठे स्थो विश्वतो मा पातम् ॥"

हलायुधश्चास्य व्याख्याकाले पादुकामाहात्म्यं ब्राह्मणसर्व्वस्वे उद्घाटितवान् । तस्य टीकायां तदीयपाण्डित्यमभ्रान्तं परिस्फुरति । यथा "हे उपानहौ युवां प्रतिष्ठे स्थः ।'

उपक्रान्तगतिक्रियाया अत्याग' प्रतिष्ठा, तन्निमित्तत्वात् युवा प्रतिष्ठे स्थो भवतः। ततो मा मा पात रक्षतम्। कुत' ? विघ्नत सर्व्वस्मात् गतिविरोधिन. कण्टकादे' ।" एवम्प्रकारेण पादुका मन्त्र-मध्ये स्थान लब्ध्वापि सर्व्वत्राव्याहतगति नैव जाता। सर्व्वदा पादुका-परिधानेन विचरणव्यवस्थाया विद्यमानाया सत्यामपि सर्वेषा समीपे सोपानत्कस्य उपस्थितिर्न विधिसम्मता आसीत्। तस्य तु सदाचार-विरोधित्वात् तत्सम्बन्धिशास्त्रशासन प्रादुरासीत्। अधुनापि पादुकां त्यक्त्वा गुरुभ्यो देवेभ्यश्च प्रणामरीतिर्दृश्यते। वराहपुराणात् ज्ञायते यत् यस्तु सोपानत्को भगवत्समीपे गच्छति स चर्म्मकारस्य गृहे जायते।

"वहन्नुपानहौ पद्भ्या यस्तु मामुपचक्रमेत्।
चर्म्मकारस्तु जायेत वर्षाणान्तु त्रयोदश ॥"

पुन' पादुकाश्रेणीविभागोऽवर्त्तत। सर्व्वासु च श्रेणीषु ईदृश कठोरशास्त्रशासन न विहितमासीत्। श्रेणीविशेषभाज पादुकां वहन्तो लोका आचमनमपि अर्हेयु.। भट्टभाष्यधृतस्मृतिवचने खल्विदं दृश्यते। यथा

"राज्ञा गुरूणा देवाना न दुष्येदन्तिके चरन्।
आजानुपत्रचरणस्तथाचमनकर्म्मणि ॥"

प्रयोजनानुसारतो विभिन्नाकृतिमती पादुका यथा साम्प्रतं सभ्यतायाः परिचयं दत्ते, पुरापि तथा आसीत्। प्रमाणमपि वर्त्तते। विभिन्नासु श्रेणीषु—"आजानुपत्रचरण" पादुका सर्व्वापेक्षयाधिकतमं सम्मानं लभते। न चेत् स्मृतिवचनमीदृश प्रचलितु न शक्यते। कीदृशेषु कार्य्येषु च पादुकाव्यवहारो निषिद्ध आसीत् तत्परिचयो नितराम् ईषदेव। यथा—

"न सोपानत्को मूत्रपुरीषे कुर्य्यात्" ( आपस्तम्बः )
"यो भुङ्क्ते वेष्टितशिरा यश्च भुङ्क्ते विदिङ्मुख.।

सोपानत्कश्च यो भुङ्क्ते सर्व्वं विद्यात्तदासुरम् ॥ ( कूर्म्म )

"उपानद्गूढपादो वा यानशय्यागतस्तथा ।
प्रसार्य्य न जपेत् पादावुत्कटासन एव वा ।"

( तन्त्रान्तर )

पुरा अन्येषाम् पादुका आत्मसात् कर्त्तुं कस्यापि प्रलोभो नासीत् । शास्त्रानुशासनमेव तत्प्रति कारणम् । यथा—

उपानहौ च वासश्च धृतमन्यैर्न धारयेत् । ( मनु ६६ )

शिल्पशास्त्रे ( विश्वकर्म्मप्रकाशे ४००—४५ सू० ) द्वे श्रेणी वर्त्तेते पादुकासु । तन्मध्ये एका पादुका अपरा च उपानत् । यथा ।—

"उपानाहौ प्रकर्त्तव्यौ स्वपादप्रमितौ तथा ।
पादुके च तथा कार्य्ये अन्यथा दु खशोकदौ ॥"

प्राचीनसाहित्ये पादुकेति—शब्दस्य प्रयोगः स्वल्प एव दृश्यते, परन्तु उत्तरकालीनसाहित्ये "पादुका" "उपानत्" च द्वयोरपि शब्दयोः तुल्यार्थे प्रयुक्ततया अमरसिंह. शब्दद्वय तदीयकोषे एकस्यै व पर्य्यायस्य अन्तर्गत कृतवानिति अनुमीयते । सर्व्वासा पादुकानाम् "उपानत्" इति आख्या न प्रदातव्या । एकश्रेणीयपादुका नाम्ना 'गुरुपादुका" सा तु न पादुका परं पादुकाप्रतिमामात्रम् । गुरुपादुकानिर्म्माणे रत्नस्वर्णरौप्यप्रभृतीनि महार्हाणि द्रव्याणि तथा चन्दनदेवदारुप्रभृतिकाष्ठानि व्यवह्रियन्ते । यथा—"मणिरत्नमयी कार्य्या" इत्यादि प्रागुक्तम् । "उपानत्" अपि पादुकावत् श्रेणीद्वयभाक् । "अनुपदीना" "आजानुपत्रचरण"श्चेति श्रेणीद्वयम् ।

अनुपद-सर्व्वान्ना-यानयं बद्धा-भक्षयति-नेयेषु ।" एतस्मात् पाणिनीयसूत्रात् अनुपदीनाख्यपादुकायाः परिचय. प्राप्यते । काशिकावृत्तौ तु "अनुरायामे सादृश्ये वा अनुपद बद्धा अनुपदीना उपानत्" इति व्याख्या अस्ति । आजानुपत्रचरणस्तु जानुपर्य्यन्तम् आवृणोति , अतोऽय पाश्चात्यदेशीयाजानुप्रच्छन्नकारिणा 'बुटा'ख्यपादुकाविशेषेण तुल्यः ।

"ऋषभोपानहोर्ञ्यः" इति पाणिनिसूत्रस्य व्याख्यायां काशिका-वृत्तौ चर्म्म मुञ्जश्च ( तृणविशेषः ) इति पादुकोपादानद्वयमुल्लिखितम् अस्ति। एव सम्भवति यत्, मुञ्जनिर्म्मिता पादुका एकदा "मोजा" इति नाम्ना प्रसिद्धिं गता। "मोजा" तु पाश्चात्त्यदेशीयाना सौत्रिक-पादावरणेन "ष्टकि" इत्याख्येन सह साम्य बिभर्त्ति। उच्चारणगत-सादृश्य सलच्यते चेत् तदा एवं स्वीकार्य्यं यत् अनुपदीना-प्रभृति-पादुका मुञ्जेन निर्म्मितत्वात् "मोजा" इति नाम अवाप। भरतमल्लि-केन तट्टीकायामेव व्याख्यातम्। "सेव उपानत् पादायता पादायाम-प्रमाणा चेत् अनुपदीना 'मोजा' इति ख्याता स्यात्। गुल्फादि-सहित-मशेषपदम् अनुपदं साकल्ये अव्ययीभाव'।

सन्न्यासिभिर्व्यवहार्य्या पादुका नारिकेलतन्तुना निर्म्मिता भवति स्म। तत्र कादम्बरी-प्रमाणम्। यथा—

"विशाखिकाशिखर-निबद्ध-नारिकेलफलकम्बलमयधौतोपानद्युगो-पेताम्।"

पौराणिकाख्यायिकानुसारत' पादुका सूर्य्यलोकात् मर्त्त्यलोके सम्प्रवर्त्तिता अभवत्। प्राचीनभास्कर्य्ये बहुधा पादुकापरिचयः प्राप्यते। पादुकासंयोगेन देवमूर्त्तेः सुसज्जितकरणप्रथा नितान्त-माधुनिकी इति न मन्यामहे वयम्। तन्त्रसारधृते कस्मिंश्चिद्ध्याने पादुकोल्लेखो दृश्यते। यथा—

"श्यामवर्णा त्रिनयनां द्विभुजा वरपङ्कजे।
दधाना बहुवर्णाभिर्व्वहुरूपाभिरावृताम्॥
शक्तिभिः स्मेरवदना स्मेरमौक्तिकभूषणाम्।
रत्नपादुकयोर्न्यस्तपादाम्बुजयुगा स्मरेत्॥"

बहुभिरेव विश्वस्यते यत् भारतीयाः पाश्चात्त्यदेशीयान् अनुकुर्व्वन्तः पादुकाव्यवहारम् अजानन्। भ्रान्तोऽयं विश्वासः। अलमतिविस्तरेण। "पादुके पूजयेत् सदा"। इति शम्।

---

# रजनी *

[ निबन्धिका—श्रीमती रेणुदेवी ]

नहि युष्माकं सुखेन दुःखेन वा मम सुखं दुःखं वा परिमातुं शक्यम्। नहि कश्चिदपि स्वसुखेनान्यस्य सुखं, दुःखेन वा दुःखं परिच्छेत्तुं शक्नोति, विशेषतो येषां प्रकृतिर्भिन्ना। जन्मान्धस्यास्य जनस्य सुख वा विषयानुभवो वा नान्यसाधारणः। क्षुद्रायाः यूथिकाया गन्धेनाहं सुखमनुभवामि, किन्तु नक्षत्रमध्यवर्त्ती शारदः पूर्ण-चन्द्रोऽपि न मे सुखहेतुः। जन्मान्धोऽयं जन.।

कलिकाता-समीपवर्त्तिनि बालिगञ्जग्रामे कस्यचित् पुष्पोद्यानशालिन. पुष्पविक्रयेणैव जीवन यापयत पितुरेकमेवाहमपत्यम्। अथ प्रतिवर्षं नव नव कुसुमसमृद्धिभारमुपादाय समुपागते फाल्गुने पिता मे प्रति-दिन पुष्पाण्याहृत्य ददाति, अहञ्च ते. ग्रथ्नामि विचित्राः स्रजः, विर-चयामि उच्चावचान् स्तवकान्, निर्मामि च बहूनि भूषणानि। नहि कोऽपि मया रचितविन्यासविशेष कुसुमचय निपुण निरीक्षमाणोऽपि शक्नोति वक्तुं यदेतदन्धेन विरचितमिति। अवसरसमये पिता माता च मम साहायकं विधत्तः। अधुनापि मया नाभिहितं यदहं नारी वा पुरुषो वेति, किन्तु येन नेदानीमपि परिज्ञातं तस्याविदितमेव तिष्ठतु, नाहं कथयिष्यामि।

दुःसाध्यो हि जन्मान्धायाः परिणयः, अत एवाहमद्यापि कुमारी तिष्ठामि। अनेकाभिश्चक्षुष्मतीभिर्मम चिरकौमार्यकथामाकर्ण्य समभिहितं, कथमहमपि न नयनविहीनेति। अविवाहितापि नाहं दुःखमनुभूतवती। स्वयंवरा खल्वहम्। एकदा कलिकातावर्णना-प्रसङ्गेन पितुर्मुखात् कस्यचित् स्मृतिस्तम्भस्य, विनापि कस्यापि सहायतां सुप्रतिष्ठितस्य समुन्नतशिरस पृथिवीपतेरिव महत्तमता-

---

* वङ्गकवि वङ्किमचन्द्रचट्टोपाध्याय रचितस्य 'रजनी' नामधेय-कथा-काव्यस्य अनुरूपानुवादरूपोऽयं निबन्ध।

माकर्ण्य तमेवाहं तदा मनसा वृतवती पतिम्। तदाहं पञ्चदश-वर्षदेशीया, भूयश्च मे सप्तदशे वर्षे विवाहान्तरमजायत।

वसूपनामकः कालीचरणाख्यः कश्चित् कायस्थोऽस्माकं गृहसमीपे निवसति। एकदा तस्य चतुर्व्वर्षीयः पुत्रोऽस्माकं गृहे समागतः। पथा महता तूर्य्यध्वनिना विवाहार्थं गच्छन्तं कञ्चित् वरमाकर्ण्य कोऽय गच्छतीति तेन पृष्टया मया कश्चित् वरो गच्छतीति प्रत्युक्तम्। श्रुत्वैतत् क्रन्दन् स समुवाच "अहं वरो भविष्यामीति। तदाहं तं परिसान्त्वयितुं मोदकं प्रदायाभिहितवती "मा रोदीः त्वं मम वर इति।" तदा स कृताभ्यवहारः पुनरुवाच "वरस्य किं कर्त्तव्यमिति।" मन्ये तेनैवमवगतं यद्वरो मोदकमेव भक्षयतीति। वाञ्छित च तस्य तादृशं कर्त्तव्यपालनम्। अथाहमुक्तवती वरः पुष्पाणि संगृह्य ददातीति। सोऽपि कर्त्तव्यं परिज्ञाय पालयितुमारेभे। मया वरत्वे-नाभिधीयते स्म च।

अथेदानीमहमिदानीन्तनीः जटिलाः कुटिलाश्च सविनयमावे-दयामि,—किमहं मां सतीति प्रकटयितुं शक्नोमि?

मम पिता च प्रतिदिनं विक्रीणाति स्म पुष्पं रसिकेषु पुरुषेषु। माता धनिनां निकेतनानि नयति स्म पुष्पाणि। तेषु च रामसदयमित्रस्यैव गृहं प्रधानभूतम्। तस्य द्वे भार्य्ये ज्येष्ठा भुवनमणिश्चिररुग्ना, सुतरां वृद्धे वयसि तेन भार्य्यान्तरं संगृहीतम्। कनिष्ठा च लवङ्गलता सर्व्वै-र्गुणैरुपेता दाने च मुक्तहस्ता, किन्तु मुखरा। सा वृद्धे पत्यौ यादृश-मनुरागं बभार, कापि नवीना कमपि नवीनं प्रियं प्रति न तादृश-मनुरागं धत्ते। नयनविहीनाहं सुतरां नावलोकितवती लवङ्गलता, किन्तु श्रुतवती यदलोकसामान्यमस्या रूपम्।

नवीना सा रामसदयं सुतरां नवीनवेशेन समलङ्करोति स्म। कथं वा तद् भूषणनैपुण्यमहं वर्णयामि? सा स्वहस्तेन प्रतिदिनं तस्य काश-कुसुमशुभ्रान् केशान् भेषजविशेषेण रञ्जयन्ती कालिमानं प्रापया-

मास। यदि लज्जया कदाचिदस्याः प्रणयी वृद्धयोग्यं वसनं परिदधाति, तदा सा स्वहस्तेन तदपाकृत्य युवजनोचितेन वसनेन वर्द्धयामास तदङ्गशोभाम्। दरिद्रहस्तगतञ्चाभूत्तेन धृतं वसनम्। वृद्धे वयसि रामसदयो नितरां विरागं भेजे विलेपनेषु, सापि निद्रितस्य तस्य सर्व्वाङ्गेषु विलिलेप विलेपनानि। प्रायशश्च तस्य अपहृतानि बभूवुरुपनेत्राणि, चूर्णितानि च लवङ्गलतया। काञ्चनञ्च तत्र स्थितं प्रदत्तमभूत् कन्याविवाहव्याकुलेभ्यो दरिद्रेभ्यः। दुःखेनातिवाह्यस्तावदस्माकं दिवसो भवेत्, यदि रामसदयस्य भवनादेव साहाय्यं न लब्धं स्यात्। लवङ्गलता निकृष्टमपि माल्यं बहुना मूल्येनागृह्णात्, तिरस्करोति स्म च,—कथं कुत्सितमिदं माल्यम् इह समानीतमिति। मूल्यदानसमये च भ्रमेण ताम्रकमुद्राव्यत्ययेन ददाति स्म राजतमुद्रां, प्रदर्शिते च भ्रमे नेयं ममेति चावदत्। निर्ब्बन्धातिशये च कृते प्रहर्त्तुमुद्यताऽभवत्। मम नयनहीनत्वमेवात्र कारणं, यावदस्माभिः ग्रहीतुं युज्यते तदेव ग्राह्यं, सुतरां माता ततोऽधिकं नागृह्णात्। दिनातिपात एवास्माकं सुखकारणमजायत।

लवङ्गलता तु परिक्रीय पुष्पाणि पतिं विभूषयामास, ब्रवीति स्म च,—दृश्यतामयमपरो रतिपतिः। रामसदयोऽपि प्रतिवाक्यं जगाद "न रतिपतिः किन्तु साक्षादञ्जनानन्दन एवेति।"

अथैकदा अस्वस्था माता अतोऽहं लवङ्गलतायै पुष्पाणि दातुं गतवती। मां दृष्ट्वैव सा समुवाच, नयनहीने! किं त्वं मरणाय सम्भृतकुसुमा समागतासि? अन्धेति सम्भाषणं मम सुमहान् विरागहेतुः। अहमतीव कुत्सितमेकं प्रत्युत्तरं दातुं समुद्यता, सहसा कस्यापि निशम्य पदशब्दं विरता जातास्मि। सोऽपि पदशब्दस्य कारणं कोऽपि समेत्य लवङ्गलतामुवाच—अम्ब! केयं? तदा लवङ्गलता मृदुना स्वरेण समभिहितवती "नयनहीना पुष्पविक्रयकारिणी खल्वियमिति। श्रुतो मया रामसदयस्य ज्येष्ठपुत्रकण्ठध्वनिः, न

खलु स एतादृशं माधुर्य्यं बिभर्त्ति। मन्ये यदयं तस्य कनिष्ठो भ्राता शचीन्द्रः। स समुवाच, पुष्पविक्रयकारिणी! मया पुनर्ज्ञातं यदियं कापि भद्रकन्यकेति। लवङ्गलता प्रत्युवाच, हन्त! पुष्पविक्रयकारिणी किं भद्रकन्यका न भवति। अप्रतिभः शचीन्द्रः समुवाच "कथं भद्रकन्या न भविष्यति अहमिमां तथैव सम्भावयामि, किन्तु कथमसौ नयनहीना? लवङ्गलतया समभिहितं "इयं जनुषान्धा।" शचीन्द्रस्य विद्यागौरवमासीत्, अन्याभिर्विद्याभिः सह तेन चिकित्साविद्यापि समधीता। एवं जनेषु प्रसिद्धिर्जाता यत्, विनैव वेतनग्रहणं दरिद्राणां चिकित्सैव तस्य लक्ष्यभूता। स तु मामुपेत्य समभाषत "उत्तिष्ठ, अहं तव चक्षुषी परीक्षे।" सङ्कोचेनाहमुत्थिता। सोऽब्रवीत् "अवलोकय माम्।" हन्त! कथमहमवलोकयामि? पुनश्च तेनाभिहितं "प्रत्यावर्त्तय मां प्रति नयने।" अहन्तु काणेन चक्षुषा निक्षिप्तवती शब्दभेदिनं बाणम्। नहि तत्तस्य मनोरथानुरूपं जातं, तेन तु तदा गृहीतचिबुकेन प्रत्यावर्त्तितमात्मनोऽभिमुखं मे मुखम्।

भस्मनि हुतं भवतु चिकित्सितम्। स्मृतास्मि च तेन स्पर्शेन। हन्त! पुष्पमयोऽयं स्पर्शः। तस्मिन् स्पर्शेऽहं यूथिका-शेफालिका-मालतीप्रभृतीनां सर्व्वासामेव पुष्पजातीनां गन्धमनुभूतवती। मनसि मे प्रतिभातं यत् परितो मां पुष्पाणि विकीर्णानि, शिरसि मे कुसुमसन्ततिः, पदयोर्मे प्रसूनानां राशिः। अहो नु भोः! केन विधात्रा निर्म्मितोऽयं कुसुममयः स्पर्शः?

(क्रमशः)

---

## योगरहस्यम्

( पूर्व्वतोऽनुवृत्तम् )

[ निबन्धक :—साधनसमरप्रणीता ]

### तदा द्रष्टुः स्वरूपेऽवस्थानम् ॥ ३ ॥

तटस्थमुक्त्वा स्वरूप निर्द्दिशति तदेति। तदा योगसमकाले, यद्यपि योगो नाम देशकालाद्यतीतश्चिन्मात्रप्रत्ययरूपस्तथापि बुभुत्सुप्रतिपत्तये तदेति कालवाचकशब्दप्रयोग'। द्रष्टुर्द्दृश्यानुभवकर्त्तुरहं'प्रत्ययगोचरस्य चिदात्मन., स्वरूपे स्वकीयं रूपं सत्यज्ञानादिलक्षण तस्मिन्नवस्थान स्थिति पर्व्वतस्तिष्ठतीतिवन्न तु गतिनिवृत्तिरूपमधिकारित्वात्। योगस्वरूपस्य सर्व्वथा वाङ्मनोगम्यत्वेनैवात्र भङ्गया स्वरूपनिर्द्देशः। दृश्यानामपगमे द्रष्टृत्वव्यपदेशोऽप्यस्य न सम्भवति।

"यदा सर्व्वमात्मैवाभूत् तदा केन कि पश्येदिति।"

अत्रेदमाकूतं—दृश्यानामिदन्तया प्रतीयमानाना चित्तवृत्तीनामविद्याविलसितत्वादेतानयोर्द्रष्टृदृश्ययोरेकत्वरूपो योग' सम्भवति। अन्यथा भेदस्य पारमार्थिकत्वे वाङ्मात्रेणैव पर्य्यवस्यति योगो मुक्तिर्वा। ततश्च न योगे कारण' वृत्तिनिरोधः। किञ्च योग एव वृत्तिनिरोधे हेतुरविद्यानिवर्हनद्वारेण।

अत्रेय जिज्ञासा—किमविद्यानिवृत्तित' स्वरूपाभ्युपगम उत स्वरूपाधिगमेऽविद्यानिवृत्तिरिति। यद्यप्यत्र दुर्निरूपणीय कार्य्यकारणभावो वीजाङ्कुरवत्तथापि "यमेवैष वृणुते तेनैव लभ्यस्तस्यैष आत्मा वृणुते तनूं स्वा"मिति श्रुतिः प्रोक्तेनापदेशबलेन द्वितीय एव पक्षः श्रेयान्। यो ह्यात्मानं वृणुते प्रार्थयति वरयति कन्येव वरं, तस्मिन्नेव जने आत्मा स्वां तनूं स्वरूपं वृणुते प्रकाशयति। एवञ्च योगो नाम केवलात्मकृपालभ्यः, कृपायाश्च पूर्व्वरूपं वृणुते-पदबोध्यं प्रार्थनं वरण-

मात्मसमर्पणमिति यावत्। ततश्च यथोक्ताधिकारिणामहङ्कार-निष्कासनपूर्व्वकात्मसमर्पणमेव स्वरूपावस्थानरूपस्य योगस्याविनाभावि पूर्व्वरूपं दृश्यते श्रूयते च। न तु केवलेन वह्निः प्रक्रियाविशेषेण वृत्तिनिरोधबलेन कदापि योगसिद्धिरित्येतदीश्वरप्रणिधानाद् वेत्यादिषु स्फुटीभविष्यति।

वृत्तिसारूप्यमितरत्र ॥ ४ ॥

योगे द्रष्टुः स्वरूपस्थितिरुक्तान्यत्र किं स्यादित्याह—वृत्तिसारूप्य-मिति। इतरत्र योगादन्यत्र वृत्तीना साम्य समानरूपत्वमभिन्नरूपत्वमिव भवतीत्यर्थः। अद्वयाविकारि-चिदेकरस आत्मा "यदा द्वैतमिव भवति तदा इतर इतरं पश्यति।" लीलाकैवल्यतोऽविद्योपाधि-कृतान् वृत्तिस्वरूपान् स्वगतभेदान् स्वयमेव पश्यतीति द्रष्टुरेव दृश्य-रूपता। परमार्थतस्त्वहमिदन्ताभ्या प्रतीयमानयोर्द्रष्टृदृश्ययोर्नास्ति भेदलेशोऽपि।

इदमत्र ज्ञातव्यं, नत्वशक्तस्य द्रष्टृत्वं वृत्तिसारूप्यं वेति। यो हि नाम द्रष्टा पुरुष. सा चितिशक्तिरेवेत्युपरिष्टाद् वक्ष्यते। अत एव वृत्तिरूपेण तदाविर्भाव, उक्तञ्च या देवी सर्व्वभूतेषु वृत्तिरूपेण संस्थितेति।

---

## साधुचरितम्

[ निबन्धक :—श्रीकालीपदसिद्धान्तभट्टाचार्य्यः ]

साधुः कश्चित् सरलहृदयो योगमार्गानुगामी
ग्रामप्रान्ते वटतरुतले च्छायया शान्तिरम्ये।

पुष्यत्पुष्पैः कुसुमतरुभिस्तर्पणैरिन्द्रियाणां
ध्यानाविष्टोऽवसदविरत शोभिते काननान्ते ॥ १ ॥
काचित्तन्वी विमलसलिला वीचिविक्षोभमत्ता
दूरेऽश्रान्त वहति तटिनी फेनपुञ्ज दधाना ।
तत्र स्नात्वा मनुजनिचयाः कौतुकाक्षिप्तचित्ता-
स्तस्याभ्यासे गमननिरताः सत्कथाकर्णनाय ॥ २ ॥
धाम्ना दीप्तं कलुषरहितं छिन्नसंसारवृत्तं
सम्पश्यन्तो भगवति परं त समासक्तचित्तम् ।
स्वेच्छानम्राः स्वयमुपगता देवभावप्रपन्नं
सम्पूज्यैनं प्रणममगमन् भक्तिपुष्पोपहारैः ॥ ३ ॥
हित्वा कामान् सह परिजनैर्मोक्षकामो यतात्मा
लेभे जप्तानवरतमसौ देवतापादपद्मम् ।
मोहोन्मेषो नियतकलुषस्तप्यमानस्य साधोः
शान्ते चित्ते प्रहतविभवो न व्यथामातनोति ॥ ४ ॥
कदाचिद् ध्यानेनावहितहृदय. प्रेमविचल-
च्छरीरो गम्भीरो जलधिरिव भीमाकृतिधर. ।
तपस्तेपे तस्मिन् स खलु विनियम्येन्द्रियगणं
सतां लोके वृत्तिर्भवति हृदयस्योन्नततमा ॥ ५ ॥
एवं तस्मिन् विमलगगने मुक्तशङ्का विहङ्गाः
श्रेणीबद्धा मुदितमनस-स्तत्पथे सञ्चरन्ते ।
तेषां कश्चिद् भुवि निपतितः सायकेनैव बिद्धः
कारुण्येनोपहितहृदयस्यान्तिके तस्य साधोः ॥ ६ ॥
मेघावसानसमये समुदीयमानो
भानुर्यथा जगदिदं विमलीकरोति ।
गाढं तमः परिहरन् वनभूमिसक्तं
योगी तथा स नयने सहसोन्मिमील ॥ ७ ॥

उन्मील्य ते च नयने करुणैकसिन्धु-
र्भूमौ पतत्क्षतशरीरविहङ्गराजम् ।
दृष्ट्वातिदुःखितमना गलदश्रुधारं
क्रोडे निवेश्य शिथिलं तमसौ पुपोष ॥ ८ ॥
आकर्ण्य पक्षिपतनं शबरप्रवीरः
क्षणातिलम्बितवपुर्धनुरानमय्य ।
गच्छन् गतेन जविना पतगोपकण्ठं
देहीति पक्षिणमसौ भृशमाजगाद ॥ ९ ॥
कारुण्यसम्भृतमनाः स ततो महात्मा
दर्पोद्धतं परुषमस्य वचो निशम्य ।
तं गर्हयन् शवरमाशु विवेकहीनं
वाचोपदेशपरया समुवाच किञ्चित् ॥ १० ॥
जीवान् स्वभावमधुरान् परिहंसि नित्यं
वृत्तिं जने पशुभिराचरितां विधाय ।
एतादृशानि कलुषाणि गुरूणि कर्त्तुं
किं नो बिभेषि परमेश्वरतो विमूढ ॥ ११ ॥
नित्यं स्वकैतवबलेन जनान् विलोभ्य
जीवान् निहत्य नियतं जठरं बिभर्षि ।
सर्व्वज्ञ एव भगवान् परलोकभर्त्ता
शास्तिं विधास्यति नु ते दुरितस्य सम्यक् ॥ १२ ॥
इत्थं वचः समधिगम्य ततो महर्षेः
स्मृत्वाखिलं दुरितमाचरितं चिरेण ।
व्याधोऽनुतप्तहृदयः कलुषस्य शेषं
सञ्चिन्त्य साधुचरणे भृशमालुलोठ ॥ १३ ॥
व्याधं विलोक्य चरणे पतितं मनस्वी
नित्यानुतापपरिशोषितरूक्षदेहम् ।

स्नेहाकुलेन मनसा परिरभ्य गाढं
"चित्तं निवेशय हरे" मुनिरित्यवाच ॥ १४ ॥
शुश्रूषया स परितोषितचित्तवृत्तिः
पक्षी ययौ वियति पक्षपुटं विधुन्वन्
हित्वा तदैव विशिखान् शबरो विवेकी
भक्त्यश्रुसिक्तवपुषा मुनिमाननाम ॥ १५ ॥

---

## आवाहनम्

[ निबन्धकः—श्रीशिवशास्त्री ]

भूयोऽपि समागतश्चक्रनेमिक्रमेणोन्मत्तकलहंसरवनूपुरध्वनिरम्यः शरत्कालो विगतप्रायश्च वर्त्तते। विद्यते न कश्चिदपि जलधरो नभसि नीले। शोभते रजनी शिशिरकिरणेन, कुमुदैः सरांसि शोभन्ते, हंसैर्जलानि सरितां, तथा शुक्लीकृतान्युपवनानि च मालतीभिः। सर्व्वत्र शारदी सुषमा जनानां वर्षाधारापीडितानां ह्लादयति मनांसि। राजते च पुष्पफलसम्भृता वसुन्धरा। कुसुममकरन्दसन्दोहप्रलुब्धा भ्रमराः पुष्पात् पुष्पान्तरं प्रयान्ति। सर्व्वे एव जीवा अभिनवबलसम्भृतहृदया इव प्रतिभान्ति। ज्ञापयन्तीव च जनान् सिंहवाहिन्या भगवत्या-स्त्रिविधतापतप्तेऽस्मिन् लोके आगमनस्य वार्त्तां कलहंसा मधुररवेण। जगन्मातुरागमनेन सर्व्वे आत्मानं कृतकृत्यमर्चनया च तत्रभवत्याः कर्त्तुकामास्तस्या आगमनं प्रतीक्षमाणास्तिष्ठन्ति जनाः।

प्रतिवर्षं यथा हरसुन्दरी दुःखत्रयप्रपीड़ितान् जनाननुग्रहीतु-

मागच्छति तथास्मिन् वर्षेऽपि सुषमामण्डितायामस्यां शरदि तत्र-भवत्याः पदार्पणं भविष्यतीति निर्म्मलं नभ, पुष्पिता वृक्षाः, सानन्दाः शिलीमुखाः, प्रसन्नं जलं, तथा समग्रवर्षञ्च यावत् मानवमनांसि दुःखशोकग्रस्तान्यपि कात्यायन्याः शुभागमनेन क्षणमपि प्रफुल्लानि जातानि। सर्व्वे एव मर्त्त्या आनन्दसागरे प्लवमाना इव वर्त्तन्ते।

अयि भवभयहारिणि दुर्गे! त्रायस्व, एह्येहि मातः शरणागत-दीनार्त्तपरित्राणपरायणे! निरानन्दमयबङ्गभूमौ प्रवाहयानन्दधाराम्। अजलामफलां शस्यहीनां बङ्गभूमिं सुजलां सुफलां शस्यश्यामलां विधाय बङ्गनिवासिनां निराशजीवितानां हास्यरेखामानने प्रकाशय। मातः सर्व्वमङ्गलमङ्गल्ये! अस्यां शरदि सर्व्वे ते भक्ततनयाः कातरप्राणाः करुणस्वरेण त्वामाह्वयन्ति, त्वमागत्य मातः! तान् भयार्त्तान् तनयान् नष्टशङ्कान् कर्त्तुमर्हसि।

मातः! तव चरणकमलपूजां केन प्रकारेण वयं विधास्यामः। न किञ्चिदपि वस्तु वर्त्तते, केवलं तव पूजार्थं वर्त्तते उष्णमश्रुजलम्। अद्य समेत्य वयं नस्तप्ताश्रुजलमेकत्र संमिश्र्य पाद्यं ते विरचय्य रक्त-चरणयोः हृदयञ्च मथित्वार्घ्यं रचयामः।

अयि देवि! प्रपन्नार्त्तिहरे! प्रसीद, परित्रायस्व भवच्चरणकमल-स्पर्शेन पापिनो नरान्, क्षपितकल्मषांश्च तान् कर्त्तुमर्हसि। संवत्सरं व्याप्य मनुजा दुःखत्रयसंक्षुब्धहृदया अनुभूतविविधक्लेशास्तव चरण-स्पर्शेन शान्तदुःखमोहा भवन्त्विदानीम्। मानवहृदि षड़िन्द्रियाणि विद्यन्ते, ते सदाऽजय्यानि। नास्ति बलं मानवानां तानि जेतुम्। अतः देहि मातः! तेभ्यः यथोपयुक्तं बलं येन ते सर्व्वाणीन्द्रियाणि जेतुं शक्नुयुः। दुर्गे! त्वञ्चेत् मानवाननुगृह्णासि, तर्हि का चिन्ता विद्यते तेषाम्? लीलया ते दुर्द्धर्षान् रिपून् जेतुमलं स्युः। यथा त्वं देवानां स्तवेन प्रसन्ना सती तेषां रिपूनजैषीस्तथा मनुजेषु प्रसन्ना भूत्वा तेषां दुर्ज्जयामित्रवशीकरणे सामर्थ्यं प्रदेहि। किन्तु

मातः! नाचारो, नापि पूजा, न च यजन, नापि तव नामसंकीर्त्तनं वा विद्यते मानवाना, तथापि सर्वे ते मुग्धतनया इति ज्ञात्वा तान् प्रति दयस्व।

अयि भो मानवाः! यूयञ्चेत् बङ्गेऽस्मिन् प्रासादमारभ्य पर्णकुटीरं यावत् निपुणं निभालयेत तर्हि द्रक्ष्यथ गगनवायुगहनकानन वृक्षलता तटिन्यः जीवास्तथा कीटपतङ्गाश्च सर्व्वे एव तत्रभवत्या आगमनं गायन्ति। लोकेऽस्मिन् बहवो देशा वर्त्तन्ते, परन्तु मातृदर्शन लाभाय कुत्र कश्चिदित्थं जनो भगवत्या आगमनं प्रतीक्षमाणस्तिष्ठति कश्चित्। या हि जगतो माता सा हि केवलमद्य बङ्गस्य। पश्यत मूलप्रकृतिः मातास्य पुत्राणामाह्वाने अधीरा। शस्यपूर्णप्रान्तरे मातुः पुलक, सरित्सु पुण्यपीयूषधारा, निर्म्मले गगने, चन्द्रस्य रजतकिरणे च मातुर्हास्यं प्रस्फुटन्ति।

मातः! एहि एहि शरदोऽद्य शुभ्रमरीचिमालिनश्चन्द्रमसो रजतकिरणधाराया, शस्यश्यामलप्रान्तराणा श्यामवर्णे, नदीनामुद्दामस्रोतसामानन्दनृत्ये, धनिन आलोकमालासज्जितेषु वाद्यमुखरितचत्वरेषु, मृन्मयीषु प्रतिमासु, दरिद्राणा घटेषु, रोगिणा स्वास्थ्ये, भक्तानामश्रुणि, शिशूना हास्ये, यूना प्रेमालापे, गन्धे, पुष्पे तथा गगने। अद्य सर्वे भक्तजना एकत्र समवेत्य उच्चैः गायन्तु—

"प्रणतानां प्रसीद त्वं देवि! विश्वार्त्तिहारिणि!
त्रैलोक्यवासिनामीड्ये! लोकानां वरदा भव॥" इति

---

## समालोचनम्

[ समालोचक :—श्रीदुर्गामोहनसाङ्ख्यतीर्थः एम्-ए, ]

**साङ्ख्यकारिका** (गौडपादभाष्यसमुपबृंहिता)—संस्कृतसाहित्यपरिषदाचार्य्य-मुक्तिदीपिकादिटीकाकार-श्रीयुक्तकालीपदतर्काचार्य्येण संस्कृत-भाष्यप्रभाटीका-बङ्गभाषानुवादाभ्यां समलङ्कृत्य सम्पादिता, निवेदिता-लेनस्थ-छात्रपुस्तकालयात् प्रकाशिता। मूल्यमानकद्वयकम्। दर्शन-गरिष्ठस्य साङ्ख्यशास्त्रस्य विश्वविश्रुतं नाम मन्ये न केषामीषत्-शिक्षितानामप्यपरोक्षतां भजते। कालार्कभक्षितमिदं शास्त्रमसम्पूर्ण-प्रायमिति तद्व्याख्यातृसम्प्रदायस्वरसादवगम्यते। एवं स्थिते भुक्ता-वशिष्टतया इयं साङ्ख्यकारिका साङ्ख्यसूत्रनामधेया षडध्यायी च प्रचर-दध्ययनाध्यापने वर्त्तेते इत्यपि न परोक्षं नाम। वयन्तु षडध्याय्या विज्ञान-भिक्षुसंग्रहधिया इमामिकामेव कारिकां निर्व्वास्यत. साङ्ख्यदीपस्य प्राचीनां दशां कल्पयामः। अस्याश्च बह्व्यः व्याख्याः सन्ति, गौडपाद-कृता षड् दर्शनटीकाकृद्वाचस्पतिमिश्रकृततत्त्वकौमुद्यादयश्च। समा-लोच्यमानग्रन्थश्च साङ्ख्यशास्त्रीयाद्यपरोक्षापाठ्यभूतया गौडपादकृतया व्याख्यया समुपबृंहितो वर्त्तते। आदितोऽवसान यावत् समालोचितोऽयं ग्रन्थोऽस्माभिः। विस्तृतसरलटीकया अतिविस्तृतेन बङ्गानुवादेन च ग्रन्थोऽयं परीक्षार्थिनामशेषोपकाराय कल्पिष्यत इति दृढ़ं वक्तुमर्हामः। महामतयो व्याख्यादिकर्त्तारश्च तत्रभवन्तः संस्कृतसाहित्यपरिषदा-चार्य्यपादाः बहुश्रुताः सुपरिचिताश्च विद्वत्क्षिति का वा न्यूनता तत्र कल्पयितुं शक्यते, परं सप्तपृष्ठव्यापिनी दर्शनविषयकविविधज्ञातव्यतथ्य-भूयिष्ठा भूमिका ग्रन्थस्योपादेयतामतिमात्रामवर्द्धयदिति च सनिर्व्वन्धं वक्तुमग्रेसरामः। विशुद्धं संस्करणम्, समुज्ज्वलान्यक्षराणि सुशोभनानि च कागदानीति त्वरन्तां परीक्षार्थिनः। एवंविधस्य च ग्रन्थस्य नाम-

मात्रं मूल्यम् आणकदशक कल्पयद्भिः प्रकाशकैरनुगृहीता इव दरिद्र-छात्रसम्प्रदाया इति नातिरिक्तं वचः ।

**प्रश्नकल्पतरुः**—बङ्गाक्षरमुद्रितोऽयं ग्रन्थः काव्यतीर्थ-व्याकरण-तीर्थ-विद्यानिधि-ज्योतिषाचार्य्योपाधिमता श्रीमदनन्तकुमारभट्टा-चार्य्येण सकलितः, बरिशाल्-भाग्यगणनाकार्य्यालयतः श्रीनीलरतनभट्टा-चार्य्येण प्रकाशितः, मूल्यं रूप्यकद्वयमात्रम् ।

अद्यत्वे प्रकाश्यमानेष्वपि नवीनरीत्या बहुविधज्योतिर्ग्रन्थेषु जटिल-तया वा व्यवसायावसादकतया वा प्रश्नगणनाविषयिणी काचन ज्योतिःपुस्तिका प्रायेण केनापि प्रकाश्यमाना नोपलभ्यते। अथ च निखिलज्योतिःशास्त्रेषु अयमेक एव ग्रन्थः प्रत्यक्षफलप्रतिपादकत्वे-नाभ्यर्हितो वर्त्तते इत्यपि प्रत्ययोपपन्नं वचः। ज्योतिषिकाणां स्वार्थ-प्रवणानां स्वार्थभङ्गव्याकुलतया तथाविधोऽप्यदः प्रश्नगणनाशास्त्रमिदानीं लुप्तप्रायमिति नयनासारः प्रसूयते। श्रीमता नवीनसम्पादकेन च ज्योतिषिकाणां तं कलङ्ककालिमानं क्षालयतेव स्वार्थमविगणय्य भूयसा परिश्रमेण चार्थव्ययेन च लोकानामुपचिकीर्षया सम्पादितोऽयं ग्रन्थो ज्योतिषे सर्व्वप्रत्यक्षं नवीनं किञ्चन वस्तु समुपास्थापयदित्यनुमीमहे। इदानीं ज्योतिःशास्त्रस्य मूर्खैरनुशीलनेन मूर्खा एव ज्योतिषिका भवन्तीति लोकानां हृदयम्। अयञ्च सम्पादकः काव्यव्याकरणादिषु प्रावीण्यमुपगम्य ज्योतिषे कृतश्रमः पितुर्व्विख्यातज्यौतिषिकस्य पाद-प्रान्तवर्त्ती सम्प्रदायशुद्धं तत् शास्त्रं समग्रहीदिति निश्चिनुमस्तस्याति-पटुताम्। कागदमुद्रादयो मनोरमाः, अक्षरपातविपर्य्ययादिरूपभ्रमाणां दुर्लक्ष्यत्वेऽपि मुद्रणनियमानुगतित्यागरूपा भ्रमपरम्परा अस्मानतिमात्र-मुदपीडयदिति सत्यानुरोधस्त्रपलयति। अवसाने च इदमवश्यं वक्तव्यता-मध्यास्ते यदेकेन 'प्रश्नकल्पतरु' ग्रन्थेन संगृहीतेन विद्यार्थिनः अर्थार्थिनश्च सममेव साफल्यमनुभविष्यन्तीति मूल्यमपि किञ्चिदतिरिच्यते।

---

# संस्कृत-साहित्य-परिषदो द्वादशवर्षस्य

## ( १३३४ बङ्गाब्दस्य ) आय-व्यय-निष्कर्षः

**आयः —**

| | |
|---|---|
| गतवर्षस्योद्वृत्तम् | |
| (सेविंस-व्याङ्कागारे) | ५५७৶१० |
| हस्ते | ५७৶१० |
| वृत्तिरूपेण | २८३९/० |
| सामयिक दानरूपेण | ३६१৶० |
| पुस्तकादि-विक्रयात् | ४६८।৶० |
| प्रावेशिक रूपेण | ९।० |
| विज्ञापनात् | १०२ ` |
| वि पि शुल्कपत्रात् | ४७।।/० |
| ग्रन्थागारन्यास | ५० ` |
| कुसीदरूपेण (ओयारवक्ड सेविंस् व्याङ्क) | ६३।।/५ |
| ऋणात् (१) गृहकोषात् | ७७५ ` |
| ऋणात् (२) उत्तमर्ण सकाशात् (क) | ७०० `† |
| (ख) | ९० ` |
| | ६११७।।৶५ |

**व्ययः —**

| | |
|---|---|
| पत्रिकार्थम् | १२८२।।।৶० |
| पुस्तकालयार्थम् | १०५५।।।৶० |
| पुस्तकप्रकाशार्थम् | ५८३।৶० |
| सभाभिनयाद्यर्थम | ४०५ ` |
| छात्रवृत्त्याद्यर्थम् | ८३।।।/० |
| गृहभाटकाद्यर्थम् | ५८९৶० |
| वेतनाद्यर्थम् | ६३४।৶० |
| गृहोपकरणाद्यर्थम् | २६४/१५ |
| ग्रन्थविक्रयार्थम् | ४४।।।৶१५ |
| पाथेयार्थम् | ११८।१० |
| पत्रादिमुद्रणार्थम् | ५५।৶० |
| पत्रादि शुल्कपत्रार्थम् | ५०॥५ |
| प्रचारार्थम् | ८५।।।৶० |
| प्रतिवाद-सभार्थम् | ९२॥৶१५ |
| पूजार्थम् | ५० ` |
| वि पि शुल्कपत्रार्थम् | ६०৶१० |
| सारस्वत परीक्षार्थम् | ३२।।।৶१५ |
| विविधविषयार्थम् | ६३॥१० |
| (२ख) ऋणशोधार्थम् | ९० ` |
| | ५६४२।।।৶१५ |

उद्वृत्तम्—

| | |
|---|---|
| सेविंस् व्याङ्कागारे | २११९५ |
| सम्पादक कोषाध्यक्षयोर्हस्ते | ४५३।।।৶१५ |
| | ६११७।।।৶५ |

आय व्यय लिपि परीक्षक —
श्रीमलयकुमारदेव (वि एस् सि जि डि ए)

आय-व्यय लिपि रक्षक —
श्रीरामकृष्णचक्रवर्ती ( एम् ए )।

गृहकोषात् ७७५ ` मुद्रामात्रम् ऋणरूपेण परिषदो दत्तमिति ४००० ` मुद्रामात्रम् अवशिष्यते समरार्णपत्रेषु क्याश सार्टिफिकेट पत्रेषु च।

† १३३४ बङ्गाब्दीया राजकीय ( गवर्णमेण्ट ) वृत्ति तथा पुरपाल-( करपोरेशन ) वृत्ति च १३३५ बङ्गाब्दस्य वैशाखमास्येव लब्ध्वा उत्तमर्णस्यावशिष्ट ७०० ` मुद्रामात्रम् परिशुद्धम्। गतवर्षस्याध्यापकपुरस्कारार्थञ्च ३०० ` मुद्रामात्रम् प्रदत्तमिति।

## परिषत्सन्देशः

मासिकसभा।—सौरभाद्रपदस्याष्टमदिवसे सोमवासरे सायं सप्तम-घटिकायां परिषदश्चतुर्थमधिवेशनमेतद्वर्षीय, महामहोपाध्याय-श्रीयुक्तदुर्गाचरणसांख्यवेदान्ततीर्थानामाध्यक्ष्येण सुनिष्पन्नमभूत्। पूर्व्व-सभाविवरणपाठानुमोदनाभ्यां परतो वाचितेषु नूतनसभ्यपदमल-ङ्कुर्व्वाणानां नामसु श्रीमद्भिः सम्पादकैरमरेश्वरवेदान्तशास्त्रिभिः एम्-ए महोदयैः स्वरचितः "स्वत्वसमुत्पाद" इति शीर्षकः सुललितः प्रबन्धो वाचितः समभवत्। श्रीचण्डीचरणतर्कतीर्थः-श्रीकालीपद तर्काचार्य्य-श्रीरामकृष्णचक्रवर्त्ति एम्-ए महोदयैः प्रबन्धसमा-लोचनावसरे तस्य प्रबन्धस्य भाषासौष्ठवं विषयगौरवञ्च भूयः सप्रशंस-मुदलिख्यत, प्रत्यशृणोच्च पत्रिकासम्पादकमहोदयः प्रबन्धमचिरकाले-नैव पत्रिकायां स्थानं लम्भयितुमिति। प्रायेणाष्टमघटिकायां रजन्याः सभापतेर्धन्यवादादनन्तरं सभाभङ्गो जातः।

---

# संस्कृतसाहित्यपरिषत्

इयं संस्कृतसाहित्यपरिषत् प्रतिभा रवेः ।
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम् ॥

| | | |
|---|---|---|
| November 1928 | १८५० शकीये कार्त्तिके ११श वर्षस्य ७म-संख्या | Vol. XI No, 7 |


## मतिमञ्जरी

**विजयाभिभाषणम् ।**—श्रीमन्तः पारिषदप्रेयांसः ! समनुगृह्णन्तु नामात्रभवन्तो यथावसरमद्य विजयामहामहोत्सवावसाने सुहृदां स-नमस्कारं साशीर्वादं स-स्नेहमालिङ्गनमाङ्गिकमान्तरिकञ्च यथासम्भवमास्माकीनम् । सुदूरातीतकाले एवमेव कस्याश्चित् शारद-दशम्यां तत्रभवान् भगवदवतारः श्रीरामो रावणविजयार्थमभिययाविति विजित्य जायापहारिणमरिं दारान् वैदेहीमुददीधरत् । तत आरभ्येयं विजयादशमीत्याख्यया प्रख्यायते कल्याणकामिषु प्राणिहृन्देषु । वयमपि प्राचीना रीतिमवलम्बमाना विजयादशम्यवसाने पुरोवर्त्तिनि वर्षभागे कर्म्मसाफल्यमालब्धुकामा भगवन्तं प्रणम्य बन्धुबान्धवाश्च शुभाशयं विज्ञापयाम. ।

भूयश्च भगवते निखिलकल्याणसम्पत्तिसमुद्भावकाय स-शिरोऽवनामं प्रणाममावेदयामो यदितः पूर्ववर्षेऽपि श्रीमतस्तथा तथा प्रणामालिङ्गनादीन् विज्ञाप्य पुनरस्मिन्नपि वर्षे तथैव कर्त्तुमीश्महे । परित्रस्यपि कालकला न किल प्रत्ययमत्ययविनाशयोर्मानवानामावहतीति सुलभ-

विप्रयोगप्रसारे संसारे समभिव्याहारेण क्रियानुष्ठानं तस्यैव भगवतः पादप्रसादोपायमिति किं बहु जल्पितेन ।

**सम्पादकस्य मानप्राप्तिः** ।—सहृदयाः सदस्याः ! अद्य स्वाभिरस्मद्देशविहितप्रचारे विजयदशम्यवसरे चिरादसम्भाषितजाता परागान् भवतो यथायोग्यमालिङ्गनाशीर्वादप्रणामादिभिः पुन प्रसाद्य रसगोलकादिमधुरद्रव्यविनिमयेन मधुरतराः काश्चित् सन्देशा विनिवेद्यन्ते । जाने गलादधोगलनमात्रेण विस्वादुकेभ्यस्तत्-तद्-रसगोलकादिभ्यः स्मृत्योपस्थाप्यमानास्ते ते सन्देशाश्चर्व्यमाणेक्षुदण्डा इव भवतः सुतरामतिमात्रमानन्दयिष्यन्तीति । सौरकार्त्तिके मासि कलिकाता-विश्वविद्यालयस्य पण्डितप्रकाण्डैः संस्कृतसाहित्यपरिषत्-सम्पादकेभ्यः श्रीमद्भ्यः अमरेश्वरठाकुरवेदान्तशास्त्रिमहोदयेभ्य' पि-एच् डि इत्युपाधिः प्रदत्तः । प्राचीनभारते कारापद्धतिरितिशीर्षकः सुलिखितः कश्चित् प्रबन्धोऽस्या उपाधिप्राप्तेः कारणतामध्यास्त ।

**परिषत्परिदर्शनम्** ।—विगत सौरभाद्रपदस्य ऊनविंश दिवसे फरासिदेशीयपण्डितप्रकाण्डस्तत्रभवान् शिल्वान् लेविनामा सभार्य्य' परिषद द्रष्टुं सदयमत्रोपातिष्ठत् । प्रतीच्येषु ये नाम गीर्वाणवाण्या कृतश्रमा लब्धाधिकाराश्च साम्प्रत जनैरुद्घोष्यन्ते, तेषामयमेकतम इति तदुपस्थानेन स्थाने एव परिषदः स-सदस्यायाः कृतार्थंम्मन्यता । ते च भवन्तः परिषदो विविधविभागान्, परिषच्छात्रसमवायैरभिनीतं मध्यमव्यायोगञ्च समवेक्ष्य अतिमात्र हर्षविस्मयौ प्राचीकशन् ।

**शिक्षासचिवसमागमः** ।—सौरकार्त्तिके मासि शिक्षासचिवस्तत्रभवान् ए. जे ब्यास् सि आइ. इ महोदय', सकृप पादचारेण परिषदमलङ्कार्षीत् । तदानीं परिषत्सदस्येषु केचनान्तरङ्गाः कार्यनिर्वाहकाः शारदीयपूजावकाशे वर्षसञ्चितं कार्मक्लममपो-

ष्ठितुं त्वं स्वमभीष्टदेश गता आनन्नेति न वयमभिलाषानुरूपमभिनन्दनं तत्रभवत' कर्त्तुमलमास्म इति खिद्यन्ते नो हृदयानि। परं स भवानपि अद्यस इव पुनरेना पादार्पणेनानुग्रहीतुमेच्छदिति श्रूयते, भगवत्कृपया यद्येवं स्यात् तदा वयमस्मद्वैशिष्ट्य तस्मै विनिवेदयितुमवसर लप्स्यामहे इति शम्।

---

## शारदाह्वानम्

[ निबन्धकः—श्रीयोगेन्द्रनाथ-साङ्ख्य-स्मृतितीर्थः ]

ज्योत्स्नाराग-सुरञ्जिताम्बरधरा भास्वत्प्रभोल्लासिनी
ताराराजि-विराजि-हारधवला काशच्छलाच्चामरैः।
राजन्ती सुमनोभराञ्जलियुता प्रेम्णा विहङ्गस्वनै
स्त्वामभ्यर्थयितु समेति शुभदा कृष्णेव कान्ता शरत्॥ १
लोलोद्भूततरङ्गहंसललसितव्याकोषपद्माञ्जलि-
र्मोद-प्रेमगलत्-प्रभोज्ज्वल-जल-क्षौमाम्बरोल्लासिनी।
हर्षोद्वेल 'कुलु'स्वनैर्विदधती 'विश्वेश्वरी-स्वागत'
हंसस्वानमिषात् स्तवौति तटिनी सिंहासना ता किमु? २
द्रुमेऽपि चेतनास्ति भो यथार्थमुच्यते बुधैः
न चेत् कथं हिमाम्बुभिर्युताङ्गको मुनिप्रभः।
सरक्तपुष्पपल्लवैः कृताञ्जलिः शिवास्तवै-
र्निकुञ्जभृङ्गगुञ्जनैः प्रगीय वन्दते शिवाम्॥ ३
भवे हि मानसं सरः शिवागमादिव द्रुतं
सुनिर्मलान्तरात्मकं सरोजराजिराजितम्।
शिवार्चने स्वमन्तरं नियोजयेदिव स्वतो
विनाश्रुसंस्रुतौ वरं नियोग एव सत्कृतौ॥ ४

धरेशनन्दिनीश्वरो धरालयं समेति भू-
र्नवप्रभा समुज्ज्वला नवानुरागभाविता ।
नवं वपुर्वितन्वती नवोपहारमाहरेत्
स्ववन्द्य-वन्दना भवे शिवाय हि प्रकल्पते ॥ ५
तदीयभारते धरा-धरेशवाससन्निभे
प्रयाति शारदा ततः स्वमूर्तिभिर्धरादिभि ।
शिवः शिवाविनोदनं तनोति किं दिवानिश
प्रिय प्रियाप्रसाधने रतो हि दृश्यते भुवि ॥ ६
तदीय-शासनादिव स्वचित्ततामसाद् घनाद्
विमुक्तिमेत्य दीप्तिमान् शिवार्चनाय पङ्कजम् ।
विकासयन् जगद्धितं न्यसेत् करं दिवाकरो
न हि क्वचिच्छिवाशयः शिवाशयेऽवसीदति ॥ ७
यदिच्छया भ्रमन्त्यहो सुमेरुपर्वतादधः-
स्थिता ग्रहा सविग्रहा निदेशमाश्रिता इव ।
सदा फलं प्रकल्पित शुभाशुभ जगज्जने
शिवं करोतु शङ्करी विभातु भारते हि सा ॥ ८
सुरक्षितुं दिशो दश प्रसार्य्य या भुजान् दश
स्वधर्मरक्षणे सता विनाशने च दुष्कृताम् ।
स्वमायया शरीरिणी भवेद् भवे निराकृतिः
शिवं करोतु शङ्करी विभातु भारते हि सा ॥ ९
विश्वव्याप्ते ! तव हि विभुता-स्ववंता तीर्थयानै-
र्ध्यानाह्वानैरवयवकृतिर्या च ते मूर्तिहीने !
स्तुत्याऽवाच्ये ! वचनविषया या त्वमाकल्पसे च
क्षन्तव्यं तद् जननि ! शुभदे दोषजालं कृतं मे ॥ १०
आयाहि त्वं भगवति ! शिवे ! ब्रह्मविष्ण्वादिशक्ते !
गर्भाज्जन्तो वह्निरूपनते पालिके ! स्तन्यदुग्धा ।

किंवा देयं भुवनमयि ! ते नास्ति किञ्चिन्मम स्व
कामादिर्मे वलिरुपहृतो गृह्यता यनुहन्धि । ११
दुर्गे ! दुर्गे त्वमसि शरण मोहमायाजडानाम्
एह्येहि त्व शुभमयि ! सुतस्वागतानन्दगोते ।
सान्द्रानन्द वितर कुशल भारते तापदग्धे
भूयाच्छान्तिस्तव शिवपदे शाश्वती भक्तिरस्व ॥ १२
कामगर्वखर्वकारि-भालवह्निहेतुके !
पापतापशान्तिकारि मुक्तिवारिदायिके ।
शक्तिभक्तिरिक्तिहीनपापतापतापिते
मातरेहि शर्म देहि कर्महीनभारते ॥ १३

---

# भक्तिसिद्धान्तनिम्नगा

[ निबन्धकः—श्रीप्रसन्नकुमारकाव्यतीर्थकाव्यरत्न ]

अथ　देवतोपास्ति-समाकर्णन संजातामर्षः　कश्चिद्वैष्णवविशेषः साटोप समुत्थाय वक्तुमारेभे—

गो-गोपशिशु-गोपीभि क्रीडन्त गोकुले सदा ।
गोपाल त्रिगुणातीत गोवर्धनधर भजे ॥ १ ॥

वृन्द वृन्दारकाणामविरतमखिल यस्य पादारविन्द
द्वन्द सवन्द्य विन्दत्यभिमतफलमानन्दमुच्चैरमन्दम् ।
गोविन्द मन्दबुद्धिः कलयति मनुजस्त सम योऽन्यदेवै-
र्मोहान्धः सिन्धु-मन्धूयति स खलु मुधा वन्ध्यनिर्बन्धवन्ध. ॥२॥

किञ्च । दृगग्निना दग्धझषध्वजोऽयं वृषध्वजो यं जनपूजितोऽपि ।
भजत्यजस्र किमु तस्य साम्यं व्रजन्ति कृष्णस्य कदाचिदन्ये ॥३॥

यद्यप्युपास्ति-विधिरस्ति हरीतरेषां
शास्त्रे क्वचित् सुमनसां न स मोक्षहेतुः ।
धर्मार्थं कामफलकामिभिरेव शश्वत्
संसारिभिस्तु समुरीक्रियते मनुष्यैः ॥४॥

तथाहि, विघ्नविहन्तुमनोभिर्विघ्नराजः, आरोग्यमभीप्सुभिः स्वर्वैद्ययोर्जनको विकर्तनः, जिज्ञासुभिः सर्वज्ञः शिवः, भूतिकामैरम्बिका चोपास्यते । किञ्च विद्यार्थिनः सरस्वतीं, श्रीकामा लक्ष्मीं पुत्रकाङ्क्षिणः कार्तिकेयं, सुवृष्टिकामा इन्द्रं, वित्तं कामयमानाश्च यक्षेशमपि यजन्ते । ज्ञानवैराग्यसम्पन्नास्तु मुक्तिकामाः श्रीकृष्णमेवोपासते । ततोऽन्येषां मुक्तिप्रदाने सामर्थ्याभावात् । सकामैः संसारिभिरप्युपासितो भगवान् श्रीकृष्णः उक्तानि सर्वाण्यभीप्सितानि लीलयैव वितरति भक्तेभ्यः ।

परात्परेऽच्युते भक्तिः परा यस्यास्त्यहो ततः ।
पराजितान्यनिष्टानि पलायन्ते महान्त्यपि ॥५॥

अतश्च । सदागमप्रोक्तविधानमाश्रिताः
सदाशया मङ्क्षु मुमुक्षवो जनाः ।
सदारपुत्रा भजतैकमेव तं
सदा मुकुन्दं ननु भक्तवत्सलम् ॥ ६ ॥

नृसिंहादयोऽन्ये कलांशावतारा
हरेर्यस्य यच्छन्ति भक्तेभ्यभीष्टम् ।
सुभक्त्या समाराधितः किं न दद्यात्
स्वयं सर्वगीर्वाणवर्गार्चिताङ्घ्रिः ॥ ७ ॥

अतस्तान् समस्तान् विहायाशु कृष्णं
भजन्तो लभन्ते प्रशान्तिं महान्तः ।
वगाह्य ह्रदे स्नातुकामा हि कुम्भैः
सुसम्भृत्य नाम्भः सिसिञ्चन्ति गात्रम् ॥ ८ ॥

इत्येवं भाषितमसहमानेन स्वोपासितदैवतावमाननं मन्यमानेन दंदह्यमानमानसेन नृसिंहोपासकेन सरोषं जगदे—

अरे मुखर न प्रभोर्नरहरेर्महत्त्वं त्वया
ध्रुवं सुविदितं ततो भगवदंशमाख्यासि तम्।
हिरण्यकशिपोर्जगत्त्रयजितोऽप्युरो लीलया
ददार नखरैः खरैः सदरमीडितो यः सुरैः॥ ९॥

रामादीनां हि रावणादिदुष्टविद्रावणे साधनसामग्र्यपेक्षित्वेन कृच्छ्रप्रयासबाहुल्याङ्गीकरणेन च अपूर्णत्वं तावदनुमीयताम्। श्रीमन्महाप्रभुनृसिंहस्य तु तादृशविख्यातिशायिप्रभावदैत्यराजवधे साधननैरपेक्ष्यात् पूर्णत्वं निष्प्रत्यूहमेव। तत् किं जेगीयते शास्त्रैस्तस्यांशावतारत्वमिति। इत्थं क्रमात् परस्परं विवदमानेषु वैष्णवेषु नानापुण्यतीर्थनिषेवणपावितकलेवरः प्रसादितगुरुलब्धवरः श्रीमान् वैष्णवप्रवरः श्रीरामोपासकः प्रचक्रमे वक्तुम्—

हंहो भ्रान्ता भ्रातरो भेदबुद्धिं मविश्राणा भ्रष्टभावाभिभूताः।
स्वेष्टं देव भाषितैर्भङ्गिमद्भिर्भक्तम्मन्या भर्त्सयन्ते भवन्तः॥१०॥

य एव कृष्णः स हि रामचन्द्रः सर्वो नृसिंहप्रभृतिः स एव।
एकः स विष्णुर्भगवान् विभूत्या विभिन्नवद् भाववशाद् विभाति॥११॥

वात्सल्यभावप्रवणेन बालगोपालरूपो समुपास्यते यः।
माधुर्यमुग्धेन बुधेन कृष्णः स सेव्यते नाम सदा किशोरः॥१२॥

कश्चित्तु तं सख्यनिबद्धबुद्धिः पार्थैकबन्धुं पुरुषं महान्तम्।
भजत्यहो तावदवस्थयैव प्रभिन्नमप्येकमभिन्नमूर्त्तिम्॥१३॥

तथाहि—

पटुर्नटो नाट्यनिरीक्षकाणाम् एकोऽपि नैपथ्यभिदावशेन।
बिभर्त्ति रूपं मनसोऽनुकूलं नानाविधं शश्वदपूर्वमेव॥ १४॥

दृष्टाप्यभिज्ञातुमशक्नुवानस्तमेव बालो मनुते ततोऽन्यम्।
मनं प्रवीणस्तु नटं गृहीत-वेशान्तरं तत्त्वत एव वेत्ति॥ १५॥

तथैव भक्तान् समनुग्रहीतुं विभिन्नभावान् भगवान् प्रसन्नः ।
रूपाण्यनेकान्यपि लीलयैव दधात्यभोक्ता हरिरेक एव ॥१६॥
तत्त्वानभिज्ञो बत मूर्त्तिभेदादवैतु मोहाय विभुं विभिन्नम् ।
याथार्थ्यवित्तु प्रकटीकृतात्मरूपान्तरं पश्यति कृष्णमेकम् ॥१७॥

एवमेव परमात्मा बाल्याद्यवस्थाभेदमिव विग्रहभेदमप्यङ्गीकृत्या-नुगृह्णाति भिन्नरुचीन् भक्तानिति । तथाहि—

तेजः प्रचण्डं बहुमन्यते यः प्रभोस्तदीया नृहरिस्वरूपे ।
दास्यानुबन्धिन्यपवर्गदात्री प्रजायते सम्प्रति तत्र भक्तिः ॥१८॥
वरं तु कामं सदय प्रकृत्या रामं प्रभुं कामदकान्तमूर्तिम् ।
भृत्यत्वमुद्भृत्य भजामहे तं नारायणं भक्तमनोऽभिरामम् ॥१९॥
रामनाम गुणधाम कामहृद् वामदेवहृदयाधिदैवतम् ।
सर्वकामदमघौघनाशनं कस्य नाम मनसे न रोचते ॥२०॥
किञ्च । विघ्नराजमरुणं पिनाकिनं पार्वतीमपि तथेतरान् सुरान् ।
मन्महेऽवहितचेतसो वयं श्रीहरेर्भगवतोऽपरास्तनूः ॥२१॥

अत एवैषामप्यन्यतमम् अवमन्यमानो मानवो भगवन्तं विष्णुमेवा-वमन्यत एव । तस्मात् वयं तान् सर्वान् यथोपयोगमर्चयाम' ।

चित्तमत्तमधुलिट् तथापि नो जातु दाशरथिपादपङ्कजात् ।
नेतरत्र खलु कुत्रचिद्रतिं कर्तुमर्हति निसर्गतत्परः ॥२२॥
एवमेव सुविवेकिना वरे भक्तिमत्यखिलशास्त्रवित्तमे ।
युक्तमुक्तवति तत्र वैष्णवे प्रीतिमापुरतुला सभासदः ॥२३॥

———

# शकटो नौश्च भो ! चित्रम् आरोहति परस्परम्

[ निबन्धकः—के, ए, रामलिङ्गशास्त्री ]

पुरातने हि अनेहसि चातुर्वर्ण्यं च तदितरच्च, यत्र कुत्रापि जिगमिषायां शकटेन नावा वा पादचारेण वा यात्रां कुर्वद् देशाद्देशान्तरम्, ग्रामाद् ग्रामान्तरं च जगाम इति ज्ञायते ; अद्यत्वे तु, द्विचक्रिकया ( Cycle ) वायुरथेन वा ( Motor car ) वैद्युतस्यन्दनेन (Electric Tram) नरवाहनेन वा (Rikshwa) बाष्परथेन वा (Steam-Engine—Railway Train) परिमितेऽपि प्रदेशे धनिकैः निधनैश्च अपरिमितं वित्तं व्ययित्वा दशार्थमपि तत्र तत्र चङ्क्रम्यते इति नेदं तिरोहितं नाम आधुनिकानुभवशालिनाम्। आस्तिकास्तावत् तीर्थयात्रादिकं पुरा पादचारेणैव आचरन्त आसन्, मध्येमार्गं सत्यां बुभुक्षायां स्नान-सन्ध्यावन्दन-देवताराधनादि दैनन्दिनं नित्यकृत्यजातं समाप्यैव ते गुडमिश्रसक्तु-धाना-गव्य-कन्दल नारिकेलादिखादनेन, सति सौकर्ये, स्वयं पाचितेन अन्नेन वा, अन्येन वा येन केनापि सात्त्विकाहारेण शरीरयात्रां निर्वर्तयन्त', प्रभूतं सुकृतं सम्पादयन्त आदर्शभूता अखिलेऽपि भारतवर्षीये इलातले प्रथितानुभावा आत्मानुयायिनश्च सत्पथे चारयन्तः, प्रतिष्ठामप्रतिमामुपलेभिरे इत्येतदातिशयोक्तिकोटिमाटीकेत। यदा खलु बाष्पस्यन्दनादि वैदेशिकं यानसाधनं भारतवर्षं महता समारोहेण प्रसृतप्रायम्, तत आरभ्य, सौकर्यं च असौकर्यं च प्रजानामखिलानामपि समप्रधानभावेन प्रवर्धमानम्,—समीचीनम् आस्माकीनं भारतम्—दुराचारान्धतमसे पातयत्, दारिद्र्यमनुभावयत्, पातिव्रत्यं भञ्जयत्, स्तेयं सकलादरणीयतया उपदिशत्, कलिकालहतकाय करावलम्बं च प्रददत्, महतीं चित्रीयाम् ऐन्द्रजालिकानामपि मन-

स्यादधातीत्युन्नीयते। अस्तु नामैतत्—प्रकृतं प्रवदामः—अस्ति कश्चिदाभाणकः (Proverb)—'शकटो नावम् आरोहति, नौश्च शकटम् ·····' इति। आभाणकेन अमुना किम् असम्भाव्योऽर्थो ऽभिधीयते, उताहो सम्भाव्यः? न कदाप्यसम्भाव्यः, सम्भवार्हं एव खलु सकल आचारो व्यवहारगोचरतामापद्यते, न असम्भवपराहतः। उच्यता तर्हि, आभाणकस्य अभिधित्सित आशयविशेषः इति चेत्— अवधीयताम् अत्र भवद्भिः संस्कृतसाहित्यसभासद्भिः प्रियपाठकपरिवृढैः, तद्यथा—यत्र किल सङ्क्रम (Bridge) रहिते देशे नगरे वा भारपरिपूर्णेन शकटेन नदी कुलङ्कषा अवतरणानर्हा तरणीया, तत्र द्रोणीहितयम् आदौ सङ्घटय्य, शकटाद् वस्तुजातं भूतले अवरोप्य, अनडुद्द्वययुतम् अन' नौद्वयेऽवस्थाप्य प्रवाहरयेणैव गुणवृक्षकसाहाय्येन तीरदेशमानयन्ति नाविकाः—तदेतदेव 'शकटो नावम् आरोहति' इत्युच्यते। नौश्च शकटं कुत्र आरोहति? इति प्रश्नस्य उत्तरमधुना निरूप्यते—यदा पाषाणखण्डादिसङ्घट्टनेन सच्छिद्रा नौ' जलप्लवनानर्हा, अथवा नूतना नौः कर्मकरैर्निरमीयत, तदा सैषा शकटमधिरोप्य नाविककुटीरं वा नदीतीरं वा आनाय्यते; तदेतदेव 'नौश्च शकटम् आरोहति' इतीर्यते। स्यादेतत्—किमयं यः कोऽपि नियमः प्राचीन'—शकटाधिरूढयैव नावा नाविकगेहं वा नदीकूलं वा गन्तव्यमिति? इति चेत्, ब्रूमहे—कर्मकरैः स्कन्धवाहनै नापि नौर्यत्र कुत्रापि प्रापणीयेव; अथापि, आभाणकस्तु नौकायाः शकटाधिरोहणद्वारा देशान्तरप्रापणमेव अवबोधयतीति, तदनुगुण एकार्थोऽस्माभिराद्रियतेऽत्र।

आभाणकोऽयम् आनुभविकेन केन वा महानुभावेन, कुत्र वा प्रबन्धे उदाहारि? को वाऽनेन प्रकृते प्रतिपिपादयिषितो विशेषः? गैर्वाणाश्च अस्य च कौलीनस्य (Proverb) कः सम्बन्धः? इत्यादिकं परमप्रकृतमिदानीं निरूप्यते। लोकवादोऽयम् अशेषधर्मसङ्ग-

पेण मूर्तेन श्रीमदादिशेषेण श्रीमत्पतञ्जलिनामधेयभाजनेन, प्रजावाङ्मनःकायसङ्कलितसकलकलुषशोषणनिपुण प्रबन्धत्रयनिर्माणप्रकटितमहाकारुणिकत्वेन, महाभाष्ये महनीये प्रश्नोत्तराभाषणरूपेण बहोः कालात् पूर्वं प्राकाशि इत्यत एव अस्य अतिप्राचीनता, गीर्वाणवाण्याः (पुरा) सर्वव्यावहारिकता, महाधर्मस्वरूपबोधकता, अत्याश्चर्यजनकता, दुरवगाहतात्पर्यवत्ता च अन्यच्च अभ्यूहनीय आशय-विशेष इति संसूच्यतेऽस्माभिः स्वाभ्यूहनया।

आभाणकेन ह्येतेन को नु धर्मं प्रभण्यते ?
परस्परोपकारो हि फलं भूरि प्रयच्छति।
शकटो नावमारोहेन्नौश्चेह शकटं यथा॥

अचेतनैः अनो-नावादिभिरपि चेतनचोदितैः सम्पदि विपदि च अपरिमेयं साहाय्यम् आचर्यते चेत्, चेतनैः करचरणादिनैपुण्यशालिभिः स्वबान्धवानामगारेषु प्रचलति शुभे च अशुभे च कर्मणि किं कर्तव्यम् ? कियद्वा साहायकम् आधेयम् ? कथं नु नाम बन्धुता मङ्गलकाले सभाजनीया, विषादवेलायाम् आश्वासनीया ? इत्याद्या आर्यधर्मपरिपाटी करतलामलकवत् कैमुतिकनीत्या सत्याप्यते ; 'परोपकारः पुण्याय पापाय परपीडनम्' इति न्यायश्च अर्थाप्यते ; न्याये एतस्मिन् उपकारम् अपेक्षमाणः उपकारपरः—उपकृत्यासन्निमानेव 'पर'-शब्देन निगद्यते, न तु परः अन्यः, तस्य उपकार इत्यर्थः। अयं निजः परो वेति गणना लघुचेतसां किल ! महनीयमनस्कानां तु स्वीयः परकीय इति पृथक्करणं न कदापि मानससरसिजमास्कन्दति, यस्य यस्य उपकृतिः यदा अवश्यकर्तव्या, तदैते अविलम्बितमेव एनाम् आतन्वन्ति विनैव भेदबुद्धिकालुष्यम् ; 'परपीडन' पदेन च, यस्य कस्यापि अनागसो हिंसनं च, उपकारकाङ्क्षमाणस्य तदकरणं च निगद्यते ; तदेतद्द्वितयं पापापादकमेवेति वयमाशंसमहे। अपि च, प्राचीनस्य—

दन्तस्य निष्कोषणकेन नित्यं कर्णस्य कण्डूयनकेन वापि ।
तृणेन कार्यं भवतीश्वराणां किमङ्ग ! वाग्हस्तवता नरेण ? ॥

इत्यस्य पूर्वार्धावसानराजमानः अपिशब्दः, उत्तरार्धादिमपदेन 'तृणेन' संयोजनीयः, तथा च तृणेनापि चैतन्यलेशशून्येनापि, ( भूतलादुत्पाटितं शुष्कं तृणमत्र आदीयते, यतो धीमान् श्रीमांश्च श्रीजगदीशचन्द्रवसु महाभागः, स्थावरजङ्गमात्मकस्य प्रपञ्चस्य सर्वस्य सर्वामवस्थाधीरणीं यन्त्रसाहाय्येन अमेरिकावासिभ्यश्च अन्येभ्यश्च सन्वच्चं प्रख्यापयामास च प्रख्यापयति च ) दशन-श्रवणमलोत्सारण-कृत्यं निर्वर्त्यते प्रभूणां पामराणां च कृते, तथा सति, व्यवहरण परोपकाराचरणनिपुण-वाणी-पाणि पादादिसम्पन्नेन मानवेन सम्पन्न-विपन्नयोरुपकारकाङ्क्षिणोर्विषये कया रीत्या वर्तितव्यमिति स्वयमेव ऊहनीयमिति नात्र लेखनीं चालयितुं वाञ्छामो वयम् ।

किञ्च, श्रीमत्स्कान्दोपपुराणे श्रीविनायकमाहात्म्येऽपि—

उपकारात् परो धर्मो नान्योऽस्ति जगतीतले ।
परोपकृतये पूर्वं दधीचिर्निधनं गतः ॥
किमर्थं भ्रमते सूर्यो हन्ति दैत्यानजः कुतः ? ।
... ... ... ... ...
सङ्कटे च विवाहार्थे परत्राणे विपत्सु च ॥
वदन्त्यनृतवाक्यानि अपि सत्यव्रता नराः ।
उद्धरन्ति नरव्याघ्र ! ते कुलान्येकविंशतिम् ॥

इत्याद्येन पद्यरत्नेन उपकारमहिमानं निदर्शनेन विशदीकृत्य, घातककरतलपतिता सुमदा नाम राज्ञी काचन विवाहे, प्राणापायात् परित्राणे महासङ्कटादौ च विषये यस्य कस्यापि अनृतस्य वदनम् अभ्यनुजानाति, धर्मग्रन्थतत्त्व च साधु प्रकटयतीति संसूचयामः, एतेन उत्तमफलनिवहावह-विवाहादिविषयकानृतवदनजन्यमेन',

तदितरविषयकासत्यवादोत्पादितदुष्कृतवत् प्रत्यवायजनकं न भवेदिति विभाव्यते। अन्यच्च,—

> अन्विष्यन् हि यमो मर्त्यं निर्दयं बध्नमीत्यतः।
> धर्मसम्बलमेवाऽन्वक् शैशवे सञ्चिनुध्व भोः॥

इति धर्मकथनकरूपदेशानुसारेणापि, शैशवे यौवने, वार्धके च वर्तमानैर्मानवैः सर्वदा यथाशक्ति नक्तन्दिवं धर्मपाथेयं सम्पादनीयमिति श्रीमद्रुद्रपुराणादिपरिशीलनेन निश्चीयते, ततश्च, परोपकारपरदिव्यधर्मसम्बलवलमेव शक्ताशक्तभुजादिबलाद् बलीयः इति निश्चिन्वानाश्च वयम्—परस्परोपकाररचनायां बद्धपरिकरा अप्रतिभटाश्च भूत्वा, नौशकटादिवत् प्रजाहिताधानव्यवसाये यावच्छक्य सर्वात्मना प्रयतमाना मानातीतं श्रेयश्च प्रेयश्च प्राप्नवामेति प्रार्थयामहे महेश्वरम् इति शम्।

---

## योगरहस्यम्

( पूर्ववर्तीऽनुवृत्तम् )

[ निबन्धकः—साधनसमरप्रणेता ]

### वृत्तयः पञ्चतय्यः क्लिष्टाऽक्लिष्टाः॥ ५॥

का नाम वृत्तिः कति कीदृशो चेत्याह—वृत्तय इति। वृत्तिर्वर्तनं विद्यमानता देशकालावच्छिन्नतया प्रतीयमानतेति यावत्। बोधमात्रस्वरूपोऽयमात्मा यदा देशकालावच्छिन्नतया वर्तते तदा स वृत्तिरित्याख्यायते। यदुक्तं चित्तवृत्तिरिति तद् योगजिज्ञासूनामनायासप्रतिपत्तये। चित्तमेव वृत्तिरिति न वृत्तितश्चित्तं भिद्यते। वृत्तिरूपतयानुभातं चिद्वस्तु चित्तमित्युच्यते।

अनाद्याश्चासंख्याता अपि वृत्तयः पञ्चतय्यः, पञ्चधा विभज्यमाना दृश्यन्ते। ताः पुनः क्लिष्टाश्चाक्लिष्टा इति द्विधा। यावदेता विजातीयभेदमावापन्ना समुल्लिसन्त्यो ऽविदुषा, तावद् रजोबाहुल्यात् क्लेशदायकत्वात् क्लेशमूलकत्वाच्च क्लिष्टाः। यदा पुनः श्रुतियुक्त्यनुभवसम्पन्नानामेता स्वगतभेदमात्रावगाहिन्यः प्रकाशन्ते, तदा सत्त्वबाहुल्यादानन्दमयात्मविलासरूपत्वाद् योगहेतुकत्वाच्चाक्लिष्टाः। आसुरी दैवी चेति संज्ञाभेदः।

**प्रमाण-विपर्यय-विकल्प-निद्रा-स्मृतयः ॥ ६ ॥**

पञ्च भेदान् दर्शयति प्रमाणेति। चिन्मात्रोऽयं सर्वभावमहेश्वरः स्वरूपस्थितेरन्यत्रात्मानं बहुधा कुरुते, तथापि श्रेणीविभागेनास्य प्रमाण-विपर्यय-विकल्प निद्रा-स्मृतिरूपाः पञ्च प्रकाशा उपलभ्यन्ते। ते पुनर्ज्ञानेन्द्रियपञ्चकद्वारेण पञ्चधा भेदमापद्यन्ते इति सुष्ठूक्तं वृत्तयः पञ्चतय्य इति। अत एव च पञ्चवक्त्रं महेशं ध्यायन्ति योगिनः।

**प्रत्यक्षानुमानागमाः प्रमाणानि ॥ ७ ॥**

प्रमाणवृत्तिं निरूपयति प्रत्यक्षेति। ज्ञानस्वरूपो द्रष्टा यदा प्रमारूपेण निश्चयज्ञानरूपेणात्मानं प्रकाशयति तदा स प्रमाणवृत्तिरित्याख्यायते। बुद्धिरिति लोकप्रसिद्धं नाम प्रमाणस्य। प्रत्यक्षादयस्त्रयस्तस्य द्रष्टुः प्रमाणरूपेणाविर्भावहेतवः। तत्र प्रत्यक्षं तावदक्षाणामविकलकरणानां विषय-सन्निकर्षजन्यम्। अनुमानं प्रत्यक्षलिङ्गेनाप्रत्यक्षलिङ्गिनिश्चयः। आगमो नामाप्तवचनमिति नयनत्रयं प्रमाणपुरुषस्य।

**विपर्ययो मिथ्याज्ञानमतद्रूपप्रतिष्ठम् ॥ ८ ॥**

प्रमाणं निरूप्य विपर्ययं दर्शयति विपर्यय इति। विपर्ययो मिथ्याज्ञानं, तर्हि शशविषाणादिवदस्तु, नेत्याह अतद्रूपप्रतिष्ठम्। तद्रूपेण प्रतिष्ठा न सन्त्यतोऽतद्रूपप्रतिष्ठं परिणामबाधयोग्यमनिर्वच-

नीयप्रत्यक्षम्। भूतार्थविषयकप्रमाणबाध्यत्वाच्चास्य प्रमाणत्वम्। भ्रान्तिरिति चास्य ख्यातिरिति द्वितीयप्रकाश पुरुषस्य।

**शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः ॥ ९ ॥**

अथ विकल्परूपस्तृतीयः प्रकाशः कथ्यते—शब्देति। शब्दज्ञानमनुपततीति शब्दज्ञानानुपाती, अथच परमार्थतस्तादृशवस्तुशून्यो योऽस्फुटबोधविशेषः स विकल्पः। विविधः कल्पो विकल्पस्तदाख्यो वृत्तिविशेष इत्यर्थः। तद्यथा राहोः शिरश्चैतन्यं पुरुषस्य स्वरूपमित्यादि। वस्तुशून्यत्वेऽपि विकल्पो व्यवहारहेतुतां समायाति। विपर्ययो विशिष्टधर्मिणि धर्मान्तरविशिष्टस्य तादात्म्यावभासः, विकल्पे तु पदजन्यप्रतिपत्तिविषयतामात्रं न तु वस्तुनः सत्तेत्यनयोर्भेदः।

**अभावप्रत्ययालम्बना वृत्तिर्निद्रा ॥ १० ॥**

क्रमप्राप्तां निद्रां निर्दिशति अभावेति। अभावप्रत्ययं सर्वाभावविषयकं प्रत्ययमालम्बते आश्रयत इत्यभावप्रत्ययालम्बना तादृशी या वृत्ति सा निद्रा सुषुप्तिः। स एव पुरुषः "सुषुप्तिकाले सकले विलीने तमोऽभिभूतः सुखरूपमेति" उक्तञ्च "या देवी सर्वभूतेषु निद्रारूपेण संस्थिता" इति। मूर्च्छाऽपि निद्रान्तर्भावः।

---

# श्रीकृष्णचैतन्यचरितम्

( पूर्वतोऽनुवृत्तम् )

## द्वितीयः परिच्छेदः

[ निबन्धकः—भक्तिसागरः श्रीकालीहरदासवसुविद्याविनोदः ]

शकस्य त्रयोदशशताब्द्याः प्रथमभागे श्रीहट्टस्य "लाउड" इत्यञ्चले दिव्यसिंहनामा एकः स्वाधीनो नृपतिरासीत्। तस्य मन्त्री भरद्वाजगोत्रीयो ब्राह्मणः कुबेरपण्डितः। कुबेरो मयूरभट्टवंशजातस्य नोलमेघस्य सुलक्षणसम्पन्नां लाभानाम्नी कन्यामुपयेमे। तस्या गर्भात् षट् दुहितरः एकैकशो जनित्वा जनित्वा मम्रुः। तस्याः सप्तमगर्भजातः पुत्रः कमलाक्षः शान्तिपुरे उषित्वा विद्यामुपार्ज्जयत्। "हरिणा न द्वैत" इति अद्वैतो महाविष्णोरवतारः। भक्तिशासनात् स आचार्य्यः।

कुबेरनन्दनः श्रीमदद्वैताचार्य्यो वेदभागवतादिषु शास्त्रेषु अगाधपाण्डित्यं लब्ध्वा "वेदपञ्चानन" इत्युपाहितोऽभूत्। श्रीनवद्वीपसारदापीठे विद्यापीठं स्थापयित्वा अध्यापनामारेभे च। मिथिलायाः परं तदानीं श्रीनवद्वीपः सरस्वत्याः पीठो बभूव। विद्यागौरवात् पण्डितसमाजः पण्डितम्मन्यतया ज्ञानान्धतया च भक्तिमुपेक्ष्य केवल नीरसशास्त्रचर्च्चाया प्रमत्तोऽभूत्।

रात्रौ जागरित्वा मङ्गलचण्डीगीतश्रवणं तेषां धर्मश्च कर्म च। सकामाः सर्वे केवलं षष्ठीं विषहरोञ्च पूजयन्ति। परब्रह्मण उपासनात्मकं ध्यानधारणादिकं सम्यग्विलुप्तं देशान्निर्वासितमिव। धनधान्यार्थिनः सर्वे महादम्भेन मद्यमांसोपहारेण देवता अर्च्चयन्ति।

श्रीमदद्वैतस्तस्य विद्यामठे भक्तिचर्च्चां करोति। वैष्णवगोष्ठी काचन तेन कल्पिता सुष्ठु प्रतिष्ठापिता। श्रीवास-श्रीपति मुरारिगुप्त-

मुकुन्ददत्तप्रभृतयः सर्वे वैष्णवा अस्याः ससदः पारिषदा बभूवुः। पाण्डित्याभिमानिनो नागरिकास्तानुत्पीडयितुमारेभिरे। पीडितानां वैष्णवानां दुःखमसहमानो धर्म्महीनानां मलिनकलिजीवानां घोरदुर्गतिदर्शनेन व्यथितचित्तो दयार्द्रो वैष्णवाध्यक्षः श्रीअद्वैतः "हुङ्काररवं कृत्वा गोलोकादहं श्रीभगवन्तमवतारयिष्यामि। स निश्चयमवतीर्य्य कलिकलुषदुष्टं क्लिष्टं जीवसङ्घमवलीलया परममङ्गलहरिनामदानलीलया उद्धरिष्यती"ति उच्चमुच्चार्य्य सर्व्वानेवमाश्वास्य च शान्तिपुरं प्रस्थित। एवमुक्तवति अद्वैते वैष्णवाः सर्वे कथं कथमपि कालं नयन्ति।

एवम्भूयसि काले गच्छति शचीदेवी दशमगर्भं प्राप। दशमे मासि श्रीमदद्वैतः शान्तिपुरादागत्य तस्य गर्भं परीक्ष्य शचीं प्रदक्षिणीकृत्य गर्भं प्रणम्य च शान्तिपुरं प्रत्यागच्छत्। त्रयोदशमासान् गर्भवासं कृत्वा प्रभुः श्रीचैतन्यचन्द्रो नवद्वीपधाम्नि सर्वदिक्षु आनन्दकिरणं विकीर्य्याविरासीत्। अद्वैतस्य हुङ्कारात् श्रीङ्काराच्च फुल्लकमलान्मधु इव परं ब्रह्म चैतन्यरूपं धृत्वा समजनि।

श्रीचैतन्यदेवस्य विद्याशक्तिः प्रतिभा वा कीदृशी ? तत्प्रमाणयितुं रघुनाथशिरोमणेः कथा तावदुल्लेखयोग्या। तदानीं केवलं मिथिलायां न्यायस्य चतुष्पाठी आसीत्, नान्यत्र। ग्रन्थस्यासद्भाव एतस्य हि कारणम्। देशान्तरात् छात्रा न्यायमध्येतुं मिथिलां गच्छन्ति स्म, न्यायशास्त्रं पठन्ति शिक्षन्ते स्म च। तत्रत्या अध्यापका न्यायग्रन्थं केभ्योऽपि न ददुः। वासुदेवसार्व्वभौमो नवद्वीपात् तत्र गत्वा न्यायशास्त्रं सम्यगधीत्य तत् कण्ठस्थं कृत्वा च स्वदेशं प्रत्यागच्छत्। प्रत्यागत्य शान्तिपुरे प्रथमं स न्यायस्य चतुष्पाठीं स्थापयामास, तच्छात्रानध्यापयामास च। तस्य प्रधानच्छात्रौ चैतन्य-रघुनाथौ। रघुनाथो "दीधितिः" इति न्यायग्रन्थमरचयत्। एष न्यायशास्त्रस्य श्रेष्ठो ग्रन्थो गण्यते। श्रीचैतन्यश्च न्यायस्य टीकामेकामलिखत्। श्रीचैतन्यकृतां टीकां वाचितां श्रुत्वा रघुनाथो म्लानमुखो मत्कृतो ग्रन्थः

लष्टोकायां विराजमानायां देवि नाहतो भविष्यतीति श्रीचैतन्यं विज्ञाप्य नितरां दुर्मनायते स्म। सहाध्यायिनो रघुनाथस्य ईदृशं कातरवाक्यं श्रुत्वा श्रीशचीनन्दनो दयार्द्रः परार्थे आत्मनोऽत्युत्तमं ग्रन्थं क्षणादेव गङ्गाजले विससर्ज। बालकोऽपि "निमाइ"पण्डितः पण्डितानां ससदि विडालेषु सिंहसदृश । स सदैव मुरारिगुप्तेन कौतुकपरिहासादिकं करोति स्म। शास्त्रजिज्ञासाभयाद् गुप्तस्तस्मात्तुक्कायते। श्रीचैतन्यस्य त दृष्ट्वैव तुमुलं कलहं स्थापयति स्म। मुरारिगुप्त एकदा भगवत्तत्त्वमवज्ञाय ब्रह्म स्थापयितुमचेष्टत। अत परं यावन्मुरारिः स्वगृहे अन्नं भोक्तुमुपविवेश तावत् श्रीचैतन्यदेवस्तत्र गत्वा तस्यान्नपात्रे मूत्रत्याग चकार। मुरारिः प्रथमं क्रुद्धोऽभवत् अत. परं 'एषोऽन्य कोऽपि न निमाइपण्डित' इति विचिन्त्य शान्तो बभूव। तदा निमाइपण्डितेन व्याहृतम्—मुरारे तव विरक्तेर्हेतुर्नास्ति यत अन्नं ब्रह्म मूत्रं ब्रह्म। मूत्रान्ने तुल्ये वस्तुनी इति।

श्रीगौराङ्गस्य पाण्डित्यगर्व्वं दाम्भिकताम् औद्धत्यं चापल्यञ्च लक्षीकृत्य श्रीवासादिभिः सर्व्वैः वैष्णवैर्दुःखितैरभाणि—"हे ब्राह्मणकुमार, तव पाण्डित्यं जगति दुर्लभम्। इयती विद्यावत्ता भगवद्भक्तिरसशून्यत्वात् सर्व्वथैव नीरसा निष्फला च। त्वया सदृशः पण्डितो यदि भक्तियोगं लभेत मणिकाञ्चनयोगवत् अस्या अपारविद्याया उज्ज्वलसाफल्य चमत्कारित्वञ्च भवेताम्"।

वैष्णवानां स्वरूपकथां श्रुत्वा तेषां चित्तक्षोभञ्च परिज्ञाय श्रीगौराङ्गो भङ्ग्या श्लेषपूर्णं वाक्यमुक्तवान्—"भो वैष्णवा अहमेवंविधो वैष्णवो भविष्यामि यमजभवावपि आगत्य भूमौ लुठित्वा सेवाभिमानं याचिष्येते। दार्व्योक्तमेतद्वचनमाकर्ण्य वैष्णवास्ते पण्डितस्य बालचापल्यमेव केवलं न तु ततोऽधिकं मन्यन्ते स्म। तद्वचनस्य ते मर्मोपलब्धुं न शेकुः। भूयसा कालेन श्रीचैतन्यस्य वाक्यं प्रखरमपि अमृतवृष्टिप्रतिमं ननु सत्यमिति परतः प्रतीयते स्म।

श्रीगौराङ्गः प्रत्यह प्रातर्गङ्गायां स्नात्वा गृहमागत्य विष्णुमन्दिरे विष्णु पूजयित्वा तुलसोस्नपनं कृत्वा च प्रसादान्नं भुङ्क्ते स्म। माता स्वयं भृत्य ईशानश्च गृहकर्म्म सम्पादयामासतुः। एव गच्छति काले यथाकालं गृहे तनयानुरूपा बधूमानेतुं मातुरिच्छा सञ्जाता। नवद्वीपे वल्लभभट्टाचार्य्यस्य परमरूपगुणवती सुशोलैका कन्यासीत्। तया सह श्रीगौराङ्गदेवस्य शुभपरिणयस्तस्य षोडशवर्षे सम्पादितः। लक्ष्मीतुल्या नववधूः श्वोगृहसुज्ज्वलीकृत्य श्वश्वाः प्रत्यह सर्वविधसेवासाधनरता परमसुखितास्त।

पुरुषोत्तमसञ्जयस्तदा श्रीनवद्वीपे गण्यमान्यमनुष्यः। तस्य वहिरङ्गने श्रीचैतन्यदेवः अध्यापना करोति। तस्यालौकिकी अध्यापना विपुलार्थम् आवहति। अतस्तस्य गृह सुखसम्पद्भ्यां पूर्णम्। यस्य गृहे माता देवद्विजेषु भक्तिमती सर्व्वप्राणिषु स्नेहवती, वनिता च साध्वी रूपवती पतिसेवापरायणा, तस्य गृह मन्दाकिनीसलिलस्निग्धनन्दनतुल्यं सुखमयमेव।

अथैकदा श्रीचैतन्यो युगपत् विद्यादानार्थं पैतृकभूमिदर्शनार्थञ्च पूर्वदेशाभिमुख गन्तु मनश्चक्रे। बहुतुनयेन मातुराज्ञा गृहीत्वा पत्नीं लक्ष्मीप्रियाञ्च अमृतस्यन्दिवचनेन तोषयित्वा सर्वानपरान् प्रीत्या सम्भाष्य शुभ-यात्रामकरोत्। पथि पद्मा-यमुनासङ्गमे कृतस्नानो विद्यादानेन हरिनामश्रवणेन च विक्रमपुर धन्य कृत्वा, ब्रह्मपुत्रतीरस्थं लाङ्गलबन्दतीर्थं पद्मभोवहञ्च स्वपादस्पर्शेन हरिनाम-रसप्रवाहेण च तीर्थीकृत्य, तथैव पूर्वदेशं पवित्वा प्रपितामहनिवासं वरगङ्गामाससाद। पितामहो श्रोभादेवो परमरूपवन्तं देवभावसम्पन्नं पौत्रं प्राप्य आनन्दविह्वलाभूत्। पितामह उपेन्द्रमिश्र आनन्दप्राचुर्य्यात् पौत्रस्य पुरतः प्राणांस्त्यक्त्वा स्वर्लोक गत.। पितामहस्य अन्त्येष्टिक्रिया सम्पाद्य श्रीचैतन्यः स्वदेश प्रत्यागच्छत्। पथि बहुसंख्यकाश्छात्रास्त परिवेष्ट्य तस्मात्नानाशास्त्राण्यधिजगिरे।

पूर्वदेशभ्रमणकाले तपनमिश्रनामा कोऽपि ब्राह्मण साध्य-साधन-विषये जातं सन्देहं निराकर्त्तुमसमर्थ एकदा रजन्या स्वप्ने अपूर्वमानुषमेकं तमुपदिशन्तमपश्यत्। परेद्युस्तपन स्वप्नदृष्टः पुरुषः श्रीचैतन्याख्यः कोऽपीति निश्चित्य तत्समीपमुपगम्य उपदेशं प्रार्थयामास। श्रीचैतन्यदेवस्तस्य दयाञ्चक्रे। श्रीभगवतः परममधुरनामसङ्कीर्त्तनमेव कलौ एको धर्म्म इत्युपदिश्य तपनस्य वाराणसीगमनम् आदिदेश। तपनः परमादेश शिरसा धृत्वा तथैवाकरोत्।

श्रीचैतन्ये पूर्वदेशं गत्वा विलम्बमाने तस्य विरहसन्तापं सोढुमक्षमा देवी लक्ष्मीप्रिया भृशमाकुला भोजनादिकमपि जहौ। तद्विरहविषं नाशयितुमनुकूलो विषधरः कश्चित्तामदशत्। देवी विष्णुलोक प्रस्थिता। देवी शचीमाता स्वर्णप्रतिमया स्नुषया विनाकृता शून्यगृहे दूयमाना "हा हतास्मीति" रवेण रोदनपरा कथं कथमपि जीवनं दुर्विषहम् उवाह। गुणसागरः पुत्रोऽपि प्रवासं गत इति तस्य चन्द्रवदनादर्शनजनितया चिन्तया द्विगुणीकृतेन शोकेनाभिभूता माता सततं दीर्घमुष्णञ्च निश्वसिति स्म। शून्यमिव तस्याः प्रत्यभात् जगत्।

प्रणयभाजनस्य कस्मिन्नपि अत्याहिते सघटिते तदशुभं प्रणयिजनस्य मर्म्मणि तद्वार्त्तां वादयति, तस्य चित्तं कम्पयति—सन्देहदोलायामारोप्य तत्रान्दोलयति। लक्ष्मीप्रियायाः निर्य्याणं प्रेम्णो मधुरयोगसूत्रेण श्रीचैतन्येन ज्ञातम्। स सहसैव चित्तवैकल्यं प्राप। स्वभवने किमपि दुर्निमित्तं घटते स्मेति विभाव्य सत्वर सगृहं प्रतस्थे। श्रीचैतन्यो गृहमासाद्य पत्नीमुपरता ज्ञात्वा घोरमपि जायाशोकं संगोप्य मातुः प्रबोधार्थं मधुरमाललाप। पुत्रस्य अन्तर्गतां शुचमुपलभ्य बुद्धिमती माता तस्या उपशान्तये तस्य मलिनवदनपद्मोपरि स्नेहामृतशीकरान् ववर्ष।

इत्थमेव कियति काले गच्छति श्रीगौरसुन्दर पुनः सनातन-

मिश्रस्य देवीसदृश कन्यारत्न परिणिनाय। नवद्वीपचन्द्रस्य कन्दर्पदर्पहरं रूप विशेषतो विद्याप्रतिभयो' स्फुरद्दीतिसुधया मधुरीकृतं वदनकमलं दृष्ट्वा नरा नार्य्यश्च विमुह्यन्ति स्म। दिग्विजयिन केशवं विजित्य सर्वेषा पण्डितानां विस्मयमुत्पाद्य लब्धप्रतिष्ठः स नवद्वीपेन्दु विद्वत्ससदि प्राधान्यं लेभे। ऊनविंशवर्षीयस्य युवकस्य एतावदपूर्वप्रभावेण प्रणोदिता सर्वे नदीयावासिनो विद्याकेलिकुञ्जविनोदे श्रीगौरेन्दौ महापुरुषाविर्भावं मन्यन्ते।

तस्य मन्दिरमागत्य पण्डिता' सर्वे तम् अभिवादयन्ति गुणांश्च गायन्ति स्म। तस्य चतुष्पाठो सहस्रेण छात्रैर्व्यराजत। एतच्चमत्करोति न किम् ? विश्वविस्मापकः प्राग्दिशि आविर्भूत अध्यापक केवलमेको नवयुवकः। श्रीविष्णुप्रियायाः सङ्गसुखमुपभुञ्जानः स शचोनन्दनो गृहधर्म्मनिष्ठो मातुरादर्शपुत्त्रः पत्न्याश्च आदर्शस्वामी देवद्विजभक्तोऽतिथिसेवापरायणः कदापि शास्त्रशासनं लोकाचारपद्धतिञ्च नात्यक्रामत्। तस्य विद्यागुणलब्धं यशो दिग्देशं सुगन्धयितु' वितनुते स्म सौरभम्।

उपरतमात्मानमुद्दिश्य गयाधाम्नि पिण्डदान गृहस्थस्य धर्म्मः। पितृकार्य्यं कर्त्तुमेकदा श्रीगौरचन्द्र' गयाधामाभिमुखं कतिपयैर्भक्तैश्चन्द्रशेखरेण च सह चलित। पथि मन्दारगिरिं प्राप्य तत्र मधुसूदनविग्रहं सुखमीक्षित्वा श्रीचैतन्यदेवः प्रेमविह्वलोऽभूत्। अथ चीरनाम्न्यां नद्यां स्नात्वा तेन स्वदेह कामं ज्वर आनीतः। श्रीगौरचन्द्रं सहसा ज्वराक्रान्तं दृष्ट्वा शिष्यगण उद्विग्नोऽभूत्। मधुसूदनसेवका न सदाचारा इति प्रत्यचीकृत्य शिष्याः सर्वे ब्राह्मणेषु तेषु वीतश्रद्धा अभवन्। श्रीचैतन्यप्रभुस्तेषां ब्राह्मणाना मर्य्यादारक्षणार्थं स्वदेहं ज्वरमानीय तेषामेकस्य चरणामृत गृहीत्वा पपौ। ज्वरश्च उपशम गतः। ब्राह्मणपादोदकस्य महिमानं प्रचारयितु' ब्राह्मणे विश्वासं जनयितुञ्च श्रीगौराङ्गेणैदृशी लीलाभङ्गी आचरिता। तामव-

लोकाः ते सर्वेऽनुचरा विस्मिता आसन्। धर्म्मप्रतिष्ठापकस्य द्विज-वल्लभस्य अद्भुतकर्मणो गौरहरेः सर्वैव लीला विस्मापिका। तत्-प्रमाणपरम्परा अत ऊर्द्धं लिखितव्या।

गयामासाद्य प्रभुः श्रीगौराङ्गो विष्णुपादपद्मदर्शनेन विप्रगण-प्रमुखात् तत्प्रभावश्रवणेन च परमप्रेमाविष्टोऽश्रुधारा ववर्ष। तस्य श्रीमदङ्गम् अष्टसात्त्विकभावोद्गमजन्यप्रचुरानन्दपुलककुसुमविभूषितं बभूव। दैवाद्धन्ति तदा श्रीमदीश्वरपुरी समागतः। श्रीमत्पुरी-गोस्वामिनमुपेत्य प्रभुः श्रीचैतन्यः कृताञ्जलिरवदत्—भो गयायात्रा मम सफला। तीर्थे दत्तपिण्डानां पितृगणस्तरति। सकृद् भवतः श्रीचरणपद्मदर्शनात् कोटिः पितृपुरुषास्तरन्ति। सम्प्रति कृष्णपाद-पद्ममधुरसं सकृपं पाययित्वा दीनाधममिमं मा घोरदुष्पारसंसार-सागरादुद्धरत्विति। भक्तिविनम्रस्य अश्रुगङ्गास्नातस्य तस्य दैन्य-करुणवचनेन स्फुटत्प्रेमप्रभावेण च मुग्धेन तेन पुरीगोस्वामिना परमप्रेम्णालिङ्गितः सुदीक्षितश्च स प्रभुः पूर्वरागलसोऽनिच्छन्नपि गृहं प्रत्यागतः। गौरेन्दुरिदानीमिष्टमन्त्रं जप्त्वा स्वरूपं ध्यात्वा च क्षणं माद्यति स्म, क्षणं साश्रु रोदिति स्म, क्षणं भूमौ अलुठच्च। एवं साधु-सङ्गमाहात्म्यं प्रकटीचकार धाम्नो महिम्नो घोषयामास च।

———

(क्रमशः)

## रजनी।

(पूर्वतोऽनुवृत्ता)

[ निबन्धिका—श्रीमती रेणुदेवी ]

कथितञ्च मया नान्धजनस्य सुखं वा दुःखं वा युष्माकं बोधविषयः। कुन्द! मातः, स नवनीतसुकुमारः पुष्पगन्धमयो वीणाध्वनिमनो-हरः स्पर्शः। यो हि सनयनस्तेन कथं वीणाध्वनिवत् स्पर्शो बुध्येत? मय्येव तिष्ठता मामकं सुखं दुःखञ्च। यदा स स्पर्शः मनसि समुदेति

तदा कियद्दा वीणाध्वनिवत् कर्णयोरश्रौषम्, तत्त्वया विलोलकटाच-कुशलिनि ! कथमवगम्यते। अथ कियन्तं कालं निपुणतरमवलोक्य शचीन्द्रः समुवाच नायं रोगो भेषज्साध्यः। चिन्तयानया किं वञ्चितास्मि निद्रया ? लवङ्गलतयाभिहितं "मास्तु नीरोगता ; धनलोभेन किं कश्चिदिमां परिणेष्यति ?" शचीन्द्रः प्रत्युवाच "कथम् ? किमस्याः परिणयो न जातः ?" लवङ्गलता भूयः प्रोवाच" "न हि, किं धनलुब्धः कश्चित् परिणेष्यति ?" स प्रत्युवाच, "किं त्वं धनं दास्यसि ?" क्रुद्धया तया प्रत्यभिहित "न दृष्टो मया त्वादृशः कोऽपि युवा , किं न वर्त्तते मे धन धारयितुं स्थानम् ? स्त्रिया मया सर्व्वं न ज्ञायत इति पृच्छ्यते विवाहो भवति न वेति।" विदितविमाढहृदयः शचीन्द्रः सुतरां विहस्य प्रत्युवाच "तस्मात', सञ्चीयतां त्वया धनं, मया तु सम्बन्धो विधीयते।" अहन्तु मनसा भूयो भूयो लवङ्गलतायाः शिरःपातं विधाय ततः पलायितवती। सुतरामभिहितं मया यत् धनिना गृहेषु नियमेन कुसुमोपहरणं क्लेशमावहतीति।

अयि मात , बहुमूर्त्तिमयि, वसुन्धरे कथमसि दर्शने ? त्वञ्च यान् अपरिमितान् अचिन्तनीयशक्तिधराननन्तवैचित्र्यमयान् जड़पदार्थान् हृदये धारयसि कीदृशास्ते सर्वे दर्शने ? यांश्च सर्वे सुन्दरान् मन्यन्ते कीदृशं वा तेषां दर्शनं ? ये च बहुसुकृतिविशिष्टा जन्तवो हृदये ते विचरन्ति ते वा कीदृशा दर्शने ? ब्रूहि मातः, तव हृदयस्य सारभूता कीदृशी पुरुषजातिः, दर्शय जननि ! तेषु यस्य करस्पर्शः सुखमेतादृशं जनयति कीदृशं वा तस्य दर्शनं ? दर्शय मातः कीदृश. स इति ? किमिदं दर्शनं कीदृशं वा दर्शनं ? दर्शने वा कीदृशं सुखं भवति ? किं मुहूर्त्तमपि न विलोकयितुं शक्यते सुखमयोऽय स्पर्शः ? दर्शय मातः। तिष्ठतु जननि, निमीलितं वहिर्नयनं विकाशं नीयतामान्तर् चक्षुः। तेनाहं सकृदपि हृदये हृदयं निगूहमाना मनसा यथाकामं रूपमवेक्षमाणा नारीजन्म सफलं

विदधामि। सर्वे एव पश्यन्ति कथमहं न पश्यामि। मन्ये कीट-पतङ्गप्रभृतयोऽपि पश्यन्ति, केनापराधेनाहं दृष्टिहीना? केवलं दर्शन मिदं, न तत्र क्वापि कस्यापि क्षतिः? कस्य वा न क्लेशः न वा पापम्। सर्वे एव निरायासं पश्यन्ति? केन दोषेणाहं न पश्यामि। न हि न हि। न मे तादृशमदृष्टम्। अन्विष्ट हृदयमध्ये, केवल शब्दः स्पर्शो गन्धश्च नान्यत् किञ्चिदप्यासादितम्। हृदयं मे शतधा विदीर्य ध्वनिरयं प्रवृत्त' को मा दर्शयिष्यति—दर्शय दर्शय भो मां रूप, न केनापि श्रुतं न वा दुःखमनुभूत जन्मान्धस्य।

ततः प्रभृति प्रत्यहमेवाह पुष्पविक्रयव्याजेन मित्रगृहं गतवती, किन्तु कथमिति न जाने। नयनहीनाया कथमय प्रयत्न'? न सा द्रष्टुमर्हति, केवलं श्रवणाशामेव पूरयितुमयं प्रयत्नः। कथं वा स शचीन्द्रो मामुपेत्य कथयिष्यति। स हि वहिरेव तिष्ठति, अहन्तु अन्तःपुरमुपैमि। यदि वा तस्य पत्नी वर्त्तमाना भवेत् तथापि तस्यान्तः-पुरप्रवेशः सम्भावितो भवेत, किन्तु वत्सरादूर्द्ध्वमेव मृता तस्य पत्नी, न चापि तेन भूयो विवाह. कृतः, सुतरा दूरमुपेता सा सम्भावना। कदाचित् कस्मैचिदर्थाय मातृणा सन्निधौ समागतो भवेत्, किन्तु यदैवाहं कुसुममादाय तत्र गमिष्यामि, सोऽपि तस्मिन्नेव समये समा-गतो भविष्यतीति केय सम्भावना? अथैवं येन शब्दशुश्रूषाग्रहेण प्रस्ताह प्रचलिता निष्फला सा दुराशा, तथापि प्रतिदिनमेव अन्धोऽय जनो गृहीतकुसुमसम्भारस्तत्र प्रचलितः। केय दुराशा? न तां जानामि, निराशहृदयेन प्रत्यावर्त्तमानया मया प्रतिदिनमेव परिचिन्तितं कथ-महमागतास्मि? न भूयो गमिष्यामि, प्रतिदिनमेव व्यर्थतामुपयातः स सङ्कल्प.। प्रतिदिनमेव च भूयश्चलितास्मि, केनचित् केशेषु गृहीत्वेव नीतास्मि, भूयश्च निराशेन हृदयेन प्रत्यावृत्ता, प्रत्यावर्त्तमानया च प्रतिज्ञातं न गमिष्यामीति। भूयश्च गतास्मि। एवं प्रचलिता दिवसाः।

( क्रमशः )

मनसि भूयोभूयः पर्य्यालोचित कथमहं गच्छामीति ? श्रुतं मया पुरुषाणा रूपमेव स्त्रीजातीना सम्मोहनहेतु'। जन्मतो नयनहीनाहं कदापि कस्यापि रूप नावलोकितवती, तथापि कथ गच्छामि ? किमस्य वचनं श्रोतु' ? कदापि केनापि कि श्रुतं यत् कापि रमणी केवलं वचनमाकर्ण्यैव उन्मत्ता जाता ? अहमपि किं तथैवास्मि ? इदमपि कि सम्भवि ? यदि तथैवेतत् कथमुपवीणयतां गृहं न गच्छामि वीणाध्वनिं श्रोतुम् ? किं वीणादिभ्योऽपि सुश्रव' शचीन्द्रस्य कण्ठः ? अनृतमेवैतत्। अथ किं स स्पर्श' ? अह नक्तन्दिव यानि कुसुमानि विचिनोमि, कदाचिद्वा विस्तीर्य्य शयनं करोमि, क्वचिच्च वक्षसा परिरभ्य तिष्ठामि, किमितोऽपि (तस्य स्पर्श') सुकुमारः ? नैतत् कदापि सम्भवति। तर्हि किमिद ? को नयनहीनामवगमयिष्यति किमिदमिति ? न च यूय स्वयमेव बुध्यध्वे कथं बोधयिष्यध्वे ? चक्षुष्मन्तो भवन्तो रूपमेव जानन्ति, रूपमेवानुभवन्ति च। अहन्तु' जानामि रूप द्रष्टुर्मानसिको विकारविशेष एव, शब्दोऽपि तथैव। नहि रूपं रूपवति वर्त्तते, द्रष्टुर्मानसमेव तस्याधिष्ठानं, नो चेत् कथमेकमेव सर्व्वे समं रूपवन्तं न पश्यन्ति। कथमेकस्मिन्नेव सर्व्वे न भवन्ति समं समासक्ताः। एव शब्दोऽपि तदीयमेव रूप द्रष्टुरेको मानसः सुख-विशेष एव, स्पर्शोऽपि स्प्रष्टुर्मानस सुखमात्रमेव। यदि मे बद्धो रूप-सुखपथस्तर्हि शब्दस्पर्शगन्धाना सुख रूपसुखवत् मनसि कथं सर्व्व-मयं न भविष्यति। शुष्कभूमौ वृष्टौ निपतितायां कथं सा नोत्पादिनी भविष्यति ? शुष्ककाष्ठ वह्निना सलग्न कथं न ज्वलिष्यति ? रूप-दर्शनाद्वा शब्दश्रवणाद्वा स्पर्शसम्बन्धात् वा शून्ये रमणीहृदये सुपुरुष-संसृष्टे कथं प्रेम न जायेत ? दृश्यतामन्धकारेऽपि कुसुमानि विकशन्ति। मेघाच्छन्नेऽपि नभसि विहरति चन्द्रमाः, निर्ज्जनेऽपि वने कूजति कोकिलकुल, मनुष्यैरगम्येऽपि सागरगर्भे भान्ति रत्नानि। सुतरां अन्धाया हृदयेऽपि समुत्पद्यते प्रेम। समुत्पद्यता नाम, किन्तु केवलं

मम यन्त्रणामेव परिवर्द्धयितु', मूकस्य कवित्व केवलं यन्त्रणायै भवति। एव वधिरस्य सङ्गीतानुरागोऽपि। नहि स्वय शृणोति स्वेन गीतं गीतं, ममापि हृदये प्रणयसञ्चार एवम्। किं वा परस्य रूप पश्यामि? न मया स्वमपि रूप कदापि दृष्टं, रूपन्तु केवल रूपम्। भूमण्डलेऽस्मिन् रजनी नाम क्षुद्रो विन्दुः कथ दृष्टो भवति, मा दृष्ट्वा किं कश्चित् भूयो द्रष्टु मिच्छति? किमिह जगति एतादृशो नोचाशयः क्षुद्रोऽपि नास्ति यो मां सुन्दरीं पश्यति? अवर्त्तमाने नयने न नारी सुन्दरी भवति, न चास्ति मे नयनम्। किन्तु शिल्पिनः प्रस्तरमुत्कोर्य्य कथ निर्म्मान्ति नयनहीनां मूर्त्तिं? किमह तथैव पाषाणमयी? तर्हि विधात्रा कथं पाषाणान्तरीदृशं सुखदुःखसमाकुल प्रणयलालसापरवशं हृदयं वितीर्णम्। मया पाषाणस्य दु खमनुभूतं, कथं तस्य सुखं न समासादितं? संसारे कथमेतादृश तारतम्यम्। अनन्तदुष्कृतकारिणापि दर्शनसुख-मनुभूयते, अहन्तु जन्मन्यन्यस्मिन् कोदृश दूषणम् अनुष्ठितवती येन द्रष्टुं न शक्नोमि? ससारेऽस्मिन् नास्ति विधाता, न वा विधानं, न वा पाप-पुण्ययोर्दण्डपुरष्कारौ। मरणं मे श्रेयः, मम जीवनस्य बहवो वत्सरा व्यतीता', समागमिष्यन्ति च बहव.। प्रतिवत्सरञ्च बहूनि दिवसानि, दिवसेषु च बहवो दण्डाः, वर्त्तन्ते च प्रतिदण्डं बहव. पलक्षणादयो विभागाः, किमत्र क्षणमपि द्रष्टु न शक्नोमि? यदि क्षणमपि नयनयो-र्मे दर्शनशक्तिः सन्निहिता भवेत् तर्हि दृश्यते मया कोदृशोऽसौ शब्द-स्पर्शमय संसारः? कोदृशी चाह? कोदृशश्च शचीन्द्रः?

क्रमशः

## आलोचनम्

[ निबन्धकः—श्रीशिवनन्दनव्याकरणोपाध्याय-तर्कतीर्थः ]

महामहोपाध्यायपदविभूषितैः पण्डितप्रवरैः श्रीशिवदत्तशर्ममहोदयैर्नवाह्निकमहाभाष्यस्य छायानाम्नीं टीकां स्थले स्थले टिप्पणीश्च प्रकाश्य पूर्वपक्ष-सिद्धान्तभाष्य-विभागप्रदर्शनेन च गीर्वाणवाणीविलासप्रणयिनां शास्त्रैकपक्षपातिनां विदुषां विशेषतश्छात्राणां महानुपकारोऽकारीति नास्ति सन्देहलेशः। अतस्तेभ्योऽनेकान् धन्यवादान् वितरामः।

तत्र तैर्महोदयैर्भूमिकान्ते "निवेदयामि वयं शिवदत्ताः" इत्युल्लिख्य "अस्मदो द्वयोश्चेत्यनेन साधुः" इति टिप्पणीमकार्षुः। तत्र मम मनसि सन्देहः समुत्पन्नो यत् कथं "निवेदयामि वयं शिवदत्ता" इति। तथाहि "जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्या"मिति सूत्रे भाष्ये "अस्मदो नाम-युवप्रत्यययोश्च अस्मदो नामप्रयोगे युवप्रत्ययप्रयोगे च प्रतिषेधो वक्तव्यः। अस्मदो नामप्रयोगे अहं देवदत्तो ब्रवीमि अहं यज्ञदत्तो ब्रवीमि। युवप्रत्ययप्रयोगे अहं गार्ग्यायणो ब्रवीमि, अहं वात्स्यायनो ब्रवीमि। युवग्रहणेन नार्थः। अस्मदो नामप्रयोगे इत्येव। इदमपि सिद्धं भवति अहं गार्ग्यो ब्रवीमि अहं वात्स्यो ब्रवीमि। अपर आह अस्मदः सविशेषणस्य प्रयोगे नेत्येव। इदमपि सिद्धं भवति। अहं पटुर्ब्रवीमि अहं पण्डितो ब्रवीमि" इत्यादि भाष्यसन्दर्भेण सविशेषणस्य नामप्रयोगे च प्रतिषेधात् न कथमपि तद्वाक्यं भवितुमर्हति। तत्र यद्यस्मदो विशेष्यत्वं तर्हि नामप्रयोगे सविशेषणप्रयोगे च प्रतिषेधः। यदि च शिवदत्तस्य विशेष्यत्वं तत्रापि नामप्रयोगे प्रतिषेधः। कथञ्चन बहुवचनसम्पादनेऽपि न निवेदयामि किन्तु वयमिति बहु-

वचनानुरोधेन बहुत्वप्रतिपादकमेव क्रियापदं भवितुं युक्तम्। परन्तु केनाभिप्रायेण प्रयुक्तवन्तः कृतवन्तश्च टिप्पणीं महामहोपाध्यायमहोदया इति न वयं जानीमः।

एवं पस्पशाह्निके महाभाष्ये "किं भो श्लोका अपि प्रमाणम्" इति भाष्यव्याख्यानावसरे टिप्पण्याम् "अहम्, शुभम्, ते, मे, अस्ति, अस्मि, वरम्, इत्यादिवत् प्रमाणमित्येतदपि विभक्तिप्रतिरूपकमव्ययमपि। इत्येव मेदिनीकाराद्याशयः। अत एव श्लोकाः प्रमाणम्, वेदाः प्रमाणमित्यादिषु न सामानाधिकरण्यानुपपत्तिः। एतदजानानानामेव विद्वद्वराणामत्र सामानाधिकरण्योपपत्तये कोलाहलः स्वीयवावदूकत्वख्यापनायैवेति दाधिमथाः" इत्यादि सन्दर्भेण पण्डितकुलभूषणाना महामहोपाध्यायश्रीगदाधरभट्टाचार्य्याणा सामानाधिकरण्योपपत्तिमसहमाना अन्तःस्थितहृदयोद्गारं प्रकाशयामासुः, तदविचारितमेव प्रतिभाति। भट्टाचार्य्योक्तदिशा सामानाधिकरण्यसंभवे स्वेच्छया प्रमाणमित्यस्य विभक्तिप्रतिरूपकमव्ययम् अङ्गीकृत्य सामानाधिकरण्योपपादनस्यागतिगतित्वात्। अत एव "प्रत्यक्षानुमानोपमानागमा प्रमाणानि" इति गौतमपादसूत्रमपि सङ्गच्छते। अन्यथा प्रमाणमित्येव प्रब्रूयात्।

किञ्च "मिदचोऽन्त्यात्परः" इति सूत्रस्याचां मध्ये योऽन्त्य इत्यादिरर्थः। तत्राच इत्येकवचनान्तस्य वृत्तौ बहुवचनान्तेनार्थः कथमित्याशङ्क्य श्रीपूज्यचरणैर्नागेशभट्टैः सौत्रमेकवचनं, तत्त्वबोधिनीकारैस्तु जात्यभिप्रायेणैकवचनमिति समाहितम्। तत्राविशेषात् दाधिमथोक्तदिशा अच इति पदस्य विभक्तिप्रतिरूपकाव्ययस्वीकारेणोपपत्तौ तत्तदुत्तरदानं न कथं वावदूकत्वख्यापनमिति।

अपरञ्च "फलव्यापारयोर्धातुराश्रये तु तिङः स्मृताः" इत्यत्र धातुरित्यस्य स्मृता इति न विशेषणम्। विशेष्यविशेषणयोः समानवचनत्वनियमेन प्रकृते विभिन्नवचनान्तोपस्थापितत्वात्। न च विशेष्य-

वाचकपदोत्तरविभक्तितात्पर्यविषयसंख्याविरुद्धसंख्याया अविवक्षितत्वं यत्र तत्रैव समानवचनकत्वनियमः। अत एव नीलो घटा इत्यादि-वाक्यस्य न प्रामाण्यम्। जात्याकृतिव्यक्तयः पदार्थः पितरो देवता इत्यादौ तु विरुद्धसंख्याया विवक्षितत्वेन विभिन्नवचनान्तत्वम्। एवञ्च प्रकृतेऽपि विरुद्धसंख्याविवक्षया तथैवास्त्विति वाच्यम्। विवक्षायां प्रमाणाभावात्। अतो धातुरित्यत्र स्मृत इति वचनविपरिणामेनान्वय इति वैयाकरणभूषणकाराणामाशयः। महामहोपाध्यायमहोदय-रीत्या तु अत्रापि धातुरितिपदस्य विभक्तिप्रतिरूपकाव्ययत्वेन सामा-नाधिकरण्योपपत्तौ वचनविपरिणामेनान्वयप्रदर्शनं न कथं वावदूकत्व-ख्यापनमिति भूषणकारे तेषां कथमनुकम्पेति न वयं जानीमः। इति।

---

## श्रीश्रीरामचन्द्राष्टकम्

श्रीनाथं जगदीश्वरं जलधरश्यामाङ्गमाभासुरं
त्रैलोक्यैकपतिं त्रितापहरणे दक्षं क्षमाभूषणम्।
वामे बिभ्रतमाशुगासनमिषुं पाणौ तथा दक्षिणे
श्रीसीतारमणं सलक्ष्मणमहं वन्देऽभिरामं विभुम्॥१

रत्नावल्युपराजितद्युतिलसत्सौवर्णसिंहासने
स्वासीनं जिष्णुमलङ्करिष्णुमखिलं रत्नैकपीठं पदा।
ज्योत्स्नापाण्डरचामरप्रचलनैः सवीज्यमानं मुहुः
श्रीसीतारमणं सलक्ष्मणमहं वन्देऽभिरामं विभुम्॥२

नानाभूतिविभूषणं रुचिकरं पीताभचेलोज्ज्वलं
कालाम्भोदमिव क्षणद्युतिरुचा विभ्राजमानं सदा।
सद्वृन्दारकवृन्दवन्दितमहो मानं महिम्ना जितं
श्रीसीतारमणं सलक्ष्मणमहं वन्देऽभिरामं विभुम्॥३

दीप्यद्रत्नमयाङ्गदार्चितकरं सौभाग्यभोग्यं यशः
सर्वांशासुखमण्डनं विशदयच्छत्रोत्तमं बिभ्रतम् ।
युक्तं भ्रातृभिरानतैरनुगुणैर्मोक्ष त्रिवर्गैरिव
श्रीसीतारमणं मुनीन्द्रमहितं वन्देऽभिरामं विभुम् ॥४

मन्दानां शमनं कृतान्तकदनं दान्तं प्रशान्तप्रभं
साधूनां हृदयान्तरिक्ष-शशिनं हंसं महन्मानसे ।
मित्रं योगिचिदम्बुजस्य वितते दुष्टाम्बुचण्डातपं
श्रीसीतारमणं सलक्ष्मणमहं वन्देऽभिरामं विभुम् ॥५

भीतानां शरणं शरद्ध विषम विद्रोहि-विद्रावणं
शत्रूणामतिभीषणं सुकृतिनामानन्दसन्दोहदम् ।
भक्तानामनुरक्तसक्तमनसामाकल्पकल्पद्रुमं
श्रीसीतारमणं सलक्ष्मणमहं वन्देऽभिरामं विभुम् ॥६

बिभ्राणं तरुवल्कलं रुचिकरं कौषेयचेलोपमं
साक्षात् क्षोणिपतिं तपस्विनमहो तारुण्यतस्त्यागिनम् ।
नित्यं तापससाध्वसप्रशमनं सन्तोषपूर्णं सदा
श्रीसीतारमणं सलक्ष्मणमहं वन्देऽभिरामं विभुम् ॥७

सुग्रीवादिभिरन्वितं सविनयैः संस्तूयमानं मुदा
रक्षोऽधीश्वरवंशसंक्षयकरं भीमाख्यकेतुग्रहम् ।
देवानामभयप्रदं विजयिनं रत्नाकराकर्षिणं
श्रीसीतारमणं सलक्ष्मणमहं वन्देऽभिरामं विभुम् ॥८

हे देव द्रविणाकरस्त्वमखिलं रक्षस्त्वरक्षश्च यत्
कृत्वा सेतुमतारयो यदनुगान् रत्नाकरे दुस्तरे ।
पाषाणाकृतितो यथा विगलिता पुण्यैरहल्या तव
श्रीपादाम्बुजरेणुभिः कुरु तथा कारुण्यमेव मयि ॥९

---

## स्वत्वसमुत्पादः *

[ निबन्धकः—श्रीश्रमरेश्वरठाकुरवेदान्तशास्त्री एम्, ए ]

यथेच्छविनियोगार्हत्वेन शास्त्रबोधितत्वं स्वत्वमिति प्राञ्चः। शास्त्रबोधितत्वमिति शास्त्रैकसमधिगम्यत्वम्। ईदृशस्य स्वत्वस्योत्पादस्तावद् बहुधा सम्भवेदिति गोतमादिस्मृतीना मतम्। तथाच—

'स्वामी रिक्थक्रयसंविभागपरिग्रहाधिगमेषु। ब्राह्मणस्याधिकं लब्धम्। क्षत्रियस्य विजितम्। निर्विष्टं वैश्यशूद्रयोः।' गौतमः १०, ३८४१

'सप्त वित्तागमा धर्म्या दायो लाभः क्रयो जयः।
प्रयोगः कर्मयोगश्च सत्परिग्रह एव च॥' मनुः १०, ११५

'लब्धं दानक्रयप्राप्तं शौर्यं वैवाहिकं तथा।
बान्धवादप्रजाज्जातं षड्विधस्तु धनागमः॥'

नारदस्मृतिचन्द्रिका पृ. १६०

'विद्यया क्रयबन्धेन शौर्य्याप्तं भार्ययान्वितम्।
सपिण्डस्याप्रजस्याप्तः स्थावरं सप्तधाऽप्यते॥'

वीरमित्रोदयधृत बृहस्पतिवचनम् पृः २०३

रिक्थं पित्रादीनामभावे पितुः सकाशाद् वा प्राप्तं धनम्। दायस्तु अन्वयागतं धनम्। अतस्तयोः प्राय समानार्थता एव। लब्धं दानरूपेण प्राप्तं प्रतिग्रहोपात्तं वा। 'लब्धं जन्मना लब्धं पैत्रिकादि' इति स्मृतिचन्द्रिकाव्याख्यान न समीचीनं 'ब्राह्मणस्याधिकं लब्ध'मिति गौतमवचनात्। क्रयस्तावत् प्रसिद्धः। संविभागस्तु भ्रात्रादिभिर्मित्रादिधनस्य विभागः। विजित युद्धादीनां जयेन प्राप्तं

* परिषदो मासिकाधिवेशने वाचितोऽयं निबन्धः।

द्रव्यादि। एतच्च मनुनारदोक्तयोर्जयशौर्याम्नयोः समार्थकम्। निर्विष्टं कर्मणोपात्तं धनम्। तत्तु वैश्यस्य कृष्यादिना शूद्रस्य तु शुश्रूषादिना सम्भवेदिति माकरि हरदत्तयोर्व्याख्यानम्। कर्मयोगः कृषिवाणिज्ये इति, मेधातिथेः कुल्लूकस्य च मतम्। अतस्तयोर्व्याख्याने निर्विष्टकर्मयोगयोः प्रायः समार्थकत्वम्। परिग्रहेण अस्वामिकेषु अरण्यादिषु अनन्यपरिग्रहीतानां तृणकाष्ठादीनां स्वीकारेण स्वत्वोत्पादो भवति। अधिगमेन च प्रनष्टस्य अज्ञातस्वामिकस्य निध्यादेराकरस्थितरत्नादेर्वा ग्रहणात् स्वत्वं सम्पद्यते। रिक्थादिभिः सस्वामिकेषु परिज्ञातस्वामिकेषु वा वस्तुषु स्वत्वं सञ्जायते। परिग्रहाधिगमाभ्यां तावदज्ञातस्वामिकेष्वनिर्दिष्टस्वामिकेषु वा। अतो धर्म्येष्वागमोपायेषु परिग्रहाधिगमयोर्मौलिकत्वमन्येषाञ्चौत्पत्तिकत्वमित्यभिधातुं युज्यते। यत्र रिक्थसमार्थकस्य दायशब्दस्य उपायेषु परिगणितत्वेऽपि वस्तुतो न तस्योपायता धनवाचित्वात्तस्य। दायत्वेन स्वत्वं जायते इत्येव वक्तु युज्यते। दायशब्दस्य कोऽर्थं इत्यत्र दायभागमिताक्षराकारयोर्वैमत्यमस्ति। 'तत्र दायशब्देन यद्धनं स्वामिसम्बन्धादेव निमित्तादन्यस्य स्वं भवति तमुच्यते' इति मिताक्षरा (दायविभागप्रकरणम्)। 'पूर्वस्वामिसम्बन्धाधीन तत्स्वाम्योपरमे यत्र द्रव्ये स्वत्वं तत्र निरूढो दायशब्दः' इति दायभागः। अतो दायभागमते पितृस्वत्वे विद्यमाने न पुत्रस्वत्वोत्पत्तिस्तत्र पितृस्वत्वनाशकानां मरणपातित्यादीनामेव हेतुत्वम्। मिताक्षरामते तु जन्मनैव स्वत्वोत्पत्तिस्तत्र पितृस्वत्वनाशस्यापेक्षा नास्ति, जीवत्येव पितरि तद्धने पुत्रादीनां स्वत्वं जायते। अतो मिताक्षराया जन्मस्वत्ववादो दायभागे तु उपरमस्वत्ववादोऽङ्गीकृत इति विशेषः। विभागोऽपि स्वत्वकारणेषु गौतमेन पठितः। 'विभागो नाम द्रव्यसमुदायविषयाणामनेकस्वाम्यानां तदेकदेशेषु व्यवस्थापन'मिति मिताक्षरा। जन्मतः परमेव पुत्रादीना सर्वेषामेव कृत्स्ने पितृगतधने स्वत्वोत्पादो भवति,

विभागात्परं यदंशे यस्य स्वत्वं तद्व्यतिरिक्तेषु अंशान्तरेषु स्वत्वविनाशश्च जायते, इति मिताक्षरामतनिष्कर्षः। इमं विभागपदार्थं दायभागकारो न समीचीनं मन्यते। प्रथमतो यदि समुदाये एव सर्वेषां स्वत्व स्वीक्रियते, तदा सर्वेषामेव सर्वत्र यथेष्टविनियोगफलभावोऽपि विधताम्, तत्तु नास्त्येव। अपि च एकस्मिन्नेव वस्तुनि स्वत्वोत्पादः, तत्रैव पुनः स्वत्वध्वसश्चेति कल्पनागौरवमेव प्रसज्येत। अतो दायभागे समुदायस्वत्ववाद परित्यक्त, प्रादेशिकस्वत्ववादश्च स्वीकृतः। अत्रोक्तं 'न च सम्बन्धाविशेषात् सर्वेषां सर्वधनोत्पन्नस्य स्वत्वस्य द्रव्यविशेषे व्यवस्थापन विभाग इति वाच्य, सम्बन्ध्यन्तरसद्भावप्रतिपन्नस्य सम्बन्धस्यावयवेष्वेव विभागश्चन्द्र स्वत्वापादकत्वात् कृत्स्नपिण्डधनगतस्वत्वोत्पादविनाशकल्पनागौरवात्, यथेष्टविनियोगफलाभावेनानुपयोगाच्च। एकदेशोपात्तस्यैव भूहिरण्यादावुत्पन्नस्य स्वत्वस्य विनिगमनाप्रमाणाभावेन वैशेषिकव्यवहारानर्हतया अव्यवस्थितस्य गुटिकापातादिना व्यञ्जनं विभाग' इति। एतन्मते अंशविशेषे एव पुत्रादीनां स्वत्वं, यदंशे यस्य स्वत्व तदंशे एव गुटिकापात.। विभागपदार्थविषये अस्तु तावन्मतद्वैधं, यत्तु कस्य कुत्रांशे स्वत्वमित्यस्य निर्णायको विभाग इति, तत्र तु वैमत्यं नास्ति। अतो विभागस्य स्वत्वजनकता नास्ति स्वत्वसाधनत्वेन तस्य कथनन्तु गौणमेव।

विजितेन तावज्जेतुः स्वत्वोत्पादो भवति। तेन च तद्देशान्तर्वर्त्तिनां स्वस्वभूम्यादौ स्वत्वलोपो न जायते। स्वराष्ट्रपरिपालने यादृग् धर्मो नृपतिना परिपाल्यते, परराष्ट्र विजित्य तत्रापि तादृगेव धर्मस्तेनानुसर्तव्य इति याज्ञवल्क्यः कथयति—

य एव नृपतेर्धर्मः स्वराष्ट्रपरिपालने।
तमेव कृत्स्नमाप्नोति परराष्ट्रं वशं नयन्।

श्रीकृष्णतर्कालङ्कारेण दायभागटीकायां 'पराजितनृपतिराज्यान्तर्वर्त्ति-तत्तत्पुरुषीयक्रमागतस्थावरादौ जयादिना नृपतेः कारणत्वो-

पयोगि-स्वत्वोत्पाद.' इति व्याख्यातम्। 'रोमीय'नये तु सर्वमेव राष्ट्रं जेतुर्भवति, तत्रस्थानां प्रजानां तत्तद्भूम्यादौ पूर्वस्वत्वं विद्यते न वा तद्विषये विजेतुरेव निरङ्कुशं स्वातन्त्र्यमङ्गीक्रियते। अत उत्कर्ष एव अस्माकं नयस्य प्रतिभाति।

अधिगमेन अधिगतवस्तूना साकल्येन प्राप्तिर्न भवति। अंशत एव तेषु स्वत्व सम्पद्यते। प्रनष्टद्रव्येषु पूर्वस्वामिनां स्वत्वं नास्ति, अधिगन्तुरेव स्वत्वमिति धर्मशास्त्रकृद्भिर्नाङ्गीक्रियते। अधिगन्ता प्रनष्टमस्वामिकमधिगम्य राज्ञे निवेदयेत् (गौतम' १०,३५) राजाऽपि प्रनष्टाधिगतं यथा तत्स्वामी प्राप्नुयात्तदर्थं यतेत (याज्ञवल्क्यः २, ३३) अमुकजातीयं वस्त्वासादितं, यस्यैतत् स्वयमुपतिष्ठताम् इत्यज्ञात-स्वामिकं धनं राजा पटहेनावघोषयेत्। एवं विख्याप्य संवत्सरं तद्-वस्तु राजा संरक्षेत् ( गौतमः १०, ३६ )

शौल्किकैः स्थानपालैर्वा नष्टापहृतमाहृतम्।
अर्वाक् संवत्सरात् स्वामी हरेत परतो नृपः॥

इति मिताक्षराधृतस्मृतिवचनेनापि संवत्सरपरिपालनं राज्ञां कर्त्तव्य-मित्युपदिष्टम्। मनु मते तु प्रतीक्षाकालस्तावद् वर्षत्रयमेव। तन्मतं समीक्षमाणेन विज्ञानेश्वरेण मन्यते यत् गौतमप्रणीतसूत्रे संवत्सर-मित्यत्र एकवचनस्य विवक्षितत्वं नास्ति। राज्ञा प्रनष्टाधिगतं वस्तु यत् परिपाल्यते तदर्थं तस्मै शुल्करूपेण किञ्चिद्देयमेव। तथा च मनुः—

आददीतार्थषड्भागं प्रनष्टाधिगतान्नृपः।
दशमं द्वादशं वापि सतां धर्ममनुस्मरन्॥ ८, ३३

मिताक्षराव्याख्याने तु राजा प्रथमे वर्षे कृत्स्नमेव दद्यात्। द्वितीये द्वादशं भागं, तृतीये दशमं, चतुर्थादिषु षष्ठं भागं गृहीत्वा शेषं दद्यात्। रक्षाक्लेशक्षमापेक्षो भागविकल्प इति मेधातिथिः। प्रनष्ट-वस्तुग्रहणाय यदि स्वामी नागच्छति तदा तस्मिन् राज्ञ एव स्वत्व-

मुत्पद्यते। चतुर्थांशमात्रन्तु अधिगन्त्रे राजा दद्यात्, 'जद्ध मधिगन्तुः राज्ञः शेष' इति गौतमवचनात्। निधिषु तावत् राज्ञ एव स्वत्वं, नाधिगन्तुरिति गौतमवसिष्ठयाज्ञवल्क्यानां मतम्। स्वामी आगत्य यदि साक्ष्यादिकमुपन्यस्येदं वस्तु मम, अमुकस्थाने अमुकदिवसे एतदर्थं मया लिखितमासीदिति प्रमाणयेत्, तदा राजा तस्यैव स्वत्वं स्वीकृत्य तद्वस्तु तस्मै एव समर्पयेदित्यपि गौतमेन व्यवस्थापितम्। अतोऽधिगमेन प्रनष्टेषु तथा निधिषु स्वत्वमुत्पद्यत्येवेति नियमो नास्ति। उपेक्षा-वशात् स्वामिनामग्रहणे तथा ग्रहणविषये कालहरणे च कृते, अधि-गतेषु तदंशविशेषेषु वा स्वत्वमुत्पद्यते राज्ञोऽधिगन्तुश्च।

दानेनापि ग्रहीतुः स्वत्वमुपजायते। तत्र स्वस्वत्वध्वंसपूर्वक-परस्वत्वापत्तिफलक-चेतनोद्देशपूर्वकत्यागो दानम्। परिग्रहीतु स्वीकारापेक्षा नास्तीति दायभागः, अस्तीति मिताक्षरा। तत्रोक्तम्— 'स्वस्वत्वनिवृत्तिः परस्वत्वापादनञ्च दानम्। परस्वत्वापादनञ्च परो यदि स्वीकरोति तदा सम्पद्यते, नान्यथा'। 'स्वीकारश्च त्रिविधः। मानसो वाचिकः कायिकश्चेति। तत्र ममेदमिति सङ्कल्प-रूपो मानसः। वाचिकस्तु ममेदमित्यभिव्याहारोल्लेखी सविकल्पकः प्रत्ययः। कायिकः पुनरुपादानाभिमर्शनादिरूपोऽनेकविधः'। तत्र हिरण्यवस्त्रादौ त्रिविधोऽपि स्वीकारः सम्भवति। क्षेत्रादौ पुनः फलोप-भोग एव कायिकस्वीकारत्वेन परिगृह्यते। अतो दानक्रयादेश्चेत् सम्पूर्णतेष्यते तदा दत्तक्रीतक्षेत्रादेः स्वल्पोऽप्युपभोगः कार्य्य एव। उप-भोगसहित आगमस्तद्दिकलादागमादुर्बल इत्याह याज्ञवल्क्यः—

आगमेऽपि बलं नैव भुक्तिः स्तोकाऽपि यत्र नो।

आगमोऽत्र दानक्रयादिः।

भोगस्य तु स्वत्वकारणता न स्वीक्रियते। भोगः स्वत्वे प्रमाणं भवितुमर्हति, तस्य तु स्वत्वजनकता नास्तीति मतं धर्मशास्त्रकारैर्बहुधा निगद्यते। यत्रागमो नोपलभ्यते भोगश्च उपरवोज्झितो दीर्घकालश्च

तत्र भोगादेवागमस्य अनुमानं भवति। यत्र तु आगमाभावो निश्चीयते तदा शतवर्षभोगोऽपि स्वत्वप्रामाण्यं नाधिगच्छति। तथाच नारदः—

अनागमं तु यो भुङ्क्ते बहून्यब्दशतान्यपि।
चौरदण्डेन तं पापं दण्डयेत् पृथिवीपतिः॥

छलेन बलेन कौशलेन वा येन केनाप्युपायेन परस्वं स्वीकृत्य तत्र भोगो विधेयस्तेनैव स्वत्वमुत्पद्यत इत्यङ्गीकर्त्तुं परलोकभीरवो भारतीया धर्मशास्त्रकारा न प्राभवन्।

स्वत्वसमुत्पादः केन केनोपायेन भवितुमर्हति तत् समासत आलोचितम्। स्वत्वं लौकिकं शास्त्रैकसमधिगम्यं वा तत्राप्यस्ति महान् विवादः। जीमूतवाहनस्य तथा तन्मतानुवर्त्तिनाञ्च मते स्वत्वं शास्त्रैकगम्यमेव। शास्त्रसम्मतैरेवोपायैः स्वत्वमर्जनीयं नान्यथा। विज्ञानेश्वरस्तु न तथा मन्यते। तन्मते स्वत्वं लौकिकं तदुत्पादविषयिणो विधयश्च लौकिकीं प्रथां परिपश्यद्भिरेव धर्मशास्त्रकारैः प्रवर्त्तिताः। लौकिको व्यवहार एव एषां विधीनां मूलमिति च। तथा सति यदि शास्त्रोदित विधिमतिक्रम्य केचिद्द्रव्याण्यर्जयन्ति तदा तेषु द्रव्येषु तेषां स्वत्वमुत्पद्यत्येव। ब्राह्मणो यदि कृष्यादिना शस्यादीन्युत्पादयति तथा प्रयोगाख्येनोपायेन धनवृद्धिं विदधाति, तदा शस्यादिषु वृद्धधनेषु च तस्य स्वत्वमप्रतिहतमेव स्यादित्यास्तां विस्तरः।

---

# वैदेशिकानां संस्कृतप्रीतेर्नवीनं निदर्शनम्

[ निबन्धकः—श्रीचिन्ताहरणकाव्यतीर्थः एम्-ए ]

न खलु नाविदितं संस्कृतशास्त्रालोचनव्यग्रमानसानां सुचेतसां संस्कृतशास्त्रप्रचाराय संस्कृतसाहित्यस्य सम्यगालोचनाय वा अनल्पैर्वैदेशिकैर्मनीषिमहत्तमैरङ्गीकृतः श्रमसमूहः, क्रियते चेति। कति नाम दुर्लभप्रचाराः प्रायेणाज्ञातस्वरूपा अपि महोपयोगवन्तो ग्रन्थनिचयास्तैस्तैर्वैदेशिकैः शास्त्ररसिकैः प्रकाशं गमिता भारतेतिहासस्य सम्यगवबोधने दत्तहस्ताः समवतिष्ठन्ते। न च पिष्टपेषणन्यायेनाखिलानां तदीयकृत्यनिचयानामत्रोल्लेखेन किमपि साध्यं स्यात्।

रोमकविश्वविद्यालयसंस्कृताध्यापकेन पण्डितकुलशेखरेण डक्टर कार्लो फर्मिचि (Dr Carlo Formichi) महोदयेन साम्प्रतमेव या नामावलम्बिता प्रयत्नपरम्परा संस्कृतप्रचाराय, या चोपन्यस्ता संस्कृतमाहात्म्यवर्णनगर्भा वचनपरिपाटी, सैवोपक्रियतेऽत्र पत्रिकायां वाचकमहोदयानां सन्तोषापादनाय।

स चायमध्यापकवर्य्यः साम्प्रतमामेरिकादेशीय-कालिफर्णिया-विश्वविद्यालये वक्तृताप्रसङ्गेन तद्देशीय-धनकुबेराणां धनोपयोगं विभिन्नेषु विश्वविद्यालयेषु संस्कृताध्यापकनियोगविधौ संस्कृतालोचनसौकर्य्यसंसाधनविधौ च साग्रहं प्रार्थितवान्, प्रसङ्गतश्च संस्कृतशास्त्रमाहात्म्यकीर्त्तनमुखेनोक्तं तेन महात्मना—

"The study of Sanskrit is of immense importance, first, because it is the most perfect linguistical organism, that we know, more perfect than either Greek or Latin in its structure and more transparent,

for it preserves all its roots, while other languages have lost many of theirs. The etymology of many words that are lost in other languages can be found in Sanskrit Among all Aryan languages it is the most perfect one extant From the mythological, literary, and philosophical viewpoints, Sanskrit is also of the highest importance The mythology of Greece and Rome is largely fragmentary, there we have the forces of nature already personified but the origins remain obscure In Indian mythology, however, we find the process of personification still going on, so that the whole becomes clear, for the key to our own languages any mythology we must appeal to Sanskrit, and this fact makes it of enormous scientific interest.

"As far as philosophical thought is concerned, we cannot any more allow the history of philosophy to begin with the Greeks, because India has a rich literature of philosophical writings in the Upanishads which go back to the seventh century B C and certain hymns of the Rig-Veda which go back to 2000 B C., long before the Greeks had begun to speculate In the matter of religion one can have no idea of how religious phenomena began without knowing the religions of India"

अर्थात्, संस्कृताध्ययनमतितरामुपयोगमावहति। प्रथमतस्तावत् अस्मदभिज्ञातासु भाषासु पूर्णतमा—ग्रीक्भाषातो लाटिन् भाषा-संस्कृततोऽप्यस्याः पूर्णत्वमवभासते। अस्यामेव बहवस्तादृशा विराजन्ते धातवो येषां बहव एव भाषान्तरेषु विलोपमुपगताः। ये तावत् शब्दा भाषान्तरेषु नोपलभ्यन्ते तेषामपि व्याकृतयोऽत्र सन्ति।

तथा च आर्य्यभाषासु इयमेव सकला पूर्णा च विराजते। पुराण-साहित्य-दर्शनवर्त्मनि च संस्कृतम् अतितमां गाहते समुपयोगम्। ग्रीस्‌देशीय पुराण तावत् खण्डितमेवोलभ्यते—प्राकृतिकपदार्थास्तत्र चेतनधर्मवत्त्वेनोपवर्ण्यन्ते परं तन्मूलं न प्रकटीकृतम्। परं भारतीयपुराणसाहित्ये तच्चैतन्यारोपारम्भमेव पश्यामो वय—येन सर्वं स्पष्टमेव विभाति। अस्मदीयानां भाषाणां पुराणानाञ्च सम्यगवबोधनार्थं संस्कृतमेवास्माभिरालम्बनीयम्। एवञ्च संस्कृतालोचनं परमप्रयोजनवदिति प्रतिभाति।

दार्शनिकचिन्ताविषयश्चेदालोच्यते तदैतदेव वाच्यं यत् नेदानीमपि दर्शनेतिहासो ग्रीक्‌देशीयदर्शनालोचनोपज्ञ भवितुमर्हति यतो भारतेषु ख्रीष्टपूर्वशतसप्तकवर्षात्मककालप्राचीनास्वपि उपनिषत्सु ख्रीष्टपूर्वसहस्रद्वितयवर्षात्मककालप्राचीनेषु कतिपयेषु ऋग्वेदीयसूक्तेषु च भूयस्तदेव विलसति दार्शनिकं वस्तु। धर्मविषये चैतदुल्लेख्यमेव यत् धर्मसम्बन्धिनी कापि धारणा नैवोपपद्येत यावत् न ज्ञायन्ते भारतीयधर्मशास्त्रसमूहाः। इति।

न चानन्तरोद्धृता वचनपरम्परा निर्युक्तिका केवलोच्छ्वासविजृम्भिता वा। संस्कृतसाहित्यं तथा संस्कृतालोचिनः प्रति विरागं भजताम् अस्मद्देशीयानां नयनोन्मीलकमेतत् स्यादित्याशास्महे।

---

## सन्देशाः

**साहाय्यलाभः**—विदितमस्तु परिषत्संस्तुतानां सदस्यसमवायाना, यत् कियतो दिवसात् प्राक् बङ्गविश्रुतयशसामच्छत्रचामरं राजपदमध्यासीनानामधुना लोकान्तरिताना राजेन्द्रलालमल्लिकमहोदयानां सुयोग्यो वंशधरस्तत्रभवान् वदान्यप्रवरः कुमार-

श्रीयुक्त-जितेन्द्रमल्लिकः परिषत्कार्य्यसाहाय्यार्थं शतं रूप्यकाणामदात्। चिरप्रसिद्धा वंशानुपातिनी तत्रभवतां वदान्यतेति न वयं तत्र विस्मय-विशेषमाविष्कर्त्तुमलभ्भवामः।

सुप्रसिद्ध "पोस्ताराजवाडी" वास्तव्यस्तत्रभवान् कुमारपदप्रभ विष्णुर्विष्णुप्रसादरायमहोदयश्च द्वयोपहितसाहायकं पञ्चाशतं रूप्य-काणां परिषदि प्रदत्तवानिति ज्ञतज्ञा परिषत् परिपुष्णात्यत्रभवता-मूर्द्ध्वाद्धर्द्धमानमिति।

बहुविश्रुत "लाहा"वंशीयस्तत्रभवान् कुमार-पदलाञ्छनो वृन्दा-वनलाहामहोदयः पञ्चाशतं राजतीर्मुद्रा दारिद्र्यविद्रावणे परिषदि प्रत्यार्पयदिति कार्पण्यलेशहीनमान्तरिकं धन्यवाद तेभ्यो वितरामः।

अथ एवैते उदारहृदया महात्मान एवमेव चिराय देशहितैषणा-व्रतदीक्षिता निरामयं सपरिजनाश्चिरात् परमानन्दमाविन्दन्त्विति प्रार्थयामहे वयमिति शम्।

**मानप्राप्तिः**—विदितमस्तु वाचकमहाभागानां यथा श्रीयुक्त गङ्गाचरणकर एम्-ए श्रीयुक्तसुशीलकुमारमैत्र एम्-ए इत्येतौ सिटि-कलेजस्य तथा विश्वविद्यालयस्य सुप्रसिद्धाध्यापकौ सम्प्रति गभीर-निबन्धनिर्माणेन 'पि एच्-डि' इत्युपाधिं लब्धवन्तौ। ईश्वरकृपया तौ क्रमेण समुन्नतिं लब्ध्वा विद्योन्नतिं सम्पादयेतामिति।

**विशेषसूचनम्**—एतत्संख्यायाः २४२ पृष्ठे १२श-पंक्तौ 'कारापयति'रित्यत्र 'साध्वविधि'रिति, २५६ पृष्ठे प्रथमपंक्तौ 'इत्यस्मै' इत्यत्र 'इति प्रदेशे' इति परिवर्त्त्य पाठ्यम्।

---

# संस्कृतसाहित्यपरिषत्

इयं संस्कृतसाहित्यपरिषत् प्रतिभा रवेः।
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम्॥

| December, 1928 | १८५० शकीये अग्रहायणे<br>११श वर्षस्य ८म संख्या | Vol XI. No. 8 |
|---|---|---|

## सेयं कालिन्दि कच्चित्त्वमसि ?

[ निबन्धकः—श्रीउपेन्द्रमोहनसाङ्ख्यतीर्थः ]

यस्यास्तीरोद्भूमिर्दिवसमवसितं प्राप्य गोपाङ्गनानां
मज्जन्तीनां सुनीलैरभवदहरहः संस्तृता वस्त्रजालैः।
यत्राभूद् भूषणानां ध्वनिरनवरतं साम्ध्यनैस्तब्धभेत्ता
सेयं कालिन्दि कच्चित्त्वमसि रसखनिः सङ्गिनी वल्लवीनाम्॥१

यस्या वक्षस्युदारे प्रतिरजनिमुखे वल्लवीनां मुखानि
प्राप्तेऽस्तं तिग्मरश्मावपि न मलिनतां भेजिरे पङ्कजानि।
स्रोतोऽवाह्या विरेजुः शिरसिजनिचया शैवलानां द्विषन्तः
सेयं कालिन्दि कच्चित्त्वमसि शवलिता योषितामङ्गरागैः॥२

यस्यास्तोयानि तोयोदधिजधिषणया धूमयोनिप्रतानाः
पेपीयन्ते स्म कामं प्रतिदिनमतलस्पर्शि निष्पङ्कशङ्काः।
वर्णैरेवान्वकार्षीदिति न परमगाधोदकैर्या पयोधिं
सेयं कालिन्दि कच्चित्त्वमसि शमकरी वारिजानां तृषाणाम्॥३

रात्री घोरान्धकारावृतनिखिलजगद्दृश्यसामग्रिकाया
नीपैर्दीपायमानैरभिसरणपथं योषितो मार्गयन्त्यः ।
यस्या कल्लोलघोषैर्जह्वुरनुमितप्रेमलीलानिकुञ्जे'
सेयं कालिन्दि कच्चित्त्वमसि मसिनिभा रात्रिसङ्केतदूती ॥४
यस्यामाहेय-भोगोद्भव-विषम-विषोदोर्म्मिदुष्टच्छदाया
मध्येतोय न्यग्रह्लादहिमहिनकर का'लियं नन्दबालः ।
निर्ज्जीवान् स्वानुदश्वासयदमलजला स्पर्शतस्तामकार्षीत्
सेयं कालिन्दि कच्चित्त्वमसि विषपयः पोतजीवायुरुग्रा ।५
यस्यामाकण्ठमग्नाश्वपलयुवतयस्तोयकेलिप्रसक्ता
नाज्ञासुः स्नेहयोगादुभयमपि हृत नन्दबालेन काले ।
चेत' संसारकृत्ये वसनमथ तटे यामुने न्यस्तपूव
सेयं कालिन्दि कच्चित्त्वमसि विवसनाभीरनारीशरण्या ॥६

अपि तरुणसहायाः सायमारभ्य बाला-
स्त्वदुपतटनिकुञ्जे यूथशः पर्य्यटन्ति ।
अपि दयितकृतायामद्य सङ्केतभूमौ
रजनितिमिरगुप्ता लुप्तशङ्काश्चरन्ति ॥७
अपि बत मदमत्तस्वामिहीतृखाय खातात्
त्वरसि हलधरो यद्दुष्पथोना व्यतानीत् ।
निशमयसि निशीथे शान्तकोलाहले वा
क्वचिदपि कलमुग्ध शिञ्जितं नूपुराणाम् ॥८

## यमपुरी-पर्य्यटनम्

[ निबन्धकः—श्रीवेणुधरतर्कतीर्थ. ]

यद्यपि विदेशपर्य्यटनं सौभाग्यबाहुल्यनिदानं विधात्रपुरुषेण न चित्रितं मे ललाटे, तथापि तदितिवृत्तमतीवादरेण जिज्ञासितमासीत् मया चपलमतिना बाल्यात् प्रभृत्येव। अन्तरान्तरा बङ्गीयमासिकपत्रिकासु विदेशपर्य्याटकैः प्रकाशितं भ्रमणवृत्तान्तमधीत्य विस्मृतक्षुत्पिपासेन महानानन्दसन्दोहश्चोपभुज्यते। किन्तु महदिदं कष्टं मे, यत् यो हि जम्बूद्वीपादीनां द्वीपसप्तकानामिक्षुसमुद्रादीनाञ्च सप्तानां चतुर्णां वा सागराणां सम्यक् तत्त्वं प्राप उपदिदेश च जनेभ्यः, तेनापि स्वयं सकलमहापुराणोपपुराणप्रणेत्रा परमर्षिणा भगवता कृष्णद्वैपायनेन अनवाप्तपरिचयम् आमेरिकादि विस्तृतभूखण्डं दुरधिगम्यं प्राणिमात्रैरनध्युषित एभारिष्ट शृङ्गादिकमप्युन्नतस्थानञ्च इदानीन्तनाः केचन विद्वांसो यद्यपि आविष्कर्त्तुमीशा जातास्तथापि पुराणभारतादिषु अनेकधा विवृतं सत्यातीतैर्मनुजैर्नियतमुखरितं पुनः पुनर्गतागतेनावाप्तपरिचयं भोगविशेषैरास्वादितस्वादं यमलोकमधिकृत्य अद्यापि किमपि भ्रमणवृत्तं कुत्रापि केनापि न प्रकाशितं, न वा तदर्थं चेष्टितमिति।

यत्र हि अधिष्ठाने एकदा मादृशैः सर्वैरेव विवशैर्गन्तव्यं तस्यास्थानिदिष्टाः समाः, तस्य अवस्था, अधिवासिनः, उत्पन्नद्रव्यम्, राजकीय शासनविधिः मार्ग-सुगमता, प्रचलित-भाषा, आचारः, व्यवहारः, इत्यादयो विषया अन्येषां प्रष्टव्या भवन्तु न भवन्तु वा, मादृशां तु तत्र नियतस्थितिकानां रात्रिन्दिवमेव चित्तौत्सुक्यमुद्वेलयन्तीति किमत्र चित्रम्?

यद्यप्येतत् सर्वं पुराणादिषु सविस्तरमुपवर्णितं भगवता वेदव्यासेन, तथापि तेन तत्र स्वयं गत्वा स्वचक्षुषा पश्यता लिखितं न तु प्राचीन-

किंवदन्तीमवलम्बेरति कः स-शपथं वक्तुमर्हति । उक्तया चानया व्यथित-हृदयैस्तद्भक्तैस्तस्योक्तेर्याथार्थ्येऽङ्गीकृतेऽपि कियन्तो नाम काला गता-स्तेषा जरत्पुराणानाम् । जीघुष्यन्ते च जना'—"रामजन्मनः षष्टिसहस्राणि वत्सराणि प्राक् रामायणस्य जन्मे"ति । महाभारतस्य जन्म तु ततोऽपि प्राचीनतममिति कस्यचित् समालोचकवरस्य गवेषणाकलितः सयुक्तिकसिद्धान्तो मया कस्याञ्चिद्वङ्गीयपत्रिकायामवलोकितश्च । कल्पनादृशोऽप्यगोचरेण एतावता कालेन तस्य यमनगरस्य नूनमेव सुमहत् परिवर्त्तनं जातम् ।

विज्ञान-गवेषणा-प्रसूतसभ्यतावृद्ध्या सम मर्त्यजगति सर्वत्र प्रदेशेषु एव सर्वेषु विषयेषु सतत परिवर्त्तनं दृश्यते । पञ्चाशद्वत्सरेभ्यः प्राक् येन कलिकातानगरी प्रथममवलोकिता, ततोऽद्य सा द्वितीय-दर्शनवेलाया सम्यग् भिन्नत्वेनैव प्रतीयमाना सती त दर्शकं विस्मय-विमुग्धहृदयमवाच करोतीति नास्तीकार्य्यं भवद्भिः । एवञ्च क्षुद्रमतीनां नामितशक्तीनामस्माक राज्य एव यद्येवमुन्नतिपरम्परा, तदा किं नाम वक्तव्यमव्याहतज्ञानप्रसराणाममितशक्तीना तेषा देवानां पापलेश-रहितेऽधिष्ठाने । यातु किमनेन अनुमानाराधनेन ; यम नगर्याः कीदृशोऽवस्थाविपर्य्यय' समजनीत्यत्र प्रत्यक्षदर्शिनो मे वर्णना सर्वैर्थं पठिष्यन्तो भवन्त एव प्रमाणम् ।

स्वचक्षुषा यमपुरीदिदृक्षया प्रतिनियतमेव व्याकुलचित्तस्य मे दिष्ट्या विगते निशीथे स्वप्ने मनोऽभिलाषः सम्पूर्त्तिमयासीत् । तद्विवरणं प्रियपाठकेभ्योऽनिवेद्य न मया कथमपि स्वस्ति लभ्यत इति यथायथं वर्ण्यते । भवद्भिः कृपयाऽध्येष्यमाणमिदं वृत्तमविश्वास-स्थास्पदं स्यात्तथापि स्वप्नद्रष्टाऽहं न मृषा वादित्वेनानुयोज्यो भवेय-मिति ।

मया स्वप्नावस्थायां दृष्टं—द्वौ सौम्यवदनौ सुवेशौ पुरुषौ समागत्य मामेकमादेशपत्रमधस्ताद्दक्षिणपार्श्वे चित्रगुप्तनाममुद्राचिह्नित दर्शयन्तौ

अकर्कशया वाचा प्रावोचताम्—"भद्र ! आवां धर्म्मराज किङ्करौ, त्वां गतायुषं यमपुरीं नेतुं प्रेषितौ, तत् त्वर्य्यतां भवता" इति। मया तु लब्धचिराकाङ्क्षितेन संसारविरहजनितदुःखमणुमात्रमप्यननुभवता सानन्दचेतसा तयोरेकस्याग्रगमनमन्यस्य चानुसरणं व्यधायि।

अथ पथि प्रचलतामस्माकमेवमुक्तिप्रत्युक्ती अभूताम् :—

पुरुषौ। ननु भद्र ! अस्माभिर्नीयमानानां भूलोके क्लेशपरम्परामसहनीयामनुभूय प्रतिक्षणं यमराजविस्मृतिं स्वजनेषु विरक्तिमात्मेच्छोषितवतामपि अत्र पथि सुमहान् रोदनध्वनिः श्रूयते, तत् किमिति भवान् एवमानन्दितमनाः प्रफुल्लवदनो वामनुसरति ?

अहम्। यमलोकविवरणसंग्रहे मे महती आकाङ्क्षा बहुकालीना अद्य सम्पूर्त्तिं यास्यति भवतां प्रसादादिति आनन्दकारणम्। यावदयं पन्थाः समाप्तिं नायाति, तावत् तद्विवरणं भवन्तः शुश्रूषे, कृपया आख्यातुमर्हन्ति। अन्यच्च पृच्छामि—पुराणादौ उपलब्धो भवतामाकारे चेष्टिते च स रौद्रो भावः किमिति अद्य नोपलक्ष्यते ? भवन्तौ यमदूता अपि मे पाप-लघुतायाः एव हेतुनामुररीकृत्य किमिवं विष्णुदूतायन्ते ? सर्वमेतत् सविस्तरं कथ्यतां कृपया।

पुरुषौ। शृणोतु भवान् दत्तावधानः। यद्यपि अस्मत्प्रभुपादा मर्त्त्यजगति विरलं यातायातास्तथापि अस्मन्मुखात् सततं श्रुत्वा मर्त्त्यस्य सभ्यतासमुन्मेषणप्रकारं तदनुचिकीर्षवस्ते जनैः सह साधुव्यवहारार्थमस्मान् सविशेषमुपदेदिशाञ्चक्रिरे। वयमपि प्रकृत्या स्वाकृत्या वेशेन च पूर्वापेक्षया सभ्यतमा जाताः। अस्माकं प्रतिनिधीभूतैः प्राधान्यपदाधिष्ठितैः मासिकी वार्षिकी च सभाऽनुष्ठीयते, तत्र चाहूतैः सर्वैर्जातीयोन्नतये कर्त्तव्याकर्त्तव्य-निर्णयो विचार्य्यते, बहुसम्मत्या निर्द्धारणानि च गृह्यन्ते। तथा अस्माकं बालका यथा प्राप्तवयसो जुगुप्सितादस्मात् पैतृकव्यवसायात् निवर्त्तमानाः स्वाधीनं कर्म्मान्तरं सभ्यजगत्सम्मतं कर्त्तुमर्हन्ति, तदर्थं धर्म्मराजव्ययेनैव संस्थापिते विद्या-

लये आधुनिकरीत्या शिक्षां लभन्ते। अस्माकं भृतिरपि बाहुल्येन वृद्धिमापत्।

अहम्। अहो! भवतां भृतिरिति अश्रुतपूर्वमेतत्, तस्या अपि पुनर्वृद्धिः?

पुरुषौ। अस्माकं पुरे पुरा भक्तदासा अप्यासन्। इदानीन्तु श्रमजीविनो दासा दुर्लभा, मसीजीविनस्तु सुलभा भक्तदासायन्ते। वेदव्यासस्य काले वयं परपिण्डप्रत्याशिन एवास्म। इदानीन्तु सच-बन्धन (धर्मघट)-भीतानां प्रभुपादानामस्मासु सुमहद्गौरवं, मसी-जीविनि चित्रगुप्ते वर्त्तिष्ठे तु एतद्वैपरीत्यं स्फुट दृश्यते। यतस्तस्मिन्नद्य स्वाधिकारं जहति परःसहस्रा गणितविद्याया राजकीयोपाधिपरीक्षा ससम्मानमुत्तीर्णा युवानो देवपुत्रा इन्द्रचन्द्रकुवेरादीनामनुरोध पत्रसनाथा विना शुल्कं कर्म्मशिक्षार्थिनो यमद्वारं कोलाहलमुख रितं करिष्यन्ति। अस्माकन्तु दिनमेकमपि कर्म्मवैमुख्ये यमराजेन चक्षुषा सर्षपकुसुमं द्रष्टव्यमिति प्रतिवर्षमेव क्रमशो भृतिवृद्धिरशिमा च भृतिरनुमन्यते। वासस्थानानि सुमनोहराणि प्रतिजनमाक ल्पयन्ते। कदाचिद्दौर्भाग्यात् व्याधिपीडिताश्च धर्म्मराजदत्तशुल्काभ्यां नासत्यदस्राभ्यां चिकित्सिता भवामो वयम्।

अहम्। अहो आश्चर्य्यम्! सकलमर्त्यलोकत्रासजनकः स श्रमजीवि-समस्या-पवनो भवतां स्वर्गेऽपि प्रबलतया प्रवाति। ततोऽपि विस्मयस्थानमिदं यत्, पदातिकानां साम्प्रतमेवं सत्यपि स प्रताप-सम्मानधनबाहुल्ये कस्य नाम काल्पनिकस्याकाशकुसुमायमानस्य सुखस्य हेतोर्वः पुत्राः सम्भावितात्यचिरपैठकव्यवसायपरीहारा विद्या लये प्रेष्यन्ते?

पुरुषौ। नान्यस्य कस्यापि हेतोः विवाहादृते।

अहम्। नासारम्भे अयातविद्यालयगन्धानां भवतां विवाह' किं न समपादि?

पुरुषो। अये! भवान् शिशुरिव अल्पबुद्धि परिलक्ष्यते। विवाहार्थमिति यदुक्तं तदुपलक्षणं वेदितव्यम्। प्रचुरतरधनरत्नयौतुकलाभ एव विद्यालयगमनफलमपेक्ष्यतेऽस्माभिः, तदुपरि स्त्रीरत्नलाभस्तु "भारस्योपरि शाकगुच्छ" इति न्यायात् सिद्ध एव।

अहम्। अहो! न केवलं श्रमजीवि-भावना सम्भावित-नवीनराजविधिप्रचारप्रतीकारा स्वर्गवासिन आकुलीकरोति, अपि तु अप्रतिविधेया कन्यादायसमस्याऽपि। यातु तावत्, भवता सभासु इदानीं प्राधान्येन कस्य नाम विषयस्यालोचनं भवति?

पुरुषो। अस्माकं कर्म्मकालसङ्कोचाय सविशेषमालोचना जायते।

अहम्। कथमिव?

पुरुषो। अस्माकमिदानीं नास्ति दिनं नास्ति रात्रिः, नास्ति शयनं न वा भोजनम्। यदा यस्य प्रभुनादेशः पात्यते तेनैव एकपदे उपस्थातव्यम्, एतत्तु अतिदुःसहम्। अत एव दिवा दशमहोरात-श्चतुर्थहोरा यावदस्माकं कार्य्यकालो नियमितो भवेतु, अयमर्थः समालोचनापूर्वकं उपस्थापितः, किन्तु अद्यापि देवपादैरननुमततया प्रतिसभं प्रबलमालोच्यते। नूनं सत्वरमेव अस्माकमभीष्टसिद्धिर्जायेत।

अहम्। अश्रुतपूर्वमेतत् सम्भाव्येत, यदि मरणमपि तस्मिन्नेव काले नियमितो भवेदस्माकम्। तथात्वे न केवलं भवतामपि तु स्मृतिशास्त्रमधिजिगांसूनामन्तेवासिनामपीदानीं सहमरणप्रकरणवत् अशौचसङ्करप्रकरणीयानां "रात्रिशेषे दिनद्वयेन प्रभाते दिनत्रयेण" इत्यादीनां वचनानामालोचनाप्रयोजनाभावात् महच्छ्रमलाघवं सम्पद्येत। अपि सर्वेषां मुमूर्षूणां वर्षान्ते चैत्रसङ्क्रान्त्यां मृत्युर्भविष्यतीति नियमं किं भवितुं नार्हति? तदर्थमेव भवद्भिर्यत्नो विधेयः।

पुरुषो। नहि! नहि! भवतां मृत्युः सर्वदैव भविष्यति। किन्तु

यथा यमपुरस्थितैरेव केनचिद् यन्त्रविशेषेण मृता: प्रत्यानयना भवन्ति, तदर्थमस्माकं प्रभुर्विश्वकर्म्मणा सह मन्त्रयते। उक्तावेति च यन्त्रे वयं यथाकालं यन्त्रपरिचालका एव भविष्यामः, न पुन. शीतातपादिषु मर्त्यागमनक्लेशसन्तानमनुभविष्याम: ।

अथ इत्थमालपद्भिरस्माभिर्यम-नगरी सौधमालामण्डिता प्राप्ता, अवलोकितश्च यथायोग्यपरिजनसहित: सिंहासनसमासीनो धर्म्मराज:। ततश्च कृताञ्जलि प्रणमन्तं मां निरीक्ष्य धर्म्मराजकृतेङ्गित उपनेत्रभूषितनासिक: सितकेशश्चित्रगुप्तो बहुकालीनस्य जीर्णपुस्तकस्यैकस्य पत्राणि पुन' पुनरितस्तत: सञ्चाल्य हस्ताभ्यां शिर: कण्डूयमानो भीतभीतोऽनुच्चैराह "मया भ्रमात् अस्य सावशेषायुषोऽप्यानयनमादिष्टं दूतेभ्य:, तदयं सत्वर पुनर्यथास्थानं प्रापयितव्य" इति। निशम्यैतद्वचन यमराजस्तमधोवदनं मुहुर्धिरस्कृत्य मम पुन: सपदि स्वगेहप्रेरणं तद्रायस्य च चित्रगुप्तभृतित कर्त्तनमादिशत् ।

अथ मया यम,रीं सर्वत परिद्रष्टुकामेन समीहितसिद्धेर्विघ्नमाशङ्क्य सविनयमाभाणि "देव ! अहमत्रातिथिरूपेण दिनदशकानि स्थातुमिच्छामि, एकादशाहे प्रात: कृपया स्वस्थानं प्रेषणीय" इति। यथेदानीं बङ्गेषु गृहदेव्या पराशरसहितायाश्च अतिमात्रादर:, तत को वा विप्रो माहृशो बुद्धिमान् बङ्गीय इतोऽप्यधिककालं देवाग्रस्थितिमप्याद्रियेत ? अत्रेदमपि वक्तव्यतयाऽवतिष्ठते यत्, यदि प्रेषणागमनवसरादिप्रयुक्त इतोऽप्यधिककालव्ययो भवेन्मम यमपुरीप्रेषितस्य तथापि अशीतिवर्षीयायाऽपि वर्षिष्ठाय अन्नपिष्टमर्हते पारिभाषिकगौरीदानदृष्टान्तस्य इदानीमनतिदुर्लभतया विंशद्वर्षसीमानमाक्रामत: केशैरसितैर्मम न किमपि दुर्भावनाकारणमुदपादि ।

प्रकृतमनुसराम:। सौभाग्यातिरेकात् कृपालुना देवेन मे प्रार्थना यमपुरीं सर्वत कामं परिभ्रमणव्यवस्था चानुमोदिता इति परमसुखेनैव अहं तत्रावसम्। अथैकदा मया रौरवादीनां चतुरशीति-

कुण्डाना दुरवस्थादर्शनाभिलाषं सविनय निवेदितो धर्म्मराजो विहस्याह—"भद्र! ते हि नो दिवसा गताः। इदानीं सभ्यतालोकच्छटाच्छुरितायामस्यां विंशशताब्द्यां तादृशानां पुराणप्रसिद्धानां बर्बरोचितानां यातनाविशेषाणां पशुष्वपि युष्माभिर्मर्त्यवासिभी राजविधिद्वारा निषेधितानां, देवपुर्य्यामस्यां प्रकृत्या सदयैरस्माभिरमरैर्मानवेषु प्राणिश्रेष्ठेषु कालप्रभावाद्धीनसत्त्वतया क्लेशबाहुल्यमसहिष्णुषु विधानं कथमपि न युज्यत इति तानि मृद्भिः प्रपूरितानि कुण्डानि। अपि तु रज्जुनिर्माणम्, सर्षपात्तैलनिष्कासणम्, क्षेत्रे रथ्यायाञ्च जलसेकः, उपवनपरिचर्य्या, इक्षुदण्डमर्दनम्, इष्टकाचूर्णनम्, शणसूत्रैर्गोणीवयनम्, राजपथात् कण्टकवृक्षाद्युन्मूलनम्, इत्यादीनि कर्म्माणि अपराधभेदेन शक्तिभेदेन च पापिभ्य आदिश्यमानानि धनोत्पादकतया राजकोषस्य पुष्टिं, तेषाञ्च दुष्कृते प्रतिफलं, भाविजन्मनि तत्तच्छिल्पकर्म्माभ्यासजन्यसंस्कारञ्च झटिति स्मृत्यनुकूलं साधयन्ति। केवल निष्पीड़नेन मे किं फलम्? अपि च पापिनो यथा न भूयः पापेषु निमज्जन्ति, तदर्थं मया नियोजिता उपदेशदातारः सुवक्तारः शास्त्रविदस्तान् शासति। अन्तरान्तरा कारापरिदर्शकाश्च राजनियुक्ता एतदुन्नतये सयुक्तिकव्यवस्था उपदिशन्ति। भवता सर्वतो मम पुरीं परिभ्रम्य एतत् सर्वमालोक्यतामिति। मयाऽपि श्रोतृसुक्यप्रेरितेन तेषु तेषु स्थानेषु परिभ्रम्य समीक्षमाणेन धर्म्मराजस्य तद्दूतयोश्च उक्त्योर्याथार्थ्यं स्फुट गृहीतम्।

यमपुर-निवासिभिः सह संलपता मया देवानां कथ्यभाषाया महान् संस्कारो दृष्टः, यम् अनिवेद्य भवत्सु संस्कार-रसिकेषु क्लान्ताया अपि लेखन्या विश्रामाभ्यनुज्ञानं न प्रदेयं भवेत्। देवलोके संस्कृतभाषैव कथ्येति नात्र कस्यापि वैमत्यस्यावसरः, पर संस्कृतस्यापि पुनः संस्कारो देवैः सुखबोधार्थं नवसङ्कलितव्याकरणे सम्पादितः। यद्यपि तद्व्याकरण समयस्याल्पतया मया नावलोकित, तथापि तत्रत्यानां

मिथ उक्तिप्रत्युक्तित सङ्कलय्य समासतः केचित् संस्काराः प्रदर्श्यन्ते ।—

(क) आवृत्तौ पदयोः सन्धिकार्य्याकरणम् ।

(ख) एकार्थानां बहूनां धातूनां खाद्-अद्-प्सा भक्ष-जक्ष-अश्-भुज्प्रभृतीनामेकतमस्यैव सुप्रयोज्यस्य तिङन्तप्रकरणे ग्रहणमन्येषां वर्जनञ्च ।

(ग) कर्म्मवाच्य भाववाच्ययोः सर्वथा विलोपः ।

(घ) अतीतकाले स्म योगेन लट् विभक्तेः क्तवतु-प्रत्ययस्य वा प्रयोगः, लङ् लुङ्-लिटां वर्जनञ्च ।

(ङ) नामधातुप्रकरणम्, सनन्तप्रकरणम्, यङन्तप्रकरणम्, एतेषां देवभाषागेहार्गलायमानानां व्याकरणान्निर्वासनम् ।

एवं संस्काराः, अन्येऽप्यूह्याः ।

देवलोके न केवलं संहार सदृशामेतेषां संस्काराणां प्रवर्त्तनं जातमपि तु विलुप्तप्रायाया अस्या भाषायाः सम्यग् विलोपं संसाध्य 'हिन्दी'भाषाया विद्यालयेषु पठनपाठनार्थं केषाञ्चिन्नवीनानां देवानां कुत्रचित् संसदि प्राचीनैः सह महत्तरा वाग्वितण्डा श्रुत्वा मया सखेदं चिन्तितं यत्,—हा ! धिगस्माकं वङ्गीयविश्वविद्यालयधुरीणानां कषाञ्चिद्विदुषां संस्कृताध्ययनस्य आङ्गलविद्यालयेषु अवैधतामुद्घो- रनुद्घोष्य अधिजिगांसु-कामाधीनतामात्रमुरीचिकीर्षतामदूरदर्शिनीं बुद्धिम् । अहो ! येषां नाम्ना प्रसिद्धिमद्यापि गच्छतीयं संस्कृतभाषा, सा कालस्य जङ्गम्यमानत्वात् साम्प्रतं तेषामेव पुरात् क्रमशो निर्वासिता भवति, तदलं यजधातुव्यापारेऽपि देवानामबोध्यतया उपयोगरहितां सततस्खलनाशङ्काकूटकलुषितां राजद्वारेऽपि हृतादरामेनां परि- रक्षितुमस्माकमयुक्तिकं चीत्कारबाहुल्येन इति चिन्तयन्तु सुधियः ।

विदितमेवेदमस्ति विदुषां यत् हिन्दुजातीयेष्वेव यमराजस्य अधि- कारः, नेतरेषु म्लेच्छादिषु । इदानीं हिन्दुत्वस्य व्याप्यवृत्तित्वमव्याप्य-

वृत्तिस्त्व वेति अधिकाररक्षायै निनिनीषता यमराजेन निष्क्रष्टस्य हिन्दुलक्षणस्य अद्याप्युद्भावनासमर्थंनाह सादरं व्यज्ञापिषि, भद्र! त्वं शीघ्रं मर्त्यलोकं गत्वा विद्वद्गोष्ठीषु मे संशयं विनिवेद्य अत्र तेषां स्वाक्षरयुक्तामेकां पत्रिकां सगृह्य मत्पुरे यथाकालं पुनरागच्छन् तां स्मृतिं आनयेः, एषोऽहं त्वां प्रेषयामि स्वगेहमिति।

अथैवमभिहित एवाहं भग्नस्वप्न उन्मीलितनयन ऊषालोकेन छिन्नकन्थायामात्मानं शयानं विलोक्य गोविन्दं स्मरिष्यामि नवेति चिन्तया हृतबुद्धिरासं इति शम्। *

---

## कुल-लक्ष्मीः

[ निबन्धकः—श्रीवसन्तकुमारविद्यारत्नः ]

विहितबहुलचेष्टितादूर्द्ध्वं निवर्त्तिते कन्यायाः परिणयकौतुके "निश्चिन्तोऽस्मी"ति मानसमासीद् वसुमहाशयस्य। परं नाङ्कितो विधात्रा तस्य भाग्ये सुखलेशः। वसुमहाशयो घुणाक्षरेणापि तन्नाज्ञासीत्। मनुष्यलक्ष्यातीतं विधातृविधानम्। अतः स निर्द्धारयितुं न क्षमो यद्द्रैतावदानन्देषु गभीरवेदना तिरोहितास्ते। अविद्यमानेष्वपि चिन्ताकारणेषु भावनाया हृश्चिकदंशनं वर्त्तते। ईदृक् सुखस्वप्नोऽचिरेणावसितो भविता। अनन्तरं विवाहाच्चतुर्थे मासि यदा सन्देश आगतः "ललिता विधवा जाता" इति, तदा वसुमहाशयो जडधीरिवाभवत्। पदतलादपासरदिव जगत्, अन्धकारतामुपायादिव चक्षुस्तस्य। कपोलतलसंलीनपाणिर्वसुमहाशयो भूमावुपविशति स्म। कयाचित् कल्पनातीताघटन-घटनया मोहपरायणो जातश्च। दृष्टिवैषम्ये कथञ्चित् शमं

---

* संस्कृतसाहित्यपरिषदो मासिकाधिवेशने पठितोऽयं निबन्धः।

मतं पत्रं वाचितं तेन—"सहसा विसूचिकारोगेण श्रीमान् नरेन्द्रो दिवं गत" इति।

तस्मिन्नेवापराह्णे वसुमहाशयो ललितायाः श्वशुरालयमयासीत्। पित्रागमनवार्त्तामुपलभ्य गलदश्र्वार्द्रनयना ललिता मन्दं मन्दमुपगत्य पितृपदधूलिमग्रहीत्। पित्रा दृष्ट, तदीयैकमात्रकन्या ललिता निराभरणा अरञ्जितपट्टकं दुकूलं दधाना वर्त्तते। सौभाग्यवतीनामग्र्यं चिह्नं सीमन्तसिन्दूररेखा क्वापि अन्तर्हिता। केन निर्दयेन फुल्लत्कलिकेयमकाण्डे अवचिता? कस्याभिशापेन सिन्दूरप्रतिष्ठा चिराय व्यावृत्ता, विसृष्टालक्तक-रस प्रसङ्गौ पेलवचरणौ। स्तिमितोच्छ्वासा सौभाग्यतटिनी। एतावद्भिश्चिन्तासन्तानैर्वसुमहाशयस्य मानसं खिद्यमानतया पुनरधिकं चिन्तयितुं न शक्नोति स्म। स केवलं जडेन पाणिना कन्या परामृशन्नश्रूणि व्यकार्षीत्।

तस्यामेव रात्रौ वसुमहाशयो ललितां स्वगृहं नेष्यतीति श्रुत्वा वैवाहिक श्रीरामचन्द्रो वसुमहाशयस्य करद्वयं परामृश्य प्रोद्गतबाष्पगद्गदमभाषत। 'नरेन्द्रो मां प्रवञ्च्य गत'। वर्त्तमानावसरे स्नुषा कश्चित् कालमत्र तिष्ठतु, अनुमन्यतां भवानिति।" वसुमहाशयो गम्भीरं प्रत्यवादीत् "अत्रस्थेयं कदाचिदपि न जीविष्यति। तदहमद्यैव नेष्यामीमां स्वगृहम्।"

विसर्जनकाले श्वश्रू शोचन्त्याः स्नुषायाः शिरसि करं दत्त्वाह वच्छे। किं कधइस्स दाणीं तुमं जेव्व मम पुत्तओ कण्णआ वि। जहि तहि वा चिट्ठ अम्हाणं किं दु ण विसुमरेहि। तुह ज्जेव एसो घरत्थदा।"

वैवाहिकः श्रीरामचन्द्रः प्रणमन्त्या ललिताया वदनाबद्धदृष्टिर्बहिरास्थानमण्डपे करद्वयमुरसि कृत्वा दण्डायमानस्तिष्ठन् समभाषत—मातस्त्वयि दृष्टाया नरेन्द्रे कथञ्चित् मन्दोत्कण्ठा भवामः। वत्से। बालिका त्वं, तथापि वृद्धश्वशुरं मा विस्मर। अथ कदाचिदस्मै वृद्धाय

प्राणा व्याकुलीभवेयुस्तदा असङ्कोचेनात्रागत्य अस्मद्गेहमलङ्कुर्य्याः, यतस्त्वमेव ज्यायसी स्नुषासु पुत्रकल्पा च, अतो नरेन्द्रे गतेऽपि गृहस्य स्तायाः स्नाप्यन्तर स्थान त्वामेव वृणुते,—आर्य्यपुरक्षो त्वम्।”

इतः पर वर्षद्वयमतीतम्। वत्सराभ्यां ललितायाः पर्य्याप्तं परिवर्त्तनं जातम्। ललिता पित्रा विधवा-वेश ग्रहणात् निषिद्धा, वैधव्याचारशिक्षां च नोपदिष्टा। अतः सा आदरप्रसाधिता, स्फीतपरिवर्ह्ना, ताम्बूलरसरागपाटलितलोलाधरा, कामिनीजनोचितवलयितचिकुरा, यथेच्छं सञ्चरन्ती व्यहार्षीत्। किन्तु वसुगृहिणी दुहितुरामिषभोजनं कदापि नानुजज्ञे। कन्यायाः शिक्षार्थं पित्रा गृहशिक्षयित्री नियुक्ता। पिता मनस्यकरोत्—यदि कन्यया शिल्पकर्म्मणि मनो दत्तं स्यात्, तदा अतीतवोभत्स-संसारभावो मानसपटादपगतो भवेत्। किन्तु विधाता कदा कस्य हृदि अनन्यगोचरीभूतं कीदृग्विध चित्रम् अङ्कयति कस्तत् व्याकुर्य्यात्? चिन्तितं पित्रा, कन्या सर्वमेव विस्मृतवतीति। सत्यं, किन्तु सा कुसुमकल्पित-तल्पावसिताम् अमूं रात्रिं, तथा अपरिचितस्यापि चिरपरिचितायमानस्य कस्यचित् सादरसम्भाषणञ्च विस्मर्त्तुं नालम्। प्रासावसरायां अमुष्यां यामिन्यां द्युतिमद्दीपालोकोद्भासितं तदेव मुखमतर्कितं तदीयमानसे अस्फुटोपलक्ष्यमाणमजृम्भत।

तदा फाल्गुनिकप्रभातम्। कूजद्विहङ्गकाकलीकलकलमुखरिता भुवनान्तरालभागा। गलितकनकावदाता तरुशीर्षनिषिक्तप्रभातरागविकाराः परिस्फुरन्त आसन्। सर्वतो नवनवामन्दस्पन्दोद्वयतिकरो विराजते स्म। ललिता गृहवातायने समुपोढनिद्राभरालस-निमीलिततारका किमप्यचिन्तयत्। इतस्तस्या माता स्वामिनं पृच्छति स्म “आगामिनि सप्ताहे देवरस्य विवाहमुपलक्ष्य ललिता प्रेरयितव्या न वे”ति। पित्रा भणितं—‘न प्रेरयितव्या’ इति।

एषा कथा ललिता चिन्तितवती। अस्मिन्नवसरे अन्तरात् केनापि आहूता सा—“मातः क्वासीति”। अहो स्निग्धसौम्यं सम्बोधनम्।

ललितायाः प्रतिभातं यन्नाय खलु भारतोनिर्घोषोऽसंस्तुतः।" कुतोऽपि एवं स्वरः श्रुतस्तया। सहसा रङ्गमञ्चस्य यवनिकेव तदीयचित्तमञ्चादावरणं किञ्चिदपसारितम्। तन्मनसि अतीतो वृत्तान्तः कश्चित् प्रत्यभात्। कोऽपि वृद्ध एव निर्भरस्नेहगर्भमधुरया वाचा तामाहूय स्वगृहं नीतवान्। तथैव स्निग्धया गिरा आशीर्वादं कृत्वा अनिच्छन्नपि प्रस्थितोऽभूत्। वेपितान्तःकरणा स्खलितचरणा ललिता समभ्येत्य पितुर्वाक्यमश्रौषीत्—"नाहं कन्यां प्रेषयिष्यामी"ति।

"कथमिव ? अदृष्टदोषतो विधिना वञ्चितोऽस्मि अपत्यस्नेहात्। सह परलोकप्रवासिना पुत्रेण किमहं कर्त्तव्येनापि विनाकृतोऽस्मि ? ललिता मे ज्यायसी स्नुषा, मदीयसंसारभावस्य भाविनी गृहिणी।"

"स खलु सम्पर्को भवतः पुत्रेण सहैवावसितः"

"असम्भवमिदं, नहि सैकतसेतुबन्ध इव हिन्दुविवाहः क्षणभिन्नो भवति। पाषाणोत्कीर्णरेखापात इव न हि शोकस्रुतिधौतो भवति।"

वसुमहाशय ईषत् कर्कशकण्ठेनावादीत्। "मतान्तरं न कुर्य्याम्।"

"भवतु, किन्तु दीयतां मातृदर्शनावसरः। तां वारमेकं दृष्ट्वैव अपसरामि।"

"नहीयं मे वासना यत् ललिताया मनसि दारुणा स्मृतिः पुनर्जागरूका भवतु।"

क्षणेऽस्मिन् जातामर्षो वृद्धो दृशमितस्ततो विक्षिप्याह—"तदा किमयं जनरवः सत्यो यद्भवान् स्वकन्यकाया—मम स्नुषायाः पुनर्विधवावेदनाय कल्पते ?"

बन्धुजन-जल्पितविवाहप्रसङ्गे ललिता हृदि झटिति केनचिदिव निष्ठुरेण भृशमभिहता। तन्मनसि कस्यचिद् वदनं व्यलसत्। समुपोढञ्च चेतसि "विवाहिताऽस्मि" इति। अधुनैव तया श्रुतं "न हि विवाहः सैकतसेतुबन्ध इव क्षणभिन्नो भवति" इति, तथापि पितुरेत-

स्मिन् गर्हिते कर्म्मणि कथमयं व्यवसायः ? न जानाति पिता, यदय देहः परायत्तः ? अथापरोक्षत्वात् उत्तमाणस्याधिकारो लुप्त किमु ? निजकर्म्मविपाकात् गत एव, न निवर्त्तिष्यते स मे प्रियः। किन्तु यदव-शिष्यते कथ तस्माद् वञ्चिता भवेयम् ? ईदृशं स्नेहमय श्वशुरं, स्नेहमयीं श्वश्रूदेवीञ्च कथ त्यजेयम् ? स्वगृहं यास्यामि।" एवमचि-न्तयत् सा।

ललिता निम्नभूमिकामेत्यापश्यत् श्वशुरस्खलित'। न किञ्चिदपि उक्त्वा सा मन्दं मन्दं स्वकक्षमेत्य अशयिष्ट। अन्तर्दृष्ट्या सा मृत्यु-मलिनं मुखमेकमपश्यत्। अदो मुख निश्चलतारकं चित्रार्पितवच्चक्षुर्भ्यां तस्यां दृष्टिं विधाय एवं ब्रुवदिव प्रतिभाति स्म—"मयि विस्मृति-रेतेषु युज्यते, किन्तु त्वया भ्रान्तिमत्या न भवितव्यम्।"

परेद्युः सा एकं लेख प्राप। तत्र श्वश्रूदेव्या लिखितमिदं "वच्छे! ईदिसो मह निच्चयो तुमं अम्हाण न विसुमरिदा, विसुमरिदुं न सक्-कणोसि। तुमं आनिदुं तुह ससुरो मए पेसिदो। तुमं पेरिदुं तुह पिदुणो मदो नत्थि किंदु अह तुह मद उवलिच्छु लेहमिम लिहामि। जइ घरत्थदासु विअक्खणए न होदव्वं ता तुमं एव्व अवरज्झा। अदो ज्जेव पुणोवि आआदणि दिअहे तुह ससुरं पेरइस्सं। तस्स समीवे लज्जं ण करिहि सव्वं एव्व पकासिदव्वं'। तुमं अहं अपच्चनिव्विसेसं सिनेहं करेमि, अदो तुमं इदो आनिदु एत्तिअं मे आग्गहो"त्ति।

तुह आसीव्वादइआ अत्ता

एकघटिकान्तरे ललितायाः माता असम्भृतभूषणां क्षिमप्यमानु-षिकगरिमोपरूढवदनां कन्या पुरतो दण्डायमानामपश्यत्। आपात-दृष्ट्या सा स्वनेत्रे न श्रद्दधे, पश्चात् यदा सा अश्रौषोत् कन्यायाः वक्ष्य-माणा गिरं—"मातः! यामि श्वशुरालयम्।" तदा मातुर्नयने अश्रु-भाराक्रान्ते अभूताम्। सा करणान्तर्गतविकारविक्षवपर्य्याकुला-न्तरमाह—"तर्हि किं अत्थि तुह दुम्भगी ?"

"तथापि यदेवास्ति कथ तस्माद् वञ्चिता अस्मि मातः" ? अस्मिन्नवसरे दासी एत्य व्यज्ञापयत् "अज्जे। ललिदाए अज्जए ससुरो आअदो।"

क्रन्दनरता मातर प्रणम्य निम्नभूमिकायामवतीर्य्य वाष्पावरुद्ध्य-माणकण्ठेन, शिरसा नमितेन, एकेनैव श्वसितेन अवादीत् "तात। स्वगृहं प्रापयतु माम्।"

पश्चाग्रसपिण्डितपरिपतनोद्गमवाप्याश्रु कणान् चिप्र करतलेन प्रमृज्य ललितायाः श्वशुर' प्राह "मातस्त्वमेव मे कुललक्ष्मीः।" इति

वसुमहाशयः कन्याया विसर्जनकाले साश्चर्य्यमीचमाणस्तनयाननं विस्मयस्तम्भितवाक्शक्तिर्दण्डायमान आसीत्। सुचिर सुनिपुणमपि विचार्य्य निर्णेतु नाल, केन महीयसा शक्तिबलेन कन्या मातापितरौ विहाय श्वशुरमनुवर्त्तमाना परवासमयासीदिति।

---

## श्रीकृष्णचैतन्य-चरितम्

( पूर्वतोऽनुवृत्तम् )

### तृतीयः परिच्छेदः

[ निबन्धकः—भक्तिसागरः श्रीकालीहरदासवसु विद्याविनोदः ]

मूकं करोति वाचाल यस्य लीलाकथा, तस्य श्रीगौरहरेर्नवद्वोप-विजय श्रुत्वा आनन्दाप्लुताः सर्वे नागरिकास्तं द्रष्टुमधावन्। गङ्गा-विचुम्बितो नवद्वीप आनन्दगङ्गाप्लावितोऽभूत्। भक्ताः सर्वे शुभवार्त्तया सञ्जीविता भावमयं त परिवव्रुः। श्रीगौरचन्द्रस्तीर्थामृतकथा श्रावयित्वा सर्वान् विस्मापयति स्म। ते च तस्य भावामृततरङ्गताण्डवान् परि दृश्य विनयमधुरभाषितानि चाकर्ण्य सद्यस्मुग्धा अभवन्। पादोदक-तीर्थं वर्णयन् श्रीशचीनन्दनो नयनधारया प्लावितोऽभूत्। 'निमाइ'

नाम्नो महोद्धतप्रकृतेर्बालकस्य एवंविधं भावान्तरम् अभावनीयपरिवर्त्तनञ्च दृष्ट्वा सर्वे परमविस्मयाविष्टा, किंकर्त्तव्यविमूढत्वं लेभिरे।

अतः शुक्लाम्बरब्रह्मचारिणश्चाऽभवने भक्तगोष्ठी अघटत। श्रीशचीनन्दनस्तत्र प्रविश्य निविश्य प्रेमातिभरेण स्तब्धः सन् तूष्णीं स्थित्वा सहसा द्विगुणतरप्रेमोच्छ्वासेन रोरुद्यमान उन्मत्त इव प्रसह्य गृहस्तम्भमेकमालिङ्ग्य तं बभञ्ज। अस्माद् भूमौ पतित्वासौ "क्व गतोऽसि कृष्ण" इत्युच्चार्य्य विलुण्ठितोऽभूत्। इत्यभिधीयमानोऽपि कृष्णः किञ्चित् प्रतिवचनं प्रतिपेदे न किं, तत् भावमयः प्रभुरेव अजानात्। तत्रत्या अन्ये भक्ताश्च प्रेमाकुलचित्ता रोदितुमारेभिरे। अपरप्रकोष्ठे तिरोहितो गदाधरः गद्गदिकया रुद्धकण्ठो रुरोद। एका क्रन्दनवत्य निर्घोषा दीर्घनिश्वास-वात्या वाति स्म। अविरलनेत्रासारैः सर्वे सिक्ताः कम्पमानाश्च। अकैतवप्रेम्णोऽपूर्वप्रकटतया ते परमानन्दं प्रापुः। चिरेण प्रभुः पुनः संज्ञां लब्ध्वा नेत्रे ममार्ज। निर्वृताः सर्वे प्रभुणा सह सुखेन मृदुमधुरमालप्य अपनीतकुतूहलाः स्वं स्वं गृहं प्रतिगताः। प्रभुणापि तथा कृतम्। पुत्रस्य पूर्वरागजनितां दैन्यार्त्तिम् उन्मत्तताञ्च दृष्ट्वा माता नितरां भीताभूत्।

प्रभुः श्रीगौरचन्द्र इदानीं श्रीभगवत्प्रेममदभरेण क्षिप्तः कालं नयति। चतुष्पाठ्यां केवलं कृष्णकथा भवति। अतोऽध्यापना निरुद्धा। अनभिज्ञा जनाः शिवाघृतादिकं व्यवस्थाप्य तं पाययति। केवलं श्रीवास 'एष न रोग अपि तु प्रेमविकार' इति स्थिरीचकार। माता श्रीशची दयिता श्रीविष्णुप्रिया च तच्छ्रुत्वाश्वस्ते निर्वृतिं प्राप्य कथं कथमपि जीवितं धारयतः।

कतिषु दिनेषु गच्छत्सु शुभेऽहनि श्रीवासनाम्नः पण्डितस्य श्रीमदङ्गणे श्रीमहानाम-यज्ञस्य सुमङ्गलघटः स्थापितोऽभूत्। अत्र श्रीश्रीरासमण्डले यथा गोपिका गायन्ति स्म तथा मुकुन्दादिभक्तवृन्दं

श्रीगौरचन्द्रं परिवेष्ट्य मृदङ्गकरतालतालतरङ्गितं हरिनामामृतरसायनं श्रीसङ्कीर्त्तनं करोति। मध्ये लावण्यकर्पूरोज्ज्वलरसनिधिः श्रीशचीसूनुः शृणोति, आनन्देन परमं नृत्यति च।

"कृष्ण! क्व गतोऽसि, तव मधुरदर्शनं विनाहं कथं जीवामी"ति उच्चार्य्य सततं गौरः आक्षिपति, जङ्घबाहुर्मुहुः क्रन्दति, धूलिषु लुठति, भृशं प्रलपति, कृष्णगुणादिकं कीर्त्तयन् नृत्यति। तस्य स्वर्णगिरिगौराङ्गस्य नित्यनवभावप्राबल्यं निरीक्ष्य सर्वे भक्तास्तं स्तुवन्ति। श्रीवासाङ्गणे प्रभोर्महाप्रकाशः। अतः परं यथाकालं गोदावरीतीरे महामहाप्रकाशः। अनेन प्रकाशद्वयेन तुल्यो देवप्रकाशः कलिना अन्यत्र मानुषे न दृष्टः।

बहूनि तीर्थानि परिभ्रम्य इदानीं पद्मावतीसुतः श्रीनित्यानन्दो नवद्वीपधामनि स्थितिं चकार। श्रीअद्वैताचार्य्योऽपि शान्तिपुरात् समागतः। अन्ये च भक्ता नानादिग्देशादागत्य तारकाश्चन्द्रं यथा तद्वत् श्रीगौरशशिनं संवेष्ट्य विराजमाना आसन्। एवमानन्दमयी वैष्णवगोष्ठी तस्मिन्नेव समये यथायुक्तं विरचिता। प्रेममधुरेण भगवन्नामानुकीर्त्तनेन निशा आशाश्च सुखरिता मधुरीकृताश्च। श्रीवासाङ्गणं चिदानन्दद्युतिविभातं सततं रसोल्लासितम्। प्रेमानन्दौघैः समग्रः श्रीनवद्वीप आप्लावितः।

प्रभुणाज्ञप्तौ नित्यानन्दहरिदासौ कियत्कालं चेष्टमानौ निष्फलावपि अवशेषे प्रशस्तेऽहनि जगतः स्मरणीये च बहिर्निर्गत्य "जगामाधा" इतिनामधेयं दस्युप्रकृति पापिद्वयं पथि मदमत्तं प्राप्य हरिनामामोघास्त्रेण तयोः पापमूलमुत्कृत्य मनसि एकैकं भगवद्विषयकनिर्मलबुद्धिबीजमुप्त्वा तावुदधरताम्। अनेनाद्भुतकर्म्मणा श्रीचैतन्यनित्यानन्दयोरसामान्यो महिमा मधुरिमा च दिक्षु विघोषितौ, अलौकिकगुणगरिमा सर्वत्र सुकीर्त्तितः। मद्यपो ब्राह्मणो माधवः (माधा इति भाषा) पानोन्मत्तो मृत्कुम्भं स्कन्धे निधाय नित्यानन्दस्य शिर

आहन्ति स्म। रक्तधारा-प्लावितवपु: श्रीनित्यानन्दस्तथापि माधवं सानन्दं परिष्वजते स्म। अत्यद्भुतमेतद्दृष्ट्वा जगन्नाथस्य (जगा) साधोरङ्गे रक्तपात: कृत इति पश्यतश्चित्तमद्रवत्। "हरिबोल हरिबोल" इत्यभिदधता श्रीनित्यानन्देन दिव्याङ्गस्पर्शदानेन सादरं संवर्द्धमानौ जगन्नाथमाधवौ भक्तिसुधामास्वाद्य तस्य चरणयोर्लुठत: स्म।

कतिषु दिनेषु गतेषु श्रीगौर: स्वस्वरूपं प्रकाशयन् विष्णुखट्वायामुपविशति स्म। आनन्दखनि: श्रीनित्यानन्द: तच्छिरसि छत्रं धरति स्म, कोऽपि चामरं वीजयति स्म, श्रीगदाधरस्ताम्बूलं ददाति स्म। अन्ये च निजवाञ्छानुरूपया सेवया आत्मचरितार्थतां साधयन्ति स्म।

चाँद इत्यभिधान. काजी यवनशासक: सङ्कीर्त्तनबाधक: सततं भक्तगोष्ठीमुत्पीडयन्नासीत। तस्य दमनं कृत्वा सवंशं तं धर्मसेतुर्वीरसिंह: श्रीगौरहरिरुददीधरत्।

एवमतिक्रामति काले एकस्मिन् निशान्ते चतुर्विंशतिवर्षीय: सर्वधुरीण. प्रेमाब्धीन्दु: श्रीगौर: स्वभावमधुरेण प्रेम्णा सर्वान् विमोहयन् शोकसिन्धौ निमज्जयंश्च गृहं त्यक्त्वा गङ्गामुत्तीर्य्य काञ्चननगरं (काटोया) ययौ। माता श्रीशचीदेवी "हा हतास्मीति—हा निमाइ" इति च क्रोशति स्म। श्रीविष्णुप्रिया असूर्य्यम्पश्यापि अन्तर्दाहेन दग्धा बहिर्लुण्ठिता विलपति स्म। श्रीनवद्वीपपुरी प्रदीपशून्यया चिररजन्या कवलिता केवलमश्रूणि विसृजति स्म पशवो रुदन्ति स्म, पक्षिणो रुदन्ति स्म, तरव: शोकभरान्नमन्ति स्म, लता लुठन्ति स्म।

गीर्वाणवन्द्य: काञ्चनगिरि श्रीगौरहरिर्नवद्वीपद्विजराज: काञ्चननगरं गत: सन् तद्दीप्यते स्म। तत्रत्या: सर्व्वे अमृतनिधेस्तस्य रूपमाधुरीमास्वाद्य मुग्धा:। स तत्र श्रीकेशव-भारतीमनुनीय मस्तकं मुण्डयित्वा जन्मनोऽवधि चतुर्विंशवर्षस्य माघे मासि तस्मात् सन्न्यासं जग्राह। श्रीकृष्णचैतन्याभिधानो नवीनसन्न्यासी प्रेमोन्मत्त: "हा कृष्ण क्वासी"ति आकुलं गत्वा श्रीवृन्दावनाभिमुखं चलित:। एवं स

राढ़े दिवसत्रय बभ्राम। भ्रमणकाले श्रीनित्यानन्दस्तमनुययौ, छलेन च तं शान्तिपुरमानिनाय। श्रीअद्वैतस्तद्य स्वगृहं नीत्वा सानन्दं सोपचारमपूजयत्।

अनन्तरं प्रभोरादेशात् श्रीअद्वैतचन्द्रः श्रीशचीं नवद्वीपवासिनः सर्वानन्तरङ्गभक्तांश्च निजगृहमानिनाय। सप्ताहाधिकः कालस्तत्र सङ्कीर्त्तननिविडानन्दमहोत्सवेन तैर्नीतः। अनन्तरं नवद्वीपवासिना प्राणप्रियः प्रभुः परमभक्त्या मातरं प्रणम्य प्रदक्षिणीकृत्य सर्वेषां वचांसि विदार्य्य गृहसुखसुखे अनलं प्रदाय च श्रीनीलाचलं प्रतस्थे।

---

## योग-रहस्यम्

( पूर्व्वतोऽनुवृत्तम् )

[ निबन्धकः—साधनसमरपणेता ]

### अनुभूतविषयासम्प्रमोषः स्मृतिः ॥११॥

अथ पञ्चमीं वृत्तिं निरूपयत्यनुभूतेति। अनुभूतविषयस्य पूर्वानुभूतप्रत्ययस्य योऽसम्प्रमोषोऽनपहरणमविलुप्तिरिति यावत्, सा स्मृतिः। पूर्वानुभूतप्रत्ययसदृशप्रत्ययोदय इत्यर्थः। तत्र परमा चरमा च स्मृतिर्ब्रह्मैकविषयिणी ब्रह्माहमस्मीति। अवरास्तु ग्रहणग्राह्यविषयाः स्मृतय इति। व्याख्याताः द्रष्टृवृत्तिसरूपताः पञ्च, सप्तवृत्तिवादिनः संशयकल्पनाख्ये द्वे वृत्ती वदन्ति, यथायोग्यं प्रमाणादिषु त्रयेष्वन्तर्भावात्तत्र पृथगुक्तिः। प्रतिनियतं विचारणीयोऽयमाविर्भावो जाग्रदाद्यवस्थात्रयेषु यथायोग्यमेतासां चितिशक्तिप्रवाहरूपाणां वृत्तीनामिति ॥ ११ ॥

## अभ्यास-वैराग्याभ्यां तन्निरोधः ॥१२॥

अथ कथमासां पञ्चवृत्तीनां निरोध इत्याशङ्काभ्यामेति। अभ्यास-वैराग्याभ्यां वक्ष्यमाणलक्षणाभ्यां तन्निरोधस्तासां वृत्तीनां निरोधो भवेदासन्नतम-योग-मञ्जिष्ठेति भावः। नान्यः पन्थाः कश्चिदृतीय इति। न च योगस्यैव निरोधहेतुत्वमुक्तमत्र तु तद्द्विवृद्धं वच इति वाच्य योगद्वारेणैवानयोर्हेतुतेति। यदासन्नतमो भवति योगश्चित्त क्षोभ्मुखोभवति निरोधाय तदेवाविर्भवति लक्षणद्वयमभ्यासवैराग्यरूप-मिति विदुषामनुभूतिः॥ १२॥

## तत्र स्थितौ यत्नोऽभ्यासः ॥१३॥

द्वयोरेव निरोधोपायता दर्शिता तत्र वैराग्यबीजमप्यभ्यास इति मन्वान आदौ प्रधान निरोधोपायं निरूपयति—तत्रेति। तत्र योगी सत्यज्ञानादिलक्षणे द्रष्टुः स्वरूपे या स्थितिस्तस्यां; यद्वा तत्र स्थितौ तस्मिन् द्रष्टुः स्वरूपावस्थाने यो यत्नः पुनः-पुनरवस्थानप्रयासः सोऽभ्यास इत्यर्थः। ब्रह्मविचार इत्यस्य नामान्तरम्। ब्रह्मणि विचरणम् एव विचारो न तु वाचालोचनमात्रमिति दिक्। वृत्तिसारूप्यमापन्नेऽपि द्रष्टरि सच्चित्सुखात्मके स्थितिप्रयत्न एवाभ्यासोपक्रमस्ततः क्रमेण श्रीगुरुकृपाबलेन बुद्ध्यादुपसंहृतात्मबोधस्य समायाति स्वरूपस्थिति-प्रयत्नरूपोऽभ्यास इति सर्वसम्प्रदायानुमोदितो निरुपद्रवः श्रुति प्रदर्शितः पन्थाः॥ १३॥　　　( क्रमशः )

---

# रजनी

( पूर्वतोऽनुवृत्ता )

[ निबन्धिका—श्रीमती रेणुदेवी ]

अहन्तु प्रतिदिनमेव गृहीत-कुसुमसम्भारा मित्रमन्दिरं गच्छामि, किन्तु प्रायशः शचीन्द्रस्य वचनं मे श्रवणपथं नावतरति। यदा तु सौभाग्यप्रकर्षपरिपाकेणामन्दानन्दनिष्यन्दि तत् वचनामृतं श्रोत्रपथेन मे हृदयमवतरति तदा कां का दशा समनुभवामीति नाद्यापि स्वयमपि निर्वक्तुमलमस्मि। वर्षासु यथा जलभृता जलदा आनन्देन शब्दायन्ते, ममापि तथैव विधानाय मनोरथः प्रावर्त्तत। प्रतिदिनमेव चिन्तितं, तस्मै वितरामि कुसुमस्तवकोपहारम्। किन्तु कदापि न मे वासना चरितार्थतामलभत। प्रथमं तावत् लज्जैव प्रतिबन्धकतामाचरत्। किञ्च मूल्यं दातु समुद्यते तस्मिन् कथं नु तत् ग्रहीतुं शक्नोमि, कथं वा प्रत्याख्यातुम्? सुतरां दुःखेन गृहं प्रति प्रतिनिवृत्ता पुष्पेण निर्मितवती कामपि मूर्त्तिं शचीन्द्रस्य, किन्तु कीदृशी मूर्त्तिर्निर्मितेति न ज्ञात न तु दृष्टेति। किञ्च प्रतिदिवसं मम तत्र गमनेन किञ्चिदचिन्तनीयं फलं समुत्पन्नं तदद्यापि न ज्ञातवती। अथैकदा सन्ध्यासमये मात्वं शयाना निद्रिताहं सहसा पित्रोरालपतोः स्वरसंयोगेन प्रबुद्धा श्रुत्वा च मम नाम, कौतूहलेन निद्राव्याजेन निःशब्दा श्रुतवती यन्माता वदति "तर्हि किं स्थिरप्रायं जातम्?" पितावदत् "स्थिरमेव, किं तादृशस्य धनिनो वाक्यं कदापि मिथ्या भवितुमर्हति? अन्धत्वमेवैको दोषः। नो चेदेवंविधा तपोभिरपि न सुलभा। न च तादृशानां वचसि कर्मणि च वैषम्यं भवति?" माताब्रवीत् "अपरे कथमेतत् करिष्यन्ति"? पिता समुवाच "एतत्त्वया नावगम्यते यत्ते न वयमिव दरिद्राः, सुद्राणां सहस्रद्वयं तेषामकिञ्चित्करम्। सुतरा-

मिदं दास्यन्ति, किं त्वया नावगत यत् ते दरिद्रा इव धनं बहुमन्यन्ते। यस्मिन्नेवाहनि लवङ्गलता रजन्या. विवाहप्रसङ्गमकरोत्, ततः प्रभृत्येव सा प्रतिदिवसमेव तस्याः समीपमुपसर्पति। लवङ्गलतया शचीन्द्रः पृष्टः किं कश्चित् धन गृहीत्वा नयनहीना परिणयति न वा ? इदमाकर्ण्य रजन्या मनसि सञ्जात यदसौ करुणया परिणय मे सम्पादयिष्यतीति। ताञ्च प्रतिदिनमेव गच्छन्तीमवलोक्य परिणयार्थमियमतीव समुत्कण्ठितेति विदित-तदभिप्राया जाता। कथ न वा वयस्यया नया तथा भवितव्यम् ? शचीन्द्रश्च धनेन हरनाथवसु स्वमतवर्त्तिनं विधाय गोपालमपि सम्मत चकार। कथं विवाहो न भविष्यतीति ?" जानाम्यहं गोपालं; स हि रामसदयस्य कर्मचारिणो हरनाथस्य त्रिंशत्वर्षदेशीय पुत्रः, वर्त्तते च तस्यैका पत्नी, सन्तानहीना च सा, अतः सन्तानार्थमन्यामपि सा ग्रहीष्यति। धनलोभेन हरनाथोऽपि सम्मतः। धनार्थमेव वयसा विंशतिवर्षदेशीयया कन्यकया सह पुत्रस्य परिणय सम्पादयिष्यति। धनेन च जातिं स्वायत्तां विधास्यति। पितरौ मम महतानन्देनानन्दितौ बभूवतुः; मम तु शिरसि गगनमिव निपतितम्। परदिने च समवधारितं मया नाहं भूयो लवङ्गलतासमीपं गमिष्यामि, मनसा च अतयो दग्धमुखीति सा तिरस्कृता। लज्जया मरणाय इव मनोरथः समुत्पन्न। क्रोधेन च लवङ्गलतां प्रहर्त्तुमिव प्रवृत्तिरुत्पन्ना, दुःखेन च समागत रोदनेन। किं कृतं मया लवङ्गलतायाः यत् सा मां प्रति एतादृशमुत्पीड़नं विधातुमुद्यता। चिन्तितञ्च मया, यदि धनवत्त्वमेवोत्पीड़नसचिवं सुखमुत्पादयति, तर्हि किं जन्मान्धामिमां चिरदुःखभागिनीमपहाय नान्यत् किञ्चिदुत्पीड़नपात्र समासादितम् ?

भूयश्च मया मनसि निर्द्धारित, नहि नहि भूयोऽप्येकवारं गमिष्यामि, ताञ्च एवमेव तिरस्कृत्य प्रत्यागत्य न पुनर्गमिष्यामि, न वा करिष्यामि पुष्पविक्रयं, न वा ग्रहीष्यामि तया प्रदत्ताः मुद्रा। यदि जननो तस्यै

समुपहृत्य प्रसूनानि मूल्यमादत्ते नैवमपि ग्रहीष्यामि तेन धनेन संगृहीतमन्नम्। एवञ्चेत् समुत्पन्नं मरणमपि मे श्रेयः। भूयश्च मया चिन्तितम्, एव कथयिष्यामि किं धनवत्त्वमेव परपीडनं न व्यभिचरति? कथयिष्यामि ताम् अन्धेयमिति ज्ञात्वा किं दयापि न समुत्पद्यते? पृथिव्यामस्यां यस्याः काचिदपि सुखकणिका न वर्त्तते, अपराधमन्तरेणैव तामेवं दुःखभाजनं विधाय कीदृशं ते सुखम्? एवं यथा यथा चिन्तयामि एवमेवं वक्ष्यामीति, तथा तथा परिप्लाविते मे नयने वाष्पभरेण। मनसि च भयेनैव समुत्पन्नम्—अथ कथनसमये भ्रान्तिः समुत्पन्ना स्यात्।

भूयश्च यथासमयं गतास्मि रामसदयगृहं, कुसुमानि न नेष्यामीति निर्णीतं किन्तु रिक्तहस्तायाः गमनमपि लज्जावहं; किं व्याजीकृत्य वा गमिष्यामि। अतः पूर्ववद् गृहीतवती किञ्चित् कुसुमं किन्तु अद्य मातरमनुक्त्वैव चलितास्मि। दत्तानि कुसुमानि। तिरस्करोमीति तस्याः समीपमुपविष्टा। किन्तु कथं प्रसङ्गः समुत्थापयितव्यः, हरि, हरि! कथमहं प्रारभे? का प्रारम्भकथा? यदा सर्वतो वह्निः प्रज्वलति, प्रथमं क क्रियतां वारिसेकः। न प्रवृत्ता कापि कथा। विलुप्ता मे कथोपक्रमशक्तिः। समागतमेव क्रन्दनेन।

अथ मे सौभाग्य-योगतः स्वयमेव लवङ्गलतया समुत्थापितः प्रसङ्गः "अन्धे, विवाहस्ते भविष्यति।" अहन्तु ज्वलन्तीव रुषा समभिहितवती "भस्म, भविष्यति।" तया प्रत्यभिहितं "कथमिति? स्वयं शचीन्द्रनाथो विवाहस्य प्रवर्त्तयिता कथं न भविष्यतीति।" मयापि नितरां जाज्वल्यमानया समभिहितं "कथं, कस्तावद्दोषो मया विहितो युष्मासु?" तयापि क्रुद्धया प्रत्यभिहित 'आः! मरणं! न किं सम्मतस्ते विवाहः?' शिरश्चालयन्त्या मया प्रत्युक्तं 'नहि'। लवङ्गलतया नितरां कोपेन लोहितायमानया प्रत्यभिहितम् "आः पापे, कुत इदम्? कथं न ते रोचते विवाहः?" मयोक्तम् "अयमेव मे मनोरथः।" मन्ये लवङ्गलतया सन्दिग्धं—अन्धास्मीति। न चेत् कथं विवाहे न सम्मतास्मीति।

सा महता कोपेनाभिभूता "आः दग्धं, अहं ब्रवीमि तूर्णमपेहि, न चेत् सम्मार्जनीमार्जनया विताड़यिष्यामी"ति प्रोवाच। अहमुत्थिता। द्वाभ्यामेव मे निरालोकाभ्यां नयनाभ्यां निर्गतान्यश्रूणि। लवङ्गलताया निगूहमानैव प्रत्यावृत्ता। गृहं प्रति प्रत्यावर्त्तमानया च मया सोपान-मासाद्य भूयश्चिन्तितं "हन्त! न मया कापि तिरस्कारकथा प्रवर्त्तिता।" अकस्मात् कस्यापि पदशब्दः समाकर्णितः। अन्धस्य श्रवणशक्तिर्नैसर्गिकीं प्रखरतामासादयति। द्विः त्रिर्वा श्रुतः, स पदशब्दो मे परिचितः कस्यायं पदशब्द इति। तस्मिन् सोपानमार्ग एव समुपविष्टास्मि। स शचीन्द्रनाथः प्राप मे समीपं, दृष्ट्वा च मां तत्र स्थितः। मन्ये विलोकितं तेन मे नयनजलं, पृष्टञ्च "कथं? रजनी?" विस्मृतं मया सर्वं, विस्मृतः क्रोधः, अपमानोऽपि दूरमपयातः, दुःखमपि समतीतम्। केवलं श्रवणयोर्मे ध्वनितमासीद् 'केयं रजनी'ति। न मया प्रत्युत्तरं प्रदत्तं, चिन्तितञ्च "भूयः पृच्छतु, श्रुत्वा शीतलं भवतु मे श्रवणद्वयम्।" तेन पृष्टं "रजनि कथं रोदनपरासि?" हृदयं मे परिपूरितमानन्देन। प्रावर्त्तत तीव्रेण वेगेन नयनयोरश्रुप्रवाहः। भूयोऽपि पृच्छत्विति मयापि मौनमालम्बितं, चिन्तितञ्च सर्वथाहं भाग्यवती यदहं, विधात्राहं नयनहीना कृता न वधिरेति। भूयोऽपि तेन जिज्ञासितं, कथं रोदनपरासि, किं केनचित् किञ्चिदभिहितम्? हन्त! यदि तेन सह कथोपकथनसुखं जन्मन्यस्मिन् सकृत् संघटितं, कथमिदं त्यजामि, तस्मादभिहितवती "तिरस्कृतास्मि कनिष्ठया मात्रेति।" अथ तेन किञ्चित् स्मित्वा प्रत्यभिहितं "मैवं कनिष्ठमातुर्वचनं गणयेः। तस्या मुखमेतादृशमेव. किन्तु मनसि न कोपस्तिष्ठति। आगच्छ मया सह, इदानीमेव सा श्रावयिष्यति श्रवणप्रियं वचनम्।" तेन सह कथं न गमिष्यामि। तेनाहूतायाः किमस्ति कश्चित् कोपस्यावसरः? उत्थिताहं, तेन सह प्रवृत्ता च गन्तुम्। स सोपानारोहणे प्रवृत्तः, अहमपि तमनुसृता। तेनोक्तं "न त्वं किञ्चिदपि पश्यसि,

कथं सोपानमारोहसि ? न शक्नोषि चेदहमेव त्वा हस्ते समादाय नयामि।" प्रकम्पितं मे सर्वमेव शरीरं, रोमाञ्चाश्च प्रत्यवयवं प्रादुर्भूताः। गृहीतश्च तेन मे हस्त.। भवतु तेन गृहीतो मे पाणिः। निन्दन्ति चेत् निन्दन्तु लोकाः। व्रजतु मे सफलतां नारीजन्म। अहं हि विनैव कस्यापि सहायताम् अस्या नगर्याः क्षुद्रेष्वपि मार्गेषु समर्थास्मि भ्रमितुम्। किन्तु न तं निषिद्धवती पाणिं गृह्णन्तम्। अयि, भोः, किं कथयामि, कथं वा कथयामि, न प्राप्तास्मि समुचिता भाषाः। तेन गृहीतो मे पाणिः। प्रभातप्रफुल्लेन सरसिजेन दलपरम्परया परिवेष्टित इव मे प्रकोष्ठ । सुग्रथितया 'गोलाप'मालयेव केनचित् परिभूषितो मे हस्तः। अन्यत् सर्वं विस्मृत मया। मन्ये तदा एक एव मनोरथः समुद्भिन्नः कथमिदानीमेव न मे मरण भवति। मन्ये तदा द्रवीभूय जलरूपतामिव समासादयितुमैच्छम्। एवमेव मे मनोरथः समुत्पन्नः यदावा प्रसूनयुगलरूपेण एवमेव सश्लिष्टौ कस्मिन्नपि काननपादपे एकस्मिन्नेव वृन्ते तिष्ठावः। अन्यत् यत् यत् प्रादुर्भूतं मनसि न तदिदानी स्मरामि। अतिक्रान्तायाञ्च सोपानपरम्परायां मम दीर्घेण निश्वासेन सह तेन परित्यक्तो मे हस्तः। पुनरपि मनसि प्रत्यावृत्तं संसारेण। चिन्तया च हृदये दत्तं पदम्। हन्त। प्राणेश्वर, अजानतैव त्वया किमिद कृतम् ? कृतं त्वया मे पाणिग्रहणम्। इदानीमय जनः त्वया गृह्यता न वा गृह्यता, त्वमेव मम स्वामी। अहञ्च ते पत्नी। नहि जन्मन्यस्मिन् कश्चिदन्योऽस्या नयनहीनायाः स्वामी भविष्यतीति। किमस्मिन्नेव समये कस्यचित् दग्धदृष्टचक्षुर्निपतितम् ? मन्ये तदेव। ( क्रमशः )

---

# अभिनय-शैली-विमर्शः

अयि भो नाट्यरसपिपासावासितचेतसः सुमनसः पारिषदाः! प्रत्यहमत्यासङ्गेन समास्वादयन्ति श्रीमन्तः सुप्रयुक्तानां रूपकाणा मतिमधुरान् रसपरीपाकान्। ये साधारणानां काव्यकुसुमानां रसविशेषानतिवर्त्तमानाः सम्मानमपरिमाणमुरीकुर्वाणाः क्षीरशर्करा-मधुमोदकादि विलक्षण क्षणमूलमिव मधुरतासौभाग्यमङ्गीकृत्य सत्य-मिव सुखसम्भोगे पथ्यभूतमात्मानं प्रत्याययन्ति। अस्ति किल बहुतिथः कालो मधुरमधुर काव्यसारं समुपेयुषो भारतवर्षस्य, अस्ति चान्येषा-मपि भूयसां जनपदानाम्। तत्र तत्र कति वा शतानि तत्तज्जानपद-भाषामयानि जनिमलभन्त रूपकाणि प्रयोगकौशलानि च प्रभूतगुण-विश्रुतानां कुशीलवानाम्। ये किल कुशीलवा भरतमुनिप्रदिष्टेन मार्गेण स्वां स्वां शिक्षापद्धतिं सुविशुद्धां विदधानाः सर्वेषामेव रसानां सुमधुरां मूर्त्तिं सामाजिकेषु प्रत्यक्षतया प्रतिपादयन्त इव मानससा-धारण समाश्रितवन्तः पर्य्यचीयन्त। देवयात्रामहोत्सवेषु वा पुत्रादि-परिणयमहानन्ददिवसेषु वा, विविधेष्वपरेषु प्रमोदहेतुसमुपगमेषु वा ते ते नाट्यकुशलाः समाहूताः प्रभूतमानन्दं विकिरन्तो व्यभाव्यन्त।

कियतः कालात् प्रभृति नाट्यकुशलानां कुशीलवानाम् इयमीदृशी प्रतिपत्तिरिति नैव दुष्कर विशेषतः परिज्ञातुम्। प्रतीयते बहुषु ग्रन्थेषु यथा भरतमुनिस्तौर्य्यत्रिकसूत्रधारो निरूपयामास सूत्रम् आभि-नयिकं, तेन खलु त्रिदिवाङ्गनासहायेन 'लक्ष्मी-स्वयवरण'मित्यादिकानि नाट्यानि प्रायुज्यन्त, सुरराज-सन्तोष-सम्पिपादयिषया पुरतो देवतानां दैवतसभायाम्। यत्र किल 'लक्ष्मी-स्वयंवरण' नाट्यप्रयोगे उर्व्वशी नाम त्रिदिवसुन्दरी लक्ष्मीभूमिकामाश्रितवती पुरूरवसि पूर्वं जातानुरागा

'पुरुषोत्तम' इति पदप्रयोगावसरे 'पुरूरवसि' इति प्रयुञ्जाना परिहास्यता गता सामाजिकाना स्वीयवस्तुप्रकर्षपरिभ्रंशविदूनेन भरतेन मुनिना समभिशप्ता मर्त्यभूमिमाश्रितवतीति। तदेव नानाविधविचारसाचिव्येन तदिदं प्रतिपद्यते यन्नाट्यप्रयोगः खलु प्रचरत्यतिपूर्वं कालादेव चराचरेऽस्मिन्। सन्तर्पणशाय देवतानामप्यन्तःकरणाना मालोक्यमानः सुतराम्। अत एवोक्तं मालविकाग्निमित्रे कविना कालिदासेन 'देवानामिदमामनन्ति मुनयः कान्तं क्रतुं चाक्षुष'मिति।

अस्ति किल दृश्यते भरतनाट्यशास्त्रे, यदिदं नाट्यं त्रेतायुगावसरे जनिमुपजग्राहेति। यदा महेन्द्रप्रमुखा देवास्त्रयीसमुपदेष्टारं भगवन्तं चतुराननं—'क्रीडनीयकमिच्छामो दृश्यं श्रव्यञ्च यद् भवेत्। न वेदव्यवहारोऽयं संश्राव्यः शूद्रजातिषु। तस्मात् सृजापरं वेदं पञ्चमं सार्ववर्णिकम्॥' इति प्रार्थयाञ्चक्रिरे, तदैवायं देवाभ्यर्थनापरितोषितः—'एवमस्त्विति तानुक्त्वा देवराजं विसृज्य च। सस्मार चतुरो वेदान् योगमास्थाय तत्त्ववित्॥' नाट्यवेदाख्यस्य च पञ्चमवेदस्य समुत्पादने—'नाट्याख्यं पञ्चमं वेदं सेतिहासं करोम्यहम्।' इति—'एवं सङ्कल्प्य भगवान् सर्ववेदाननुस्मरन्। नाट्यवेदं ततश्चक्रे चतुर्वेदाङ्गसम्भवम्'॥ तस्य च पाठ्य सङ्गीताभिनय रसनिष्पाद्यतया चतुरो वेदानालोच्य—'जग्राह पाठ्यमृग्वेदात् सामभ्यो गीतमेव च। यजुर्वेदादभिनयान् रसानाथर्वणादपि॥ वेदोपवेदैः सम्बद्धो नाट्यवेदो महात्मना। एवं भगवता सृष्टो ब्रह्मणा सर्ववेदिना'॥ इति।

अथैवं स्वेन समुत्पादितस्य पञ्चमस्य नाट्यवेदस्य प्रयोगं किल साधारणं देवादिभिरपि दुष्करं इति चिन्तासन्तानपर्याकुलः पितामहः सपुत्रं भरतमुनिं तत्प्रयोगाय समादिशत। स चापि मुनिर्भरतः स्वीयपुत्रेषु शाण्डिल्यादिषु तत्प्रयोगोपदेशमप्यथ सम्प्राप्य—'कैशिकी श्लक्ष्णनेपथ्या शृङ्गाररससम्भवा। अशक्या पुरुषैः सा तु प्रयोक्तुं स्त्रीजनादृते'॥ इति भगवन्तं पितामहं परिबोध्य तेन लोकातीतगुणशालिन्योऽप्सरा-

मप्सरसा सृष्टिमकारयत्, यासा नाम मञ्जुकेशीप्रभृतीनामप्सरसां पितामहसमीपतो लाभाभ्युदयेन भरतो मुनिस्तौर्य्यत्रिकसूत्रकारः कैशिकीमपि वृत्तिमनन्यप्रयोज्या यथायोगं सामाजिकगोचरीकृत्य निरवद्येन प्रद्योतेन नाट्यवेदं सार्थं विदधे। ऋषिः 'स्वातिर्भाण्ड-नियुक्तस्तु सह शिष्यैः स्वयम्भुवा'। येन खलु ऋषिणा 'जलधरसमय-निपतत्सलिलधारावैचित्र्याभिहन्यमान-पुष्करदलविलसितरचितवर्णा-नुहरणयोजनया यथास्वं वृत्तिनियमेन पुष्करवाद्यनिर्माणं कृतम्'। 'नारदाद्याश्च गन्धर्वा गानयोगे नियोजिताः'।

इत्थमुपजाते निखिलनाट्योपकरणीभूतवस्तुभारसमन्वये सुस-म्पन्ने च यथायोगं नाट्यविद्यापरिग्रहे, पितामहेन समुत्सुकेन समा-दिष्टो भरतमुनिः सम्प्राप्ते 'महेन्द्रस्य ध्वजमहे' महोत्सवमन्नानां त्रिद-शानां परितोषणाय 'यथा दैत्याः सुरैर्जिताः' तथा वृत्तमभिनयेन प्रादर्शयत्। [ अत्र हि प्रयोगवस्तुनो नाट्यशास्त्रविषयानुक्रमणि-काया 'दैत्यपराजय' इत्याख्या समुपलभ्यते ] 'ततो ब्रह्मादयो देवाः प्रयोग-परितोषिताः' सर्वाणि ध्वजच्छत्रव्यजनसिंहासनमुकुटादीनि यथार्हं भरतसुतेभ्य प्रयोगकौशलसम्पादनाय समुपजह्रुः, येषामुपायन-रूपेणाधिगतानां सुतरामानुलोम्येन प्रयोगविधावुपकरणभारविरह-कृता नैव सम्पद्येत लेशतोऽपि रसानुभूतिपराभूतिः सामाजिकानाम्।

ततो नाट्यप्रयोगोपयोगि-मण्डपमन्तरेण समीक्ष्य बहुविघ्नानन्त-रायानाभिनयिकान् भरतमुनिना समभ्यर्थितो भगवान् विश्वनिर्माता निखिलशिल्पकर्मकुशल विश्वकर्माणं 'कुरु लक्षणसम्पन्नं नाट्यवेश्म महामते'। इत्येवमादिदेश। 'ततोऽचिरेण कालेन विश्वकर्मा महच्छुभम्। सर्वलक्षणसम्पन्नं नाट्यवेश्म चकार सः॥' नियुक्ताश्च भगवता ब्रह्मणा तस्य नाट्यमण्डपस्य परिरक्षणाय 'अंशभागैर्भवद्भिस्तु रक्ष्योऽयं नाट्यमण्डपः' इत्यादेशवचनेन चन्द्रादयो देवाः।

न केवलं दैत्यपराजय-रूपकमेव देवसन्तोषणाय प्रयुक्तं भरतमुनिना,

परमन्यदपि। तथाहि यदा नाम नियमतः प्रयोक्तृभिः कर्त्तव्यं रङ्ग-पूजनमवस्यति स्म, तदा 'आज्ञापय विभो। क्षिप्रं क प्रयोगः प्रयुज्य-ताम्' इति पृष्टो भरतमुनिना भगवान् पितामहः 'योजयामृतमन्थनम्। एतदुत्साहजननं सुरप्रीतिकरं तथा। योऽयं समवकारस्तु धर्मकामार्थ-साधकः। मया प्रग्रथितो विद्वन् स प्रयोगः प्रयुज्यताम्' ॥ इत्यादिशत्। अथ 'तस्मिन् समवकारे तु प्रयुक्ते देवदानवाः। हृष्टाः समभवन् सर्वे कर्मभावानुदर्शनात्' ॥ इति

अनन्तरञ्च कदाचित् स्वोयवस्तुप्रकर्षं महेश्वरस्यापि समीपे प्रति-पिपादयिषन्नब्जयोनिः श्रीमन्तं भरतमुनिं प्रयुक्तपूर्वस्यामृतमन्थनस्य समवकारस्य त्रिपुरदाहनाम्नश्च डिम'भेदस्य प्रयोगमादिशत्, तेन च पितामहादिष्टेन अमृतमन्थनं नाम समवकारः 'तथा त्रिपुरदाहश्च 'डिम'संज्ञः प्रयोजितः 'ततो भूतगणा हृष्टाः कर्मभावानुदर्शनात्॥ महादेवश्च सुप्रीतः' प्रयोगविधेरसाधारणीं प्रशस्तिं प्राचारयदिति।

तदेवं विविधकलाकौशलमयस्य नाट्यस्य बहोः कालाद् ऊर्द्ध्व-मुद्भव इति सुदृढ़मेव शक्यप्रतिपादनं भवति। इदं किल नाट्यं न यादृच्छिकं नियमपरिहीणमपि प्रयोक्तृभिर्वा सामाजिकैर्वा प्रयोग-गुरुभिर्वा पर्य्यगृह्यत, यथा यथा शास्त्रविधयो नियम-नियन्त्रिता व्यवतिष्ठन्ते, यथा यथा च धर्मादिविधयः सम्यगुपदेशमनुरुन्धानाः प्रबन्धमात्मनः समुपलभन्ते, तथा तथैव नाट्यविधयोऽपि नियम-नियन्त्रिता एव स्वात्मलाभमापद्यन्तेति भरतमुनि-प्रणीत नाट्यशास्त्रादि-विचारेण शक्यमभिज्ञातुम्। स चायं नियमो न केवलमाङ्गिकवाचि-कादिप्रयोग एव नियन्त्रितः, परं मण्डपादिनिर्म्माणे तत्रत्यालेख्यादि-विधानेऽपि समुपलभ्यन्ते भूयांसो नियमा, ये प्रयोगसौष्ठवाय परि-कल्प्यन्ते।

आदौ तावत् नाट्यानि गीर्व्वाणवाणीमयान्येव प्रथितप्रचाराण्य-भूवन्, अनन्तरञ्च तदनुकारेण भाषान्तरमयाण्यपीति सविशेषमनुसन्धा-

मपि प्रतिभायात्। यतः क्रियमाणे किल तत्त्वविचारे प्रादेशिक-तत्तद्भाषाद्यपेक्षया बहोः कालात् पूर्व्वमेव स्वतन्त्र प्रचारः प्रतिपद्यते गीर्व्वाणवाण्या।

दूरातीते काले यदा नाट्यमभिनीतमभूत् तदा कीदृशीं रीति-माश्रित्य कुशीलवाः स्व स्व प्रयोग सामाजिकाना गोचरता नीतवन्तः, कीदृशं वेशमास्थाय प्रयोगसौष्ठवमुदपादयन्, कथङ्कारं पद परि-वृत्तिञ्च पटपरिस्थितिञ्च समाश्रयन्, का वा पद्धतिमनुरुन्धानाः सात्त्विक-मवस्थाविशेषमुपादर्शयन्नित्यत्र यद्यपि प्रत्यक्षतो न किञ्चिदपि प्रमाण-मस्माक प्रतिभासते। तथापि नाट्यशास्त्रनिबद्ध-नियमनिवहानालोच्य, नाट्यग्रन्थेषु तदा तदा भावाभिव्यक्तिनिरूपण वा समासाद्य, तानि तानि वस्तून्यशेषमुन्नेतुं सुशक्यन्ते। नाट्यप्रयोगस्य तथा तथा पद्धतय पूर्व्वं स्थिता अपि अन्तरा भारतेऽस्मिन् वर्षे दर्शनादिविद्यायामेव लोकाना-मत्यासङ्गेन स्मरणीयतामिवोपजग्मुरिति विदितमेव पुरातत्त्ववेदिनां विदुषाम्। अत एव दूरातीते काले यथा यथा नाट्यप्रयोगाः कुशलानां कुशीलवानां कौशलेन सामाजिकचेत.सन्तोषमाहितवन्तः, तथा तथा नैव तदानीम्। अनन्तरञ्च वैदेशिक-समुद्यमफलं नाट्योत्कर्षमतिहर्ष-हेतुं परिस्पृश्य दास्यमिव सुखकामनाया समुपलभ्य केऽप्यद्यतनाः पुनरपि भारतीयनाट्यकलामुज्जिजीवयिषन्त. प्रादेशिकभाषामयनाट्य-निर्म्माणेन, तथा पटप्रवर्त्तनादि-व्यापारेण नाट्यप्रयोगमुपभोगयोग्यं सुप्रबन्धेन समपादयन्। ततः प्रभृति पुनरपि नितरामनुशीलन नाट्यकलायाः समजनि जनानन्दन भारते वर्षे प्राचीनकालसम्भूतानु-त्तमसङ्गीत-कलादि समन्वयेन। तत्तत्प्रदर्शितरीतिमवलम्बमानाश्च केचन गीर्व्वाणवाणीप्रणयिनः संस्कृतमयमपि समारेभिरे रूपकमभि-नेतुम्।

परन्तु तदा तदा नाट्यवाचा तथा सङ्गीतादीना यया दिशा प्रयोगः, सम्प्रति बहोः कालादनन्तरं क्रमेण तत्परिवृत्तिरतिमात्रा समुप

लक्ष्यते। आदौ तावदस्माकं शैशवे यादृशो दृष्टः प्रयोगो नाट्यानां, यादृशश्चाद्य सन्दृश्यते, तयोर्भूयान् प्रभेदः सूक्ष्मविचारमन्तरेणापि आपातत एव प्रतिभासते। प्रथमे काले नाट्यनिबद्धवचनानां प्रयोगावसरे स्वरविशेषमाश्रित्य कुशीलवा प्रावर्त्तन्त, क्रमेण स्वरोच्छ्वासप्रभावतो वाचां किमपि लोकोत्तरं माधुर्य्यमुददीप्यत, सामाजिकानां शृङ्खलतामिव कोऽपि रसविशेषस्तेनोपायेन प्रसृतेन स्वान्तमाक्रामति स्म। स्वभावतो यथास्माभिर्वचनानि प्रयुज्यन्ते, यथा वा स्वभावमनुरुध्य भावाः समुपजायन्ते, ततो विलक्षणं कमपि भावमङ्गीकृत्यैव वैशादौ च भाषायाश्च तदानीन्तनाः प्रायोगिकाः प्रयोगविधिं व्यापारयन्। क्रमेण यावद् यावद् विवेकवतां कुशीलवानां तत्तद्विषये विशेषतो विचाराः प्रादुरभूवन्, यावद् यावच्च स्वाधीनमार्गमनुवर्त्तमाना जनाः स्वविवेकानुसारेण कृत्यपथे स्वं प्रवर्त्तयितुं सामर्थ्यमाशिश्रियन्, तावत् तावदेव पूर्व्वसिद्धस्य मार्गस्य परिवर्त्तनं स्वात्मलाभेन लोकगोचरतामयासीत्। क्रमेण नाट्यप्रयोगे स्वरपरिहारेण वाचः प्रायुज्यन्त, स्वाभाविकभावोन्मेषणेन नाट्यप्रयोगे अलौकिकताबोधः कुशीलवैरपासार्य्यत, यथा यथा प्रयुज्यमानानां विषयाणामसम्भाव्यताप्रतिपत्तिर्नैव रसपरिस्थितिं विघटयेत्, साधारणलौकिकवृत्तान्त इव प्रयुज्यमानवृत्तान्तः स्वान्तमारूढः कमपि चित्तामोदं विस्तारयेत्, तथा तथैव ते क्रमेण प्रावर्त्तन्त। अलौकिकभावलेशतोऽपि स्वाभिनयान्निर्वासयन्तः सुरचारित्रे वा यक्षचारित्रे वा गन्धर्व्वप्रकृतौ वा लोकातीतानामपरेषां स्वभावपरिचये वा मर्त्त्यसुलभभावकदम्बकमवतारयन्तः सामाजिकानामनन्तां शान्तिं सम्प्रतिपादयितुं प्राचेष्टन्त, बहुमन्यन्त चामी तरलतरनाट्यरसमधिजिगांसुभिः सामाजिकसम्प्रदायैः। यदा यः खलु नवीनो भावः पदं करोति पूर्व्वसिद्धवस्तुपरिभवेन भुवनाभोगे, यश्च विचारदृशा दृश्यमानो नैव प्रशस्तिमनन्यविलक्षणामभ्युपैति, सोऽपि सम्प्रदायविशेषैरतिप्रकर्षबुद्धया परिगृहीतो भारते वर्षे पदान्तरे वा सञ्जीवतीति दृष्टमनेकशो

लोके, परं नास्य तथा सौभाग्यं नवीनभावस्य, येन निर्विचारमय सर्व्वै-रेव समुत्कृष्ट इति परिगृह्येत। अस्ति किल भारते वर्षे परःसहस्रा धार्म्मिकसम्प्रदाया नवनवाः प्रवर्त्त्यमानाः काले परःसहस्रैराधुनिकै, ते कतिपयैराद्रियमाणाः कतिपयैश्च नाद्रियमाणा समुपलभ्यन्ते। सन्ति च विविधानि दर्शनादिशास्त्राणि विभिन्न मार्गमनुवर्त्तमानानि, तेषु सर्व्वेषु नहि सर्व्वेषामस्ति चित्तानुराग.। तदेव चिरमेव वर्त्तते लोकाना-मान्तःकरणिकं वैलक्षण्य, येन सर्व्वे एव नैकत्र शुभावहे वा अशुभा-वहे वा पदे रमन्ते। अत एव सन्ति तथाविधे सत्यपि नूतनाभिनयशैली-सञ्चारे तादृशाः केऽपि सम्प्रदायाः, ये प्राक्तनो पद्धतिमेव प्रशस्तां मन्य-मानास्तत्रैव प्रकर्षमुत्तरोत्तर सम्प्रकाशयितुमीहमाना प्रायोगिकाः समुपलभ्यन्ते। प्राचीना रीतिमतिनिपुणदृशा विमृष्टामालोचयन्त आपातदृशा परिकल्पिता नरणिमञ्चमा नैव परिग्रहानुग्रहेण कृतार्थ-यितुं प्रवर्त्तन्ते।

आसीत् किल पूर्वं कुशीलवाना वेशादिपरिग्रहे यादृशः पन्थाः, स तु विमृश्य विमृश्य परिवर्त्त्यमान. प्रायेणु अ.रव उपगृहीतोऽस्ति। आदौ तावत् भूपादिभूमिकामाश्रितवता सुर्वेषामिव कटिवर्मादिपरि-च्छदः प्रयोगप्रकर्षाय पर्य्यकल्प्यत, प्राचीनग्रन्थेषु तत्यपि पुरा भूषण-व्यवहारनिदर्शने स्त्रीणामिव केवलं भूषणशोभा सम्पादिता सम-पद्यत, न तु भूपतिप्रभृतीनाम्। अधुना कुशीलवेषु बहुषु प्राचीन शास्त्रादि-रतिमुपगृहीतवत्सु परिच्छदादिपरिवर्त्तनमसाधारण परि-लक्ष्यते। इदं परिवर्त्तनं बङ्गेषु संस्कृतसाहित्यपरिषदेव प्रथमं प्रचलित-वतीति परमं गौरवमस्याः प्रचारयितुं न खलु नैव पारयामः। अद्यत्वे भारते वर्षे यावन्ति नाट्याभिनयपदानि दरीदृश्यन्ते, तत्र सर्वत्रैव तथा तथा वेशादिपरिग्रहः सन्तोषयति सामाजिकानामन्तःकरणानीति दृष्टमेव शक्यं विज्ञातुम्। अङ्गाद्यवसाने लौकिकवाद्यमपि पूर्वतो विपरिवर्त्तमानमुपलभ्यते। आदौ तावत् दशैकादशेभ्यो वत्सरेभ्य ऊर्द्ध्व-

मपि यादृशं तौर्य्यत्रिकवाद्यं नाट्यप्रयोगे परिगृहीतमासीत् तदिदानीं बहुत्रैव परित्यक्तमास्ते। बहुभिरेव तौर्य्यत्रिकविविधवाद्यस्थले शङ्ख-घण्ठादिसमायोगेन वाद्यकृत्यं सम्पाद्यते। अङ्काभ्यन्तरे दृश्यविभागाय पटीपरिवर्त्तनमपि सुतरामाधुनिकम्, तत्रापि प्रतिदृश्यविभागं आलोकनिर्वापणेन पटीसमपसारणं नाम। एवं स्थिते प्राचीनकाला पेक्षया अद्यतन किल नाट्यप्रयोग. सुबहुना भेदेनात्मप्रकाशं लभमानः कतिपयेषु बहुमानं कतिपयेषु चावमानमुररीकुरुते।

तदेतयोः पक्षयोः कतरः साधीयानिति विमर्शे बहवो बहुधा प्रत्यवतिष्ठन्ते। य किल स्वरसंयोगेन चातुर्य्यविशेषमाश्रित्य नाट्य-वाचा प्रयोजक पक्षः, स किल स्वरविशेषसम्पर्केण वाचा रसोद्भावने सामर्थ्यातिशयं प्रत्येति। यथा किल साधारण एव शब्दसम्भारो यावत् स्वरेणोदीर्य्यते, तावद् यादृशीमान्तरिकीं भावपरम्परामुत्पादयति, न तथा स्वरेण वियुक्तः स इति, अत एव हि पद्यमात्रमेव छन्दसा ग्रथ्य मानं देशविशेषेषु सौष्ठवान्तरपरिपोषणाय स्वरविशेषसंयोगेन समाम्नायते। प्रतीतमिद कदाचित्, यदा परिषदि चण्डकौशिक नाम नाटकमभिनयार्थं परिगृहीतमभ्यस्यमानमासीत् तदा कालान्तरे च मद्रास्प्रदेशान्तर्गताना तत्रोपगतानां सुविदुषा केषाञ्चन वाक्प्रबन्धात्। ते हि तदा समुदैरयन्, यत् नाट्याभिनयावसरे सर्व एव श्लोकभागाः कुशीलवैस्तत्यैः स्वरविशेषसम्पर्केण रसातिरेकसम्पादनाय परि-पठ्यन्ते। अस्मद्देशे तु इदानीं वा पूर्वतो वा तथा तथा रीतिर्नैव समुन्नेतुं शक्यते। काव्यं किल स्वत एव वाक्यान्तराद् विलक्षणां रम्यतामावहति, तदेव यदि स्वरविशेषेण समुदीर्य्यमाणं सामाजिकाः समभ्युपेयुः तदा तेन सामाजिकानामन्तःकरणे रसप्रतीतिरत्युत्तमा पद कुर्य्यादित्यत्र को वा लेशतोऽपि सन्देहः। अभिनयस्तु स्वाभाविकं भावमङ्गीकुरुता, मा वा, फलन्त्वस्य सामाजिकसन्तोषणं यथैव दिशा सम्पद्येत, सैव समादरणीयेत्यत्र का वा विप्रतिपत्तिः। अतः स्वरसंयोगेन

समाम्नायमानं प्रयोगे नाट्यं कथं वा क्षीणं स्यात्, यथा यथा च प्राचीन-मार्गानुकरणेन तदीया परिपुष्टिस्तथा तथैव चेष्टितव्यमिति मत ममीषाम्। 'पुराणमित्येव न साधु सर्वं न चापि काव्यं नवमित्यवद्यम्। सन्तः परीक्ष्यान्यतरद् भजन्ते मूढ परप्रत्ययनेय-बुद्धिः॥' इति कालिदासकवेरुपदेशं मुख्यं मन्यमानास्तु केचन न ता सरणिमुररीकुर्वन्ति। ते तु वदन्ति, यथा 'नहि वयं संवादेषु वाचा प्रयोगकाले स्वरविशेषमाश्रित्य वाचः प्रयुञ्ज्महे। अतो येषां चरित्रमनुकुर्वन्तो वयं नाट्यमभिनयाम', तेषा वाक्प्रयोगावसरेऽपि कथं वा स्वरविशेषः समाश्रयणीयः स्यात्। यदि स्वरेण वाक् प्रयुज्येत, तदा स्वभावबहिर्भावेण लोकाना तत्र तत्र प्रयोगे अयथार्थता प्रतिभासमाना आपातत एव वृत्तमसदिव प्रतिपादयन्ती रसप्रतीतिं विघटयेत्, अत सामाजिकाना यथा यथा प्रकृते प्रयोगे स्वाभाविकताबोधो नैव तिरोहितः स्यात्, यथा यथा च सम्भाव्यता वृत्तस्य भावयन्तस्ते रसोद्बोधेन लोकातीतमानन्दमुपलब्धुं क्षमेरन् यथा च 'परस्य न परस्येति ममेति न ममेति च। तदास्वादे विभावादेः परिच्छेदो न विद्यते॥' इत्याद्यालङ्कारिकसमुपदिष्टा शैली प्रतिहता न स्यात्, तथा तथैव प्रवर्तितव्यं कुशीलवै'रिति। अत एव सम्प्रदायविशेषैरनुगृह्यीतस्य स्वरविशेषसाहायकेन नाट्यवचनप्रयोगव्यापारादेः सर्वथा युक्तं परिहाणम्। यथा यथा च अभिनये स्वभावः सम्यगनुकृतो भवति रसोद्बोधश्च सामाजिकाना न प्रतिहन्येत, तथा तथैव प्रवर्तनीय विवेककुशलाना कुशीलवानाम्। तत्र प्राचीनमिदमासीत्, इद नितरामादरणीयमिति बुद्ध्या प्रवृत्तिश्चेत्, सा सामाजिकैः सुतरा नाद्रियेत, कालक्रमेण सामाजिका अपि प्रकारान्तरमाश्रितवन्तो विभाव्यन्ते। अतो यदि वर्तमानसामाजिकपरिस्थितिरनुरोद्धव्या, तदा किमन्यदितो विधेयम्।

वयन्तु नानयोः पक्षयोरेकतरमप्यविचारतः साधीयासमाकलय्य परिगृह्णीमः, नाप्यविचारतो द्वेषबुद्ध्या कञ्चन प्रयोगान्निर्वासयामः।

परं द्वितीयपक्षेण 'सन्तः परीक्ष्यान्यतरद् भजन्ते' इति समुपन्यस्तं नियमम-ङ्गीकुर्व्वाणा एव प्राचीन नवीनयो. सुसम्बन्धमारात् सम्पिपादयिषामः। आधुनिकाः किल प्रयोगावसरे वाचा स्वरविशेषं परित्यक्तव्यं मन्यमाना अपि नैव परमार्थतस्तं परित्यक्तुमर्हन्ति। भावाभिव्यक्तिरभि-नयपदेन विधित्सिता चेत् भावभेदेन पदानामुदात्तादि-स्वरभेदसम्पादनं सुतरामपेक्षितमेव चातुर्य्यमर्जितवतां कुशीलवानाम्। य किल पूर्व्वेण पक्षेणानुगृहीतः स्वरविशेषः, सोऽपि न सामग्र्येण सङ्गीतपदानुकूल स्वरविशेषमनुहरति, परमेष ततो विलक्षणप्रकारः संवादमात्रसम्पाद्यः प्रयोगविधावुपयोगी। अत एव तस्य तादृशस्य स्वरविशेषस्य वार्त्ताप्रव र्त्तनावसरे नेऽतापि परिग्रहणीयस्य किञ्चिद्विशेषत समालम्बनेन यदि नोत्पद्यते प्रयोगस्य लेशतोऽप्यपकर्षः, पर तादृश स्वरविशेषसम्पर्केण बहुलैव रसानामनभिभवा परिपुष्टिः, तदा को वा विचारचतुरस्ततो विरतिमुपेयात्। आङ्गिकसात्त्विकाभिनयोपस्कारस्तु नवीनसम्प्रदाये-रनुगृहीतः परिपुष्णात्येव सुचेतसामान्तर रसपरीपाकमिति तत्र वयं नवीनमतानुप्रवेशं नितरामनुरुन्ध्याम। आहार्य्यप्रयोगोपस्कारोऽपि पूर्व्वत एव सगर्व्वमपूर्व्वतया प्रचारितः परिषत्पक्षेणेति तत्रापि वय-मनुरागिण इति नोक्तमप्युपतिष्ठेत। तदिद सारभूतं प्रत्येतव्य यत्, प्रयोगावसरे वाचा कोऽपि स्वरभेद समादरणीय, यः खलु साकल्येन नैव पर्य्येति सङ्गीतपदानुकूल्यं, नापि समुपचिनुयात् प्रतिपाद्यरसप्रति-बन्धम्। आङ्गिक सात्त्विकाहार्य्याणा पुनरनुसन्धेयं नवीनमार्गेण परमोत्कर्षसम्पादनमिति समासेन वयमिदानीमिदमेव वदामः, कालान्तरे पुनरधिकमाविवेदयिष्यामः॥

## सन्देशाः

शिक्षायां ब्राह्मणमहासम्मेलनसिद्धान्तः—वर्त्तमाने संवत्सरे शारदीयपूजावकाशे पुण्यभूमौ वाराणस्यां निखिलभारतवर्षीय ब्राह्मणमहासम्मेलनं समजनिष्ट। तत्र नानाविषयानधिकृत्य विचाराश्च सिद्धान्ताश्च सम्मिलितैः पण्डितैश्च धर्म्माचार्य्यैश्च तदनुगतैरपरैश्च साधुतया व्यधायिषत। तत्र शिक्षाविषय सिद्धान्तमत्र श्रीमतां वाचकमहाभागाना पुरत समुपहरामः,—

अस्ति किल भारते वर्षे बहोः कालात् प्रभृति वैकल्यं वर्णाश्रम धर्म्मस्य। वर्णाश्रमिणः सर्वं एव प्रायेण पूर्वपुरुषाचरितानाचारानशेषतः पालयितुं नेच्छन्ति, नापि शक्नुवन्ति। सत्यपि तत्र तत्र सामर्थ्ये परमौदासीन्यमेवात्र वर्णाश्रमिणा दरीदृश्यते। तदत्र को हेतुरिति विचारे केवलं पूर्वकालीनशिक्षाविलक्षणा साम्प्रतिकी नवीना शिक्षैव हेतुकोटिमधिरोहति। तदस्याः शिक्षायाः रीतिपरिवर्त्तनार्थं तथा कोऽपि समपेक्षितो विद्यालयो नाम, यत्र सम्भाव्येत सुपरिग्रहो विश्वासामित्र विद्यानाम्। अद्यत्वे,प्रतीच्यरीतिमनुरुन्धाना विद्यापरिग्रह-शैलो यथा यथा वासयत्यन्तःकरणानि विद्यार्थिनाञ्च गृहीतविद्यानाञ्च तदितरेषाञ्च, तथा शैलो यद्यपि नानुगृहीता स्वपरिग्रहेण प्राज्ञै-स्तथापि एकस्यैव बहुविद्यापरिग्रहः कालानुरोधेन कर्त्तव्यपदवी-मध्यास्ते। तत्र पुनरयं विशेष, यद् एकस्य विषयस्य विशेषतः परि-ग्रह सामान्यतश्चापरेषाम्। एवं हि एकत्र गभीरे पाण्डित्ये सत्यपि यदद्यतना विषयान्तरवेदिनः प्राच्यपण्डितानधिक्षिपन्ति, स्वैरपस्थापि-ताना विषयविशेषानामतिसमीचीनं समाधानमेभ्यो नाप्नुवन्तो विषी-दन्ति तदतिदूरापेत स्यात्। शक्या च सन्दर्शयितुं वस्तुतः कदाचित् सर्वोत्कर्षसीमामुपगतस्य भारतवर्षस्य प्राच्यविद्यासमुत्कर्षकता लोका-

तीता प्रशस्तिः समुन्नतिश्च नामशेषतामिव समाश्रितस्य वर्णाश्रमधर्म्मस्येति ।

सर्वमिदमालोच्य वाराणसीधाम्नि 'निखिलभारतवर्षीय—ब्राह्मण-महासम्मेलन'—परिषदा कृतः सुमहान् परिकरो वाराणस्यां कमपि 'संस्कृतविश्वविद्यालय' प्रतिष्ठापयितुम्। तत्र भारतीयप्राच्यप्रथामनुसृत्य चत्वारो वेदा' षड् वेदाङ्गानि पुराण धर्म्मशास्त्र तर्कशास्त्रं मोमांसाशास्त्रञ्चेतायतुर्दश-विद्याः प्रतिपाद्येरन्। नृत्यगोतचित्रशिल्पादि विद्या अपि प्राच्ये काले सुप्रतिष्ठाः साम्प्रतिकैः सुतरामपेक्षिताः प्रतीच्य-कालोपयोगिन्य' परिग्राह्येरन्। तासां विद्यानां प्रतिपादनञ्च वाराणसीस्थे महाविद्यालये संस्कृतभाषया हिन्दीभाषया च विधीयेत, तदीयशाखारूपेण प्रतिष्ठापितेषु च देशान्तरोणमहाविद्यालयेषु प्रादेशिक-तत्तद्भाषाभिरिति निरदिश्यत। यथा चात्र सार्ववर्णिका एव यथायोगं विद्या परिगृह्य जोविकोपायमुपेयुस्तथैव शिक्षायाः पद्धतिः सुनिबद्धा भवेत् ।

अपरश्चात्र विशेषो यथा, अद्य यावद् येषु बहुषु पदेषु विद्याया अभ्युदयाय यावन्तो विद्यालयाः प्रत्यष्ठाप्यन्त, तत्र सर्वत्रैव स्वसम्पाद्यसम्पद्व्ययानुरूपा विद्या समधिगम्यते विद्यार्थिभिरिति दृष्टचरमास्ते, प्रस्तुते विद्यालये पुनरतिदोना अपि यथा सुखेन विद्यामधिगच्छेयुस्तया च स्वोया जोविकामुपगन्तुमर्हेयुस्तथा नियमो विधातव्य इति। प्रत्येकमेव वर्णानामद्यत्वे दारिद्र्यमेव प्रतिबध्नाति सर्वाणि श्रेयांसि, सर्वाणि च काम्यजातानि। सनातनधर्म्मेण सर्वे कमुपायमवलम्बमानाः संसारे विहरन्तो धर्म्मरक्षायामपि समर्थाः स्युः, दारिद्र्येण पोडिताश्च नैव कृत्यमार्गादन्यत्र गच्छेयुस्तथा तथैव निर्देशाय परिचालकसमितिः सर्वथा स्वां चिन्तां प्रवर्त्तयेत। तदर्थञ्च विभिन्नेषु पदेषु शाखासमितयो व्यवस्थापनोयाः, तत्र तत्र तद्द्वारेण च विचारः प्रवर्त्तयितव्यो यथा मनोरथोऽयं फलेन सुसम्बद्धतः कल्पनामात्रसारो न स्यादिति ।

'ब्राह्मणमहासम्मेलन' परिषदा परिगृहीतान्युद्दिश्य वस्तूनि सङ्क्षेपतः पाठकमहोदयेषु समुपक्षिप्यन्ते, यथा—विशेषा वर्णाना दारिद्र्यदूरीकरणोपायनिर्णयः (१), स्वास्थ्यरक्षणम् (२), अनाथरमणीना विशेषतो विधवाना जीविकादिव्यवस्थाविधानम् (३), सर्वेषा वर्णानां धर्माचारादिसंरक्षणम् (४), गोरक्षणम् (५), समाजप्ररूढपापाचारविनिवर्त्तनम् (६), विभिन्नेषु सम्प्रदायेषु परस्पर मैत्रीस्थापनम् (७), कोऽपि सनातनधर्मी यथा पथिभ्रष्टेन पतितो न स्यात् तदुपायनिर्णयश्च (८) इत्येतानि । प्राधान्येन खल्वेत एव विषया उद्देश्यभूता 'ब्राह्मणमहासम्मेलन' परिगृहीता इति 'बङ्गवासी'नामकपत्रिकापर्य्यालोचनादधिगम्यते । परमत्र प्राच्यरीतिमनुरुध्य शिक्षाप्रवर्त्तनस्य सविशेषो निर्देशो नास्तीति सदुःखमावेदयामः । यदि सनातनधर्मस्य रक्षा कर्त्तव्या स्यात्, यदि च बहुलधर्मविपत्तिविनिवर्त्तनमभिमत स्यात्, तदा येन बीजभूतेन पदे पदे धर्मव्यापत्तिरस्माकमुत्पाद्यते, तदेव समपसारणीयं भवति । तदिदं बीजभूतं वस्तु प्राच्यरीतिपरिहारेण साम्प्रतिकी शिक्षा नाम । अस्ति किल शिक्षाया एतावान् प्रभावः यत्, स्वाभाविकपरिस्थितिं विघटय्य नवीना रीतिमुपानयति इति । अतो या नाम शिक्षा स्वाभाविकपरिस्थित्यनुगुणा यस्मिन् देशे, सैव परमोपकाराय परिकल्पते, नान्या, अतः प्राधान्येन शिक्षायाः सुव्यवस्थासम्पादनमेव 'महासम्मेलन'परिषदः सर्वथा कर्त्तव्यम् । एव कृते अनुषङ्गसिद्धमेव सम्पद्येत धर्मपरिस्थितिपरिपालन सविशेषविज्ञानसम्पदां वृद्धिश्च । अथेदानीं शिक्षाया हेतोः स्थापनीयस्य महाविद्यालयस्य प्रतिष्ठार्थं महान् किल प्रयत्नो वर्त्तते 'सम्मेलन'परिचालकानाम् । श्रूयते नातिचिरमेव तदर्थं कलिकातानगरे 'शिवकुमार-भवने' सारदापीठाधिपतीना महामान्यशङ्कराचार्य्यमहाराजानाम् आध्यक्ष्येण कापि सभा सम्मिलिता तद्विषयमधिकृत्य विचारं करिष्यति, तदनुसारेण च स्वर्गताना स्वधर्मनिष्ठानां कालीप्रसन्नसिंहमहोदयानां भवने महती कापि समालोचनसभा

समाहूता भवेत्। यथाकालमनयोः सन्देशदानाय वयं सन्नद्धा एव वर्त्तामहे इति।

**मासिकसभा**—विदितमस्तु पारिषदानां यथा वर्त्तमान-मासस्य अष्टाविंशदिवसे सायं सार्द्धषष्ठघटिकायां परिषदः एतद्वर्षीयं पञ्चमं षष्ठञ्चाधिवेशनं सुसम्पन्नमिति। तत्र श्रीयुक्त वसन्तकुमारराय-विद्यारत्नस्य 'संस्कृतवर्णलेखविमर्श' इति-नामधेयः श्रीयुक्त-वेणुधर-तर्कतीर्थस्य 'यमपुरीपर्य्यटनम्' इति नामधेयश्च प्रबन्धौ पठितौ। द्वयोरेवानयोः प्रबन्धयोः समालोचनया समालोचका प्रकर्षमसूचय-न्नतिमात्रम्। तत्र 'यमपुरीपर्य्यटनम्' इति-नामकः प्रबन्ध एतत् संख्यायामेव समुपह्रियते प्रियपारिषदेभ्यः। अन्योऽपि परतः समुप-हरिष्यते।

## प्रार्थना

प्रिय पाठकमहाभागाः! प्राप्तकालमद्य यत् किञ्चिदावेद्यते, तत्र भवतां सकरुणा दृष्टिरास्ताम्। गभीरार्थनिबन्धराहित्यं नाम सुतरा-मगौरवं पत्रिकायाः। दौर्भाग्येन तदेवेदानीमगौरवं समापतितप्राय-मस्याः संस्कृतपत्रिकायाः। बहोः कालात् प्रभृति महतां सुविदुषां लेख-लाभसौभाग्यमभुञ्जाना किल परिषत्पत्रिकेयं म्रियमाणेव कथञ्चि-दात्मानं धारयन्ती कस्य वा सचेतसो नोत्पादयति दयावकाशम्।

तदद्यापि यदि भवन्तो नानुकम्पेरन्, तदा क्वैव परिस्थितिरस्याः स्यादिति न जानीमहे। बहव एव भवत्सु नास्या नावस्थां समधि-गच्छन्ति, परमस्याः उत्तरोत्तरं वैबुन्धिकसुलाभं सम्पादयितुं समर्था अपि यदि भवादृशा एव समुदासते, तदा कः पन्थाः परिषदः सञ्जी-वनस्येति प्रकाशमेव वयं वदामः। तदनुकम्पया क्रियतामत्र प्रसादः, क्षीयतामवसादः किलैतस्याः महाजनपरिपूजितायाः पत्रिकायाः इति।

---

# संस्कृतसाहित्यपरिषत्

इयं संस्कृतसाहित्यपरिषत् प्रतिभा रवेः ।
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम् ॥

| | | |
|---|---|---|
| January, 1929, | १८५० शकीये पौषे<br>११श-वर्षस्य ९म-संख्या | Vol XI<br>No 9 |

## क्षमैकविंशतिः

[ निबन्धकः—श्रीसुरेन्द्रनाथशास्त्री ]

गो गो गोप-गजेन्द्रपालनकरं शान्तञ्च पद्मासने
तिष्ठन्तं वरदं शुभाशुभकरं वृन्दावनेशं विभुम् ।
वामाङ्गे कमलं च शङ्खमनिशं चक्रं गदां दक्षिणे
धृत्वा सञ्चलने रतं शशिमुखं नन्दस्य सूनुं भजे ॥१॥
वन्देऽहं कमलापतिं सुरपतिं वन्दे जगत्कारणं
वन्दे कौस्तुभभूषणं नरहरिं वन्दे च वंशीधरम् ।
वन्दे सुन्दरकुन्दकान्तिवदनं वन्दे मुकुन्दं प्रभुं
वन्दे भक्तगणाभयं सकरुणं वन्दे मुरारिं शुभम् ।२॥
आदौ कर्मवशादघं कलितवान् स्थित्वा हि मातुर्मम
कुक्षौ जाठरवह्निपीडिततनुर्ज्ञानेन हीनस्तथा ।
यद्यद्वा विषमं मया विषयितं वक्तुं कथं शक्यते
क्षन्तव्यं स्खलितं प्रभो मम विभो विष्णो मुरारे हरे ॥३॥

बाल्ये तु क्षमये वपुर्मलयुतं स्तन्यस्य पाने मति-
र्नो शक्तिः करणैश्च कार्यजननी कीटास्तुदन्ति स्म माम्।
नानारोग-गरातुरो भयवशो देव न कृष्ण भजे
क्षन्तव्य स्खलितं प्रभो मम विभो विष्णो सुरारे हरे ॥४॥
प्रौढोऽहं विषयाहिभिश्च सततं दष्टो विवेको गत
पुत्रस्त्रीधनजातसौख्यनिरतो विद्यामदान्धो युवा।
निश्चिन्तं हृदय सदा कलुषितं गर्वाधिरूढ परं
क्षन्तव्य स्खलित प्रभो मम विभो विष्णो सुरारे हरे ॥५॥
वार्द्धक्ये शिथिलेन्द्रियो गलमतिर्दैवादितापैर्युतो
ग्रस्तो रोगकुलैर्महाभयकरैस्तृष्णाकुल सन्ततम्।
मिथ्या मोहवश गतोऽहमनिश भ्राम्यामि भक्तिं विना
क्षन्तव्यं स्खलितं प्रभो मम विभो विष्णो सुरारे हरे ॥६॥
स्मार्तं कर्म न शक्यतेऽतिगहन कर्त्तुं सविघ्न सदा
श्रौतेऽस्मद्गतिशून्यतासुकठिने सारे च पुण्ये शुभे।
नष्टा धीश्च विवेकिता न मनन नैकाग्रतास्ति क्वचित्
क्षन्तव्यं स्खलित प्रभो मम विभो विष्णो सुरारे हरे ॥७॥
प्रात्योषःसमये च मज्जनविधौ गाङ्गं जल नाहृतम्
पूजार्थञ्च कदापि ते सुतरुतो नात्त प्रसूनं शिवम्।
नानीताः कमलस्रजो विकसिता गन्धाक्षतादीनि वा
क्षन्तव्य स्खलितं प्रभो मम विभो विष्णो सुरारे हरे ।८॥
दुग्धैराज्ययुतै सिताशुमिलितैर्मूर्तिर्न च स्नापिता
नो लिप्त वत चन्दन सुरभित नीराजनं नार्पितम्।
नैवेद्यं न समर्पित सुललित धूपो न दीपस्तथा
क्षन्तव्यं स्खलितं प्रभो मम विभो विष्णो सुरारे हरे ॥९॥
ईश। त्वं सगुणश्च सङ्गरहितो ध्वस्तान्धकारो हरि-
र्नासाग्रे च निधाय निश्चलदृशौ दृष्टो मया नो स्थिरम्।

नोन्मत्तेन हृदा स्मृत कलिमलध्वंसि त्वदङ्घ्रिद्वय
क्षन्तव्य स्खलितं प्रभो मम विभो विष्णो मुरारे हरे ॥१०॥
ध्यात्वा त्वा प्रचुरं धनं मणिमय दत्तं द्विजेभ्यो नहि
होतव्य बहुसख्यक न च हुतं मन्त्रै. क्षमानोर्मुखे ।
कालिन्दीतटगेन नाम न मया "नारायणेति" स्मृतं
क्षन्तव्य स्खलित प्रभो मम विभो विष्णो मुरारे हरे ।११॥
स्थित्वा गाङ्गतटे न वा प्रणवतो दृष्टो मतत्कुम्भकोऽ-
प्यक्षुब्धे हृदये शुभे सुगहने ज्योतिःस्वरूपे परे ।
त्वन्मूर्त्तिर्न कदाचनापि सुभगा दृष्टा च रम्या शिवा
क्षन्तव्य स्खलित प्रभो मम विभो विष्णो मुरारे हरे ॥१२॥
हे स्वामिन् ! मम जिह्वया सुरपते ! कीर्त्तिर्न गीता तव
चित्तेनाच्युत सेवितो न न हरे ! पूजा कराभ्या कृता ।
नेत्राभ्या न च वीक्षितञ्च मुदितं पश्चाच्च ! राधाप्रिय !
क्षन्तव्यं स्खलित प्रभो मम विभो विष्णो मुरारे हरे ।१३॥
पादाभ्यां गतवानहं न भगवंस्त्वन्मन्दिरे सुन्दरे
शीर्षं नैव च नामित चरणयोस्ते कृष्ण ! नारायण !
नो घ्राता तव पादपद्मतुलसी घ्राणेन वृन्दापते !
क्षन्तव्यं स्खलित प्रभो मम विभो विष्णो मुरारे हरे ॥१४॥
नो नारायणतत्त्वमव्ययमहो श्रीरङ्गनाथ ! स्मृतम्
नो जप्तः सुरनिम्नगातटतले श्रीकृष्णमन्त्रः शिवः ।
नो पीतो हरिनामनामसुरसः पाप कृतं मोहत
क्षन्तव्यं स्खलितं प्रभो मम विभो विष्णो मुरारे हरे ॥१५॥
हे स्वामिन् पतितोऽस्मरह सुगहने मोहान्धकारे हरे
हा त्यक्त्वा सकल सुकर्मसुभग भक्तिं विहाय प्रभो ।
मग्नोऽहं भवसागरे सुरपतिं त्वां न स्मराम्यच्युत !
क्षन्तव्यं स्खलितं प्रभो मम विभो विष्णो मुरारे हरे ॥१६॥

वयो नाश याति प्रतिदिनमहो हा तरुणता
निवर्त्तन्ते भूयः सकृदपगता नैव दिवसाः ।
विभूतिः सर्वापि प्रकृतितरला वीचिसदृशी
ततो रचेदानीं शरणद ! च मा संश्रयगतम् ॥१७॥
कान्त्युल्लास-लसत्तनौ नरहरौ श्रीश्रीधरे माधवे
नानारत्नविभूषिते भृगुपदस्याङ्कं हृदा बिभ्रते ।
गोविन्दे सुषमाकरे मधुरिपौ त्रैलोक्यसारे विभौ
मोक्षार्थं कुरु चित्तवृत्तिममलामन्यैस्तु किं कर्मभिः ॥१८॥
किं कोर्त्याशया वा धनतुरगगजे राज्यलाभेन वा किम्
किं वा देहेन गेहामितसुतयुवतीमित्रसौख्येन किं वा ।
ज्ञात्वैतच्छङ्कर रे सपदि हर मनो दूरतो भोगयोगा-
दाचार्य्यस्याप्तवाचा भज भज भज भो राधिकेशं नृसिंहम् ॥१९॥
दोषं सर्वं क्षमस्व श्रवणनयनजं कायजं कर्मजं वा
पादैर्हस्तैः कृतं वा द्रविणमदभवं वाङ्मयं सौख्यजं वा ।
ज्ञाताज्ञात मनोजं विविधकरणज स्वामितासम्भव वा
कारुण्याब्धे ! हितेच्छो ! जय जय जय भोः श्रीमुरारे सुरेन्द्र ॥२०॥
आवर्त्ते ललनामये तनुभवग्राहाकुले भीषणे
तृष्णारूपजले मनोजपवनोद्भूतासु मोहोर्मिषु ।
संसाराम्बुनिधौ हरेऽतिगहने नो मज्जितेभ्य प्रभो
पादाब्जे तव देहि भक्तितरणीं पापक्षयं वैभवम् ॥२१॥
“नभैकविंशत्यभिधा” स्तुतिर्या
“सुरेन्द्रनाथेन” कृता मुरारेः ।
समर्पिता सा पदपङ्कजेषु
भद्रं जनानां सततं करोतु ॥२२॥

---

शाकुन्तले उत्तररामचरिते च

# स्त्रीशिक्षाया निदर्शनम्

[ निबन्धकः—श्रीअमरेन्द्रनाथमजुमदारः ]

भो भो महाभागाः! अद्य सङ्क्षेपेण तत्रभवतोः प्रथितयशसोः कविवृन्दारकयोर्भवभूतिकालिदासयो रूपकद्वयमाश्रित्य तत्कालस्य स्त्रीशिक्षाविषयोऽस्माभिरालोच्यते। ईदृशेषु जटिलविषयेषु कुण्ठिता खलु प्राचीनानां गुरूणां कुशाग्रीयापि शेमुषी, का कथास्मद्विधानां क्षुद्रबुद्धीनाम्। विषयगौरवेण मूकीभूता अपि वयमनया कारुण्यवत्या विदग्धपरिषदा चापलाय प्रणोदिताः, अतो जानन्तोऽपि मतिलाघवमात्मनो यत्किञ्चिद् वक्तुं यतामहे।

वर्षाणि बहून्यतीतानि संस्कृतसाहित्ये तयोः कविपुङ्गवयोर्भवभूतिकालिदासयोरभ्युदयस्य भूतवतः। अधुना तयोराविर्भावकालनिर्णयचेष्टितैरस्माभिरनुमानं पूर्व्वोत्तरसाहचर्य्याञ्च ऋते न दृश्यते उपायान्तरम्। अस्मिन् देशे भारतवर्षे श्रुतिस्मृतिदर्शनकाव्यनाटकाख्यानाख्यायिकानां प्राचुर्य्यं परिलक्ष्यते, परं नितरां वर्त्तते इतिहासस्याभावः। इतिहासं प्रति प्राचीनानां विबुधानाम् एतावत औदासीन्यस्य कारणमस्माभिर्न ज्ञायते। भवतु तावत्, यत् सत्यं तदेवाविनश्वरम्। ते हि नो दिवसा गताः। उपरत प्रागेव कालिदासः, ततो नश्वरं देहं विहाय परलोकमियाय भवभूतिः, किन्त्वद्यापि विराजते तयोरसामान्यं पाण्डित्यं, तयोः सुमहती विमला च कीर्त्तिर्नाद्यापि न जीवति। अतोऽज्ञातेऽपि कविकुञ्जरयोः परिचये वयं तत्कालस्य रहस्यं प्रभूतं जानीमस्तयोः काव्येभ्यः। ताभ्यां वर्णितानि चरित्राणि पर्य्यालोच्य वयं तत्कालस्य परिचयं प्राप्नुमः।

अभिज्ञानशकुन्तलस्य प्रथमेऽङ्केऽस्माभिर्दृश्यते यत् सखीभ्यां प्रियंवदानसूयाभ्यां सह शकुन्तला सलिलपूरितकलसं कटितटे संस्थाप्य तरुलतानिचयेषु सिञ्चति जलधाराम्। अस्मिन्नवसरेऽकस्मात्तासां समीपमुपगतो राजा दुष्मन्तः। यद्यपि तासां न काऽपि त राजानमज्ञासीदिति सत्य, तथापि सन्देवमयमतिथिं सन्निधौ सम्प्राप्य सर्वास्ता विलम्बमसहमानाः पाद्यार्घ्यासनादिकमानेतु यत्नवत्यो बभूवु। झटित्येवानसूययोटज प्रेषिता हि शकुन्तलार्घ्यानयनाय, साऽप्यनसूया स्वकक्षस्थितं कलस भूमौ निधायोवाच—"इदं पादोदक भविष्यति।" रूपमुग्धस्तासां दुष्मन्तो रमणीय वचनामृतमिदमास्वाद्य सविनयमुवाच —"भवतीनां सूनृतयैव गिरा कृतमातिथ्यम्।" एव वदतो राज्ञो दुष्मन्तस्य ताः सर्वा यथानियममतिथिसत्कारं विधाय सहागन्तुकेन वाक्यालापं कर्त्तुं परितस्तमुपविविशु।

दुष्मन्तस्य मधुरगम्भीराकृतिमालोक्य सुमधुरञ्च वचनविन्यासमाकर्ण्य शकुन्तलाया हृदि सञ्जात आश्रमविरोधी भावः। प्रियंवदानसूये च विस्मयान्विते बभूवतुः। कौतूहलाक्रान्तानसूया च राजान पप्रच्छ—"आर्य्यस्य मधुरालापजनितो विश्रम्भो मां मन्त्रयते। कतम आर्य्येण राजर्षिवंशोऽलङ्क्रियते? कतमो वा विरहपर्य्युत्सुकजनः कृतो देशः? किं निमित्त वा सुकुमारतरोऽपि तपोवनपरिश्रमस्यात्मा पदमुपनीतः?" अहो नैपुण्यमस्य प्रश्नस्य। कीदृशी सुललितेयं भाषा! भाषामिमामविच्छेदभावेन विनयोऽधिवसति। न तु स्वभावगतोऽयं विनय., नैव चानुकारी कस्यापि व्यवहारस्य। ध्रुवमेव शिक्षामार्ज्जितमनसोऽभिव्यक्तिरियम्।

ततस्तृतीयेऽङ्के वयं स्वामिविरहेण म्रियमाणामिव शकुन्तलां पश्यामः। प्रियवदा स्वामिनमुद्दिश्य तां पत्रलिखनायोपादिशत्। अनसूयाऽपि प्रियवदाया वचनं समर्थयामास। ततः सत्वरमेव शकुन्तला शुकोदरस्निग्धं नलिनीपत्र नखैर्निचिह्नवर्णमकरोत्—

"तव न जाने हृदय मम पुनर्मदनो दिवापि रात्रावपि। निर्घृण तपति बलीयस्त्वयि वृत्तमनोरथाया अङ्गानि॥" अतः पर पञ्चमाङ्कस्या-दावेवास्माभिः परिलक्ष्यते यत् राज्ञः सङ्गीतशालाभ्यन्तरे प्रणय-पिपासू राज्ञी हंसपदिका राजानं तिरस्कर्तु सुमधुरस्वरसयोगेन इद गीतवती :—

"अभिनवमधुलोलुपस्त्व तथा परिचुम्ब्य चूतमञ्जरीम्।
कमलवसतिमात्रनिर्वृतो मधुकर! विस्मृतोऽस्येना कथम्॥"

अत्रापि विद्यावत्तायाः पूर्णः परिचय.। न केवल सुविदुषी राज्ञो, सङ्गीतानुशीलनमपि तया क्रियते। सङ्गीतरचनायास्तस्या नैपुण्यमीदृशमासीत् यद्विदूषकोऽस्यार्थ नावजगाम। राजाऽपि मुग्धः सन्नुवाच—"अहो रागपरिवाहिनी गीति.।"

ततश्च सप्तमेऽङ्के, दोषभारेणावनतमस्तको दुःसहवेदनपूरितहृदयो वाष्पविन्दुभिराविलितेक्षणो व्याकुलतयापगतबुद्धिर्यदा राजा शकुन्त-लायाः पुरतो नतजानुरभवत्तदा साध्वी शकुन्तला ससम्भ्रम. स्वामिनो बाहुयुगल धृत्वोवाच—"उत्तिष्ठतु, उत्तिष्ठत्वार्यपुत्रः। नून मे सुच रितप्रतिबन्धकं पुरा कृत तेषु दिवसेषु परिणामसुखमासीत्। येन सानुक्रोशोऽप्यार्यपुत्रो मयि विरस. सवृत्तः।"

कीदृशी कोमलता परिदृश्यतेऽस्मिन्ननुनये! स्वेच्छया स्वामिनः सर्वापराधमात्मनः कर्मफलस्योपरि सस्थाप्य लीलया शकुन्तला दारुणा विरहव्यथामपि विसस्मार।

उत्तररामचरितेऽपि स्त्रीशिक्षाया. प्रमाणानि सन्ति बहूनि। नाटकस्यास्य प्रथमेऽङ्के परिदृश्यतेऽस्माभिः यत्, मुनिमष्टावक्रं प्रणम्य यदा रामचन्द्र उवाच—

"स्नेह दया तथा सौख्यं यदि वा जानकीमपि।
आराधनाय लोकाना मुञ्चतो नास्ति मे व्यथा॥"

पतिगतप्राणा सीता चासीत्तदा स्वामिन निकषा। अहो कीदृशीय

मर्म्मघातिनी वाक्। अस्मादपि वचनात् किमस्ति नृशंसतरं वाक्यम ? किन्त्वहो वैचित्र्यम्। ईदृशमपि वाग्वज्रमाकर्ण्य स्मितानना सीतादेव्युवाच—"अत एव राघवकुलधुरन्धर आर्य्यपुत्रः।" अचिन्तनीयमाशातीतञ्च वचनमिदं श्रुत्वा को न विस्मयाभिभूतो भवति ? नूनमेव वागियम् एकपदे तस्याः सुशिक्षाम् अलोकसामान्यचरित्रञ्चोद्घाटयति।

द्वितीयाङ्कस्यादावेव वासन्ती देवी हृताध्वगवेशा तापसीं काञ्चित् पृच्छति—"का पुनरत्रभवतीमवगच्छामि ?" अहो किमियं नम्रतामयी भाषा! तापसीयमस्माकमात्रेयी। अध्ययनप्रत्यूहमनुभूय वाल्मीकिसकाशात् साऽगस्त्याश्रमपदं गच्छन्ती। प्रोवाच—

"अस्मिन्नगस्त्यप्रमुखाः प्रदेशे भूयांस उद्गीथविदो वसन्ति।
तेभ्योऽधिगन्तुं निगमान्तविद्यां वाल्मीकिपार्श्वादिह पर्य्यटामि॥"

तद्वचनादेवेदं सुस्पष्टं यत् सा वेदान्तशास्त्रानुशीलनार्थं गच्छत्यगस्त्याश्रमम्। एवात्रेय्यस्मानशिक्षयत् :—

"वितरति गुरुः प्राज्ञे विद्यां यथैव तथा जडे
न च खलु तयोर्ज्ञाने शक्तिं करोत्यपहन्ति वा।
भवति च पुनर्भूयान् भेदः फलं प्रति तद् यथा
प्रभवति शुचिर्बिम्बोद्ग्राहे मणिर्न मृदां चयः॥"

यदा श्रीरामचन्द्रः सीताया निर्वासनाज्ञाञ्चकार, तदा वयमेवमचिन्तयाम यदासीत्तस्य राज्ञो हृदयं पाषाणकठोरम्, अन्यथा कथमिदं सौनिककर्म्म कर्त्तुं स समर्थो बभूव ? परमेतामस्माकं भ्रान्तिमूलां चिन्तामपनेतुमाविर्भूता देवी वासन्ती। आत्रेयीमुखात् सुवर्णसीतावार्त्तामाकर्ण्य साऽऽत्मनो भ्रान्तिमवगन्तुमशक्नोद् अशकच्चास्माकं भ्रान्तिमपनेतुम्। सैव जगाद :—

"वज्रादपि कठोराणि मृदूनि कुसुमादपि।
लोकोत्तराणां चेतांसि को नु विज्ञातुमर्हति॥"

दुर्बोधं नरमात्रचरित्रम्। का कथा महात्मनाम्। विशालमरण्य-

मिव हृदयं तेषां रहस्यमयम्। भित्त्वा तु रहस्यजालं कस्तस्माद् गुप्तवस्तुन सन्धान कर्त्तुमर्हति ?

ततश्छायाङ्के महाकविः श्रीरामचन्द्र निनाय तां पञ्चवटीम्। तत्रैवारण्ये सीतया सह सुखेन श्रीरामश्चतुर्दशवर्षाण्युवास। तत् काननमेत्य तामेव वृक्षराजिं तमेव नदीनिचयं तमेव च पतत्रिपुञ्जं विलोक्य व्यतीतसुखदिनस्य स्मृत्वा रामचन्द्रस्तस्य व्याकुलं चित्तं संयमयितुं न शशाक, वारं वारं विमुच्याश्रूणि बालकवदुच्चैः स रुरोद। महावीरस्य रामचन्द्रस्य तादृशीं विह्वलतां वीक्ष्य वयं विस्मयान्विता भवामः। अत्र विदुषी तमसाऽस्माकं विस्मयमपसारयितुमुवाच— "ननु लाभो हि रुदितम्" इति। क्रन्दनाद्विना नास्ति रामचन्द्रस्योपायान्तरम्। रोदनफलेनैव स सीताशून्ये जगत्यद्यापि प्राणान् बिभर्त्ति इति। तस्या इयं वाणी—

"पूरोत्पीडे तडागस्य परीवाहः प्रतिक्रिया।
शोकक्षोभे च हृदयं प्रलापैरेव धार्य्यते॥" इति

अपरञ्च, अस्मिन्नङ्के सुविचित्रव्यतिकराणामपूर्वं समावेशं विलोक्य तमसा यत् कथयामास तस्मात् तस्या वेदान्तशास्त्रज्ञानं सम्यक् प्रकाशं लब्धवदिति प्रतिभाति। साऽकथयत् :—

"एको रस. करुण एव निमित्तभेदा-
द्भिन्नः पृथक् पृथगिवाश्रयते विवर्त्तान्।
आवर्त्तबुद्बुदतरङ्गमयान् विकारा-
नम्भो यथा सलिलमेव तु तत् समग्रम्॥"

परिशेषतो जगद्वन्दितायाः अरुन्धत्याश्चरित्रं यथासोदुदारमुन्नतञ्च, तथैवासीत्तस्या भाषा पाण्डित्यपूर्णा शास्त्रज्ञानमण्डिता च। चतुर्थेऽङ्के सैव वक्ष्यमाणस्य प्रचारकर्त्री—"गुणाः पूजास्थानं गुणिषु न च लिङ्गं न च वयः" इति। सप्तमाङ्के तु सीताचरित्रे सन्दिग्धान् अयोध्यावासिनः सा गम्भीरेण नैपुण्यपूर्णेन च वचसोपालभमाना यदुवाच

तच्छ्रुत्वाऽस्माकमपि शिरांसि सम्भ्रमात् भक्त्या च लुण्ठितानि भवन्ति तेषु पुण्यचरितारुन्धतीचरणसरोजेषु।

प्रबन्धेऽस्मिन्नस्माभिः केवलं कतिपयान्यत्यावश्यकानि स्थानानि उल्लिखितानि। कविशेखरयोरनयोर्नाटकद्वयस्य यत् किमपि स्थानं पठित्वा वयं जानीमस्तस्मिन् समये स्त्रियः शिक्षया ज्ञानेन चासन् कथङ्कारं विभूषिताः। आसीत्तासां व्यवहारो मार्जितो वचनममृत-मयम्, चरित्रं महत्, निर्मलं रमणीयञ्चेति। अलमतिविस्तरेण।

---

## संस्कृत-वर्णलेख-विमर्शः।*

[ निबन्धक —श्रीवसन्तकुमार-विद्यारत्नः ]

इह खलु भारते वर्णलेखः कदा सम्प्रवर्त्तित इत्यत्र विबुधानामशेष-विधा जल्पनाश्च कल्पनाश्च परिलक्ष्यन्ते। परन्तु कश्चिदपि भ्रवंसिद्धान्त मुपगतो न वेत्यत्र सन्देहो विद्यते। वेदपुराणादिशास्त्राणामालोच-नेन ज्ञायते यद् युगचतुष्टयपरम्परया वर्णलेखो विद्यमान इति। आदिग्रन्थ ऋग्वेदे प्राप्यते खल्वस्तित्वं वर्णलेखस्य। रामायणे भारते च वर्णलेखस्यास्तित्वं प्रमाणीकृतम्। ऋग्वेदे दशममण्डले एक-सप्ततितम-सूक्ते वर्णलेखविषयक-प्रमाणानि वर्त्तन्ते। दशममण्डलस्थस्य तस्यैव सूक्तस्य चतुर्थी ऋग् अध उद्ध्रियते। तस्माद्धि वर्णलेखस्यास्ति-त्वोपलब्धिः स्यात्।

"उत त्वः पश्यन् न ददर्श वाचमुत त्व शृण्वन् न शृणोत्येनाम्। उतो त्वस्मै तन्वं वि सस्रे जायेव पत्य उशती सुवासाः॥"

अस्य भावार्थः,—केचित् पश्यन्तोऽपि पदस्य भावार्थं नोपलभन्ते, केचिच्च शृण्वन्तोऽपि न शृण्वन्ति। यथा प्रेमपरिपूर्णा सुन्दरपरिच्छद

---

* संस्कृत-साहित्य परिषदो मासिकाधिवेशने पठितोऽयं निबन्धः।

धारिणी भार्य्या स्वपतिसन्निधौ निजाङ्ग प्रकटयति, तथा वाग्देवी कस्मैचिदप्यात्मानं प्रदर्शयति। एतेनावगम्यते तदा वर्णलेखस्य विद्यमानता। येषां वर्णज्ञानं नास्ति, त एव पश्यन्तोऽपि न पश्यन्ति। आकारविहीनाना दर्शनं न सम्भवति, अत एव वर्णलेखो विद्यमान आसीदिति गम्यते। एतद्दृगन्तर्गत-दृश्-धातुप्रयोगो वर्णलेखस्य प्रकृष्टास्तित्वपरिचायक। ज्ञायते नूनमेव सप्ततितमसूक्तस्यान्यान्यांशपाठेन वर्णलेखस्तावद् वैदिकयुगेऽपि आसीदिति। सूक्तस्यास्य कतिपयानाम् ऋचां सरलार्थोऽधो निवेश्यते।

हे बृहस्पते। प्राग् बालकाः केवल वस्तूना नामोच्चारणसमर्था भवन्ति, तदेव तेषां भाषाशिक्षाया' प्रथमं सोपानम्। वाग्देवी करुणापारवश्येन तेषां हृदयस्थमत्योयासमप्युत्कृष्टमाहितज्ञानभार क्रमशः प्रकाशतां नयति। १

यथा चालनी-सहायेन सक्तवः परिष्क्रियन्ते तथा बुद्धिमन्तो बुद्धिप्रभावेण परिस्कृतां भाषा प्रसुवन्ति। तेषां वचनविन्यासे लक्ष्मीः सुतरां विभाति। २

यज्ञो बुद्धिमतां भाषापथप्रदर्शकः। ऋषीणामन्तःकरणाधिष्ठिता भाषा ह्युत्तरकाले बुद्धिमन्तमुपतिष्ठते। अर्व्वाचीनैः सैव भाषा सम्वर्द्धिता भवति। छन्दांसि च अनया भाषया स्तुवन्ति। ३

अस्य सूक्तस्य सप्तम्यामृचि वर्णलेखस्यास्तित्व पुनश्च स्फुटं व्यक्तमास्ते। यथा येषां चक्षुषी स्त', कर्णौ च स्तः, अर्थाज् ज्ञानिनो ये, ते मनोभावप्रकटनविषये नान्यसाधारणक्षमताशालिनः।

इतरत्रापि ऋग्वेदस्य मुद्राप्रचलनप्रसङ्गाद् वर्णलेखस्यास्तित्व परिचय. प्राप्यते। अस्मद्देशे वर्णलेखस्य प्रचलनमासीदिति ब्राह्मणग्रन्थात् भूयिष्ठपरिचयम् प्राप्नुमो वयम्। कौषीतकीब्राह्मण एवमुल्लेखो वर्त्तते। यथा आर्य्या भाषाशिक्षार्थमुत्तरप्रदेशे गच्छन्ति स्म। एतेन का तावदुपलब्धिर्जायते? यदि भाषा न लिपिबद्धा

ऽभवत्, तदा कथं तस्याः शिक्षा समभवत् (१)। कौषितकीब्राह्मणादुद्ध्रियते च तदंशः।

"पथ्यास्वस्तिरुदीचीं दिशं प्राजानाद्, वाग् वै पथ्यास्वस्तिस्तस्माद् उदीच्यां दिशि प्रज्ञाततरा वागुद्यते। उदञ्च उ एव यन्ति वाचं शिक्षितुम्। यो वा तत आगच्छन्ति तस्य शुश्रूषन्त इति स्माह। एषा हि वाचो दिक् प्रज्ञाता।"

अस्यार्थः—पथ्यास्वस्तिरुदीचीं दिशं जानाति स्म। वाणी हि पथ्यास्वस्तिरियम्। अस्मात्कारणाद् उदीच्यां दिशि वाक् प्रज्ञाततरा इति जना वदन्ति। एवं प्रवादोऽस्ति यस्तत्र प्रत्यागच्छति लोकास्तस्योपदेशं श्रोतुमभिलषन्ति। अतः सुष्ठु ज्ञायते कौषीतक्या, यत् तदानीं वर्णलेखो नूनं परिपुष्टसौष्ठवसम्पन्न आसीत्। विश्वासकारणञ्च नातिदूरवर्त्ति। यतो वेदेषु तादृक्पुरातनेष्वपि व्याकरणशुद्धिर्न लक्ष्यते। ब्राह्मणभागेष्वक्षरपदप्रभृतिव्याकरणप्रयुक्तसञ्ज्ञानामुल्लेखो दृश्यते। वेदसंहिताना विभिन्नशाखास्थ स्वरग्रामोच्चारणपद्धति ज्ञापकसूत्रसमूहा विभिन्नलोकै रचिताः सन्तः प्रातिशाख्यमिति नाम्नाऽभिहिता अभूवन्। शतपथब्राह्मण एक-द्वि-बहुवचनानि, तथा छान्दग्योपनिषदि स्वरोष्मस्पर्शप्रभृति वर्णविभाजकसंज्ञा वर्त्तमानाः सन्ति।

वेदव्याख्यार्थम् प्रातिशाख्यम् प्रणीतम्। तत्र प्रातिशाख्ये व्याकरणसम्बन्धीनि समस्तलक्षणानि वर्त्तन्ते। प्रातिशाख्ये संज्ञा-सन्धिकारकतद्धितसमासप्रभृतयो विद्यन्ते, किन्तु ते तु केवलं वैदिकपदसाधनोपयोगिनः। तैत्तिरीयप्रातिशाख्यस्य प्रथमसूत्रमिदं यथा—"अथ वर्णसमाम्नाय."। एतेन खलु ज्ञायते वैदिकयुगेऽपि वर्णलेखस्य विद्यमानता (१)।

"उदीच्यां दिशि प्रज्ञाततरा वागुद्यते" अनेनावगम्यते यत् तदानीन्तनकाले तत्रत्या लोकाः प्रातिशाख्ये प्रभूतं पाण्डित्यमलभन्त।

अतो लोका भाषाशिक्षार्थम् उदीच्या दिशि गच्छन्ति स्म, यथाधुना लोकाः शिक्षार्थं वाराणसीं नवद्वीपं वा गच्छन्ति। सामवेदान्तर्गत-गोपथब्राह्मणे वर्णानां लक्षणानि लिखितानि सन्ति। ताण्ड्योपनिषदि वर्णस्वरमात्राप्रभृतीनां नामानि दृश्यन्ते। तैत्तिरीयोपनिषदि शिक्षा-वल्लीप्रकरणे 'वर्णस्वरमात्राबल साममन्ताना' इत्यादीनामुल्लेखो विद्यते। तैत्तिरीयसंहिताथर्व्व-संहितादिषु ज्योतिषशास्त्रोक्तानाम् अष्टाविंशतिनक्षत्राणां नामानि दृश्यन्ते। अयं हि वर्णलेखस्य वर्त्तमानतायाः प्रमाणान्तरम्। यत्र ज्योतिषशास्त्रस्यैतादृशोत्कर्षोऽभवत् तत्र वर्ण-लेखो नासीदिति उन्मत्तप्रलापवदसारो वादः श्रूयते।

स्मृति संहिताशास्त्रेषु लेखविषयकवर्णन वर्त्तते। यथा याज्ञवल्क्ये,

स्मृत्याचारव्यपेतेन मार्गेणाधर्षित परैः।
आवेदयति चेद्राज्ञे व्यवहारपदं हि तत्॥
प्रत्यर्थिनोऽग्रतो लेख्यं यथावेदितमर्थिना।
समा मास-तदर्द्धाहर्नामजात्यादिचिह्नितम्॥
श्रुतार्थस्योत्तरं लेख्यं पूर्व्वावेदकसन्निधौ।
ततोऽर्थी लेखयेत् सद्यः प्रतिज्ञातार्थसाधनम्॥

२अ० ५—७म श्लोकाः।

अस्यार्थः—स्मृत्याचारविरुद्धपद्धत्यनुसारेण शत्रुभिरुपपीडितः सन् यदा व्यवहारदर्शकस्य सन्निधौ पीडनविवरणमावेदयति, तदा तद्धि व्यवहारविषयो भवेत्। अर्थिना यथावेदितं तत् प्रत्यर्थिनोऽग्रतो लेख्यम्। तस्मिन् लेख्ये वत्सरमासपक्षतिथिवारादयो वादिप्रति-वादिनां नामजातिप्रभृतयश्च उल्लिखिता भवेयुः। भावार्थस्य श्रवणान्ते प्रतिवादी यत् वदेत् तद् सर्व्वं वादिनः समक्षे लेख्यम्। ततो वादी सद्य आत्मपक्षीयप्रमाणं लेखयेत्। अन्यच्च,—

दद्याद्भूमिं निबन्धं वा कृत्वा लेख्यञ्च कारयेत्।
आगामि-भद्र-नृपतिपरिज्ञानाय पार्थिवः॥

पट्टे वा ताम्रपट्टे वा स्व-मुद्रोपरिचिह्नितम् ।
अभिलेख्यात्मनो वंश्यानात्मानञ्च महीपतिः ॥
प्रतिग्रहपरिमाणं दानाच्छेदोपवर्णनम् ।
स्वहस्तकालसम्पन्नं शासनं कारयेत् स्थिरम् ॥

१म अ० ३१८—३२० श्लोकाः ।

अस्यार्थः—राजा भाविभद्रभूपानां परिज्ञानाय लेख्यं कारयित्वा भूमिं निबन्धं वा दद्यात् ।

राजा कार्पासादिपट्टे वा ताम्रफलके वा निजवंशस्य पित्रादित्रयस्य स्वस्य प्रतिग्रहीतुर्नामानि तथा प्रतिग्रहस्य च परिमाणं ग्रामक्षेत्रादि-प्रदत्तभूमीनां चतुःसीमापरिमाणनिर्देशञ्च लेखयेत् । उक्तपत्रे स्वीय-हस्ताक्षरञ्च सम्पादयेत् । वत्सरमासप्रभृतिकालस्योल्लेखनञ्च कुर्य्यात् । तदनन्तर स्वीयमुद्राङ्कणेन शासनं दृढं विदध्यात् ।

मनुसंहितायामष्टमाध्याये व्यवहारदर्शननियमसाक्षिविवरण-प्रसङ्गेषु लेख्यादेरुल्लेखोऽस्ति । उक्ताध्यायस्य सप्तचत्वारिंशत्तमैकपञ्चा-शत्तमद्विपञ्चाशत्तमश्लोका उद्ध्रियन्ते ।

अधमर्णार्थसिद्ध्यर्थमुत्तमर्णेन चोदित ।
दापयेद्धनिकस्यार्थमधमर्णाद्विभावितम् ॥
अर्थेऽपव्ययमानन्तु करणेन विभावितम् ।
दापयेद्धनिकस्यार्थं दण्डलेशञ्च शक्तितः ॥
अपह्नवेऽधमर्णस्य देहीत्युक्तस्य संसदि ।
अभियोक्ता दिशेद्देश्यं करणं वान्यदुद्दिशेत् ॥

उद्धृतश्लोकेषु लिपिर्लेख्यं लिखितमितिशब्दानां प्रयोगो नास्ति । परन्तु कुल्लूकभट्टस्य टीकायां लिपीति शब्दस्यावगमो भवति । अष्ट-षष्ट्यधिकशततमश्लोके "लेखित" इति शब्दस्य व्यवहारो दृश्यते । श्लोको यथा—

"बलाद्दत्तं बलाद्भुक्तं बलाद् यच्चापि लेखितम् ।"

इत्यादिः। विष्णुसंहितायाः सप्तमाध्याये लेख्यं पत्रम् इति विषयकं त्रयोदशसूत्राणि सन्ति। विविध लेख्यं तदानीं प्रचलितमासीत्। तेषु सूत्रेषु लेख्यं कीदृश स्यादिति निर्द्धारितम्। कात्यायन नारद प्रभृतयो लेख्य साक्षिप्रभृतिविषयमविज्ञत्य ज्ञातव्यविषयमुल्लिखित-वन्त'। रामायणे सीतायाः विश्वासोत्पादनाथ हनूमता राम नामाङ्कितं स्वर्णाङ्गुरीयकं सीतायै प्रदर्शितमित्युल्लिखितमस्ति। रामायणरचनाकाले वर्णलेख. प्रचलित आसीदित्यत्र नास्ति कोऽपि सन्देहः। सुन्दरकाण्डे षट्त्रिंशत्तमसर्गे तदङ्गुरीयकप्रदर्शनविषयक-वर्णनास्ति, सा ह्यध' समुद्ध्रियते।

भूय एव महातेजा हनूमान् पवनात्मज ।
अब्रवीत् प्रश्रितं वाक्यं सीता प्रत्ययकारणात् ।
वानरोऽहं महाभागे दूतो रामस्य धीमतः ।
रामनामाङ्कितश्चेदं पश्य देव्यङ्गुरीयकम् ॥

महाभारते शान्तिपर्व्वणि न केवल ब्राह्मशाख्य-वर्णमालाप्रसङ्गो वर्त्तते, परन्त्वनया ब्राह्मया भाषया वेदपुराणादिशास्त्राणि लिखि-तानीत्येवमुल्लेखः प्राप्यते। वेदविक्रयिणो वेदनिन्दका वेदलेखकाश्च निरयगामिनो भवन्तीति महाभारतोक्तमनुशासन दृश्यते। पद्म-पुराणान्तर्गत-पातालखण्डे त्रिषष्टितमाध्याये देवलिपिप्रसङ्गो वर्त्तते। तत्र श्रीरामस्य प्रश्नोत्तरप्रसङ्गेन शम्भुना प्रोक्तमिदम्।

पुराणजोवी पूजार्हः स्वशाखाध्ययनः शुचिः।
मीमांसातत्त्वविज्ञान' श्रोत्रियोऽनृतदूषकः ॥
देवेषु च समस्तेषु समदृष्टिः शिवे रत' ।
शतरुद्रीयजापी च साग्निकश्चातिवाचकः ॥
यजुर्व्वेदो विशेषेण पूजयेत् पुस्तकं सुधीः ।
श्रीतालपत्रलिखित देवलिप्यन्वितं शुभम् ।

वर्णलेखास्तित्वमनेन श्लोकेनावगम्यते। देवलिपिः कीदृशी तद्वि-षये शम्भोरुक्तिरियम्—

वन्ध्याद्यन्तिप्रासपट्टयुगलात् प्रणवाचरम् ।
प्रागूर्द्ध रेखयोः प्रान्ते प्रणवस्याग्रयोजिका ॥ इत्यादि ।

निष्करूप्यप्रभृतयो मुद्रावाचकशब्दाः पाणिनिव्याकरणे दृश्यन्ते। अमी शब्दाः प्राचीनवर्णलेखानां विद्यमानताया बलवत्तर प्रमाणम्। पाणिनिव्याकरणस्य प्रारम्भे यानि माहेश्वरसूत्राणि वर्त्तन्ते, तानि तु वर्णलेखानां श्रेणीविभागरूपेणावभासन्ते। तत्र लिपिकरशब्दस्योल्लेखनस्य साधनप्रणालीञ्च दृष्ट्वा पाणिनेः पूर्व्वकालेऽपि वर्णलेखो विद्यमान आसीदिति ज्ञायते। पाणिनेः पूर्वसूरयः यास्क पारस्कर-शाकटायन-व्यासप्रभृतयो ग्रन्थप्रणेतार आसन् इति पाणिनिसूत्रे स्फुटमाख्यातम्। वेदेषु सुबहल्यः संख्याः परिदृश्यन्ते। यदि ता न लिपिबद्धा आसन्, तदा कथ तासां बोधः समजायत। मूढाः स्वीयबोधशक्त्यनुसारेण संख्यां वाचा प्रकाशयन्ति। मूढा हृहत्तरसंख्यां मनसि निर्द्धारयितु न शक्नुवन्ति, वाचा प्रकाशनन्तु दूर आस्ताम्। वैदिकयुगे कृषि-पोतवाणिज्यप्रभृतिजीविकोपायानाम् प्रभूतोन्नतिरभवत्। यदि वणिज कर्म्मणा सौकर्य्यार्थं वर्णलेखं न समाश्रयेयुः तदा कथं ते लाभालाभनिर्द्धारणादौ समर्थाः स्युः। आयुर्व्वेदः खल्वथर्व्ववेदस्योपाङ्गं ब्रह्ममुखविनिर्गतमिति श्रूयते। यत्र जन्ममरणसम्पर्को विद्यते, तत्र किं शरीररक्षार्थमोषधिविशेषाणां योगविशेषेष्वोषधाना प्रयोगस्थलानि च नोदाहृतानि ? यदि कैरपि एवमुच्यते यत् 'ते तु श्रुतौ तस्थुः' तदा अह ब्रवीमि एव काव्ये सम्भवति, न तु जन्ममरणयुक्ते शरीरविज्ञाने। यत्र सार्द्धत्रिकोटिर्नाड्यो विद्यमानाः। स्वयम्भुवा सहस्राध्यायविभक्त-लक्षश्लोकसम्पन्नमायुर्वेदशास्त्रं सृष्टं ; किमेवं सम्भवति यत् तदानीन्तनचिकित्सका लिखनं विना अकूलपारावारकल्पं शास्त्रमायत्तीकर्त्तुं शेकुः ? अतो दृढसिद्धान्तोऽयं मम यद् वैदिकयुगेऽपि वर्णलेखो न केवलं श्रुतौ परन्तु लेखक्रियोपयोगिभूर्जत्वगादिष्वपि स्थानमलभतेति शम्।

## वङ्कदूतम् *

( पूर्वतोऽनुवृत्तम )

[ निबन्धकः—महामहोपाध्यायः श्रीअजितनाथन्यायरत्न ]

तामुत्तीर्य्य प्रियतमसखाधिष्ठिता धीरसेव्या
वृन्दारण्यप्रतिनिधि बहिर्गच्छनाम्नी पुरी या ।
एकां रात्रिं क्षपयतु भवान् तत्र पुण्यां खगेन्द्र !
वर्त्मश्रान्तिं व्यपनय तरुं कञ्चनाश्रित्य कामम् ॥९

यत्रानेके विबुधगुरवो मङ्गलेनावसन्तः
काव्यालापे सुरपतिसभामीर्ष्यया नाटयन्ति ।
तस्मादेकां सुरनरगणैर्माननीयामपीमां
मन्दाक्रान्तामवगणयतु क्रौञ्चवंशावतंस ! ॥१०

यत्र ग्रामे कविकुलगुरुः कालिदासो द्वितीयः
कृष्णानन्दः सुविदितसरस्वत्युपाधिः पुरासीत् ।
गङ्गातीरे चरमवयसि प्राप्तवासः प्रभूतान्
नानाग्रन्थानरचयदिह श्रीशचन्द्रानुमत्या ॥११

अस्मिन् ग्रामे नृपगुरुकुले रामभद्रस्य पौत्रो
भू विख्यातो रघुमणिरभूत् सर्वशास्त्रार्थदर्शी ।
भूरिग्रन्थानिह हि विविधान् सम्प्रणीय प्रभूतान्
कीर्त्तिस्तम्भानिव जगति यः स्थापयामास धीरः ॥१२

अस्तं यास्यन् श्रियमिह निजामक्षयेन्दौ समर्प्य
लक्ष्मीकान्तो रविरिव महान् पण्डितोऽस्तं जगाम ।
उग्यक्त्राक्षयविधुरयं वैरिवक्त्राम्बुजाना-
मन्तेवासिप्रमुखकमलानाञ्च मुद्रां तनोति ॥१३

---

* महामहोपाध्याय-श्रीयुक्तशितिकण्ठवाचस्पतिमहोदयसकाशात् प्राप्तम् ।

वृन्दारण्यप्रतिनिधि-वहिर्गच्छसंज्ञे वनेऽस्मिन्
एको मात्र विलसति मधुस्तर्कपञ्चाननाख्य' ।
रोगैर्जीवन्मृत इव गुरोरन्ववाये विषण्ण:
पश्चाघातादचरणतया केवलं क्लिश्यतीह ॥१४
भद्रा नन्दा नियमितजरा पुण्यपूर्णा पुरीयं
रिक्ता पापैः कविगुरुबुधैरिन्द्रलक्ष्मीं हरन्ती ।
पुण्यामस्या समुदयतिथियौंगपद्येन योगात्
तस्मादस्यां द्विज किमतिथे । स्थानमेतन्न जाने ॥१५
तत्रातिथ्यं द्विजगणसुदुष्प्राप्यमन्नादिजात-
मात्मीयत्वान्नरपतिपुरं यास्यतो नास्त्यलभ्यम् ।
नानाभक्ष्यं कति च शफरी-शुक्ति-शम्बूकमिष्टं
भुङ्क्त्वाशेषं द्विजकुलमणे । किन्तु पत्रावशिष्टम् ॥१६

---

## योग-रहस्यम्

( पूर्व्वतोऽनुवृत्तम् )

[ निबन्धकः—साधनसमरप्रणेता ]

**स तु दीर्घकालनैरन्तर्य्यसत्कारासेवितो दृढ़-भूमिः ॥१४॥**

अभ्यासपराकाष्ठां दर्शयति स इति । सः अभ्यासः, तु शब्दोऽनायाससिद्धतां निषेधति । दीर्घकाल', उक्तञ्च "बहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यत," इति, नैरन्तर्य्यं व्यवधानराहित्यम्, उक्तञ्च "तस्मात् सर्वेषु कालेषु मामनुस्मर युद्ध्य चेति ।" सत्कारः श्रद्धादरातिशयः,

तैः सहायभूतैरित्यर्थः। आसेवित इति, आ सम्यक् सेवितोऽनुशीलितोऽभ्यास इति भावः। दृढभूमिर्दृढाऽविचलिता सम्शयविपर्य्ययादिभावनारहिता भूमिः स्थितिरित्यर्थो भवतीति शेषः। व्युत्थानरहितां वा सप्तमीं ज्ञानभूमिका तुर्य्यगामभिप्रेत्यैव दृढभूमिरित्युक्तम्॥ १४ ॥

## दृष्टानुश्रविकविषयवितृष्णस्य वशीकारसंज्ञा वैराग्यम् ॥१५॥

अभ्यासं निरूप्य तस्मादाविर्भूतमपरं निरोधोपायं वैराग्यमुपदिशति दृष्टेति। दृष्टा ऐहिका कामिनीकाञ्चनादयस्तथानुश्रविकाः पारत्रिकाः स्वर्गादयो विषया भोग्यास्तेषु वितृष्णस्यासक्तिरहितस्याभ्यासनिपुणस्याधिकृतो वशीकार इति यथार्थ-सञ्ज्ञा नाम वैराग्यमाविर्भवतीति शेषः। विगतो रागो यस्य सः विरागः, द्वेषस्यात्र रागपदार्थः तस्यापि रागरूपत्वादिति, तस्य भावो वैराग्यम्।

इदमत्र ज्ञातव्यं,—योगविमुखाः प्राकृता दृष्टादृष्टभोग्यविषयेषु विजातीयभेदबुद्धिसम्पन्नाः सुतरामिष्टानिष्टविषयेषु रागद्वेषसमाकुलाः प्रवर्त्तन्ते। अपरे तु योगाभिमुखाः श्रद्दधाना जना ऐहिकामुष्मिकेषु भोग्यजातेषु द्रष्टुरात्मन एव सारूप्य ज्ञात्वा स्वगतभेदेषु दृश्येषु न सज्जन्ते। स्वरूपस्थितिप्रयत्नरूपाभ्यास एव तेषां दृश्योदासीनतां जनयति। ततश्चेष्टानिष्टप्रत्ययाभावान्न भोग्येष्वनुरागो न वा द्वेषः। एवञ्च विषयलोलुपं चित्तं वश्यभावमापन्न रागद्वेषविहीनं भवतीति वशीकारसञ्ज्ञा वैराग्यमुच्यते। उक्तञ्च,—"रागद्वेषविमुक्तैस्तु विषयानिन्द्रियैश्चरन्। आत्मवश्यैर्विधेयात्मा प्रसादमधिगच्छती"ति॥ १५ ॥

## तत्परं पुरुषख्यातेर्गुणवैतृष्ण्यम् ॥१६॥

अभ्यासवद् वैराग्यपराकाष्ठामपि दर्शयति तदिति। तद् वैराग्य परं श्रेष्ठं परवैराग्याख्यं भवति, कथमित्युच्यते पुरुषख्यातेः पुरुषस्य

प्रत्यगात्मनः ख्यातेः प्रकाशात्, तत्-कथमित्याह गुणवैतृष्ण्यं गुणेषु वक्ष्यमाणेषु सत्त्वादिषु वैतृष्ण्यं वितृष्णाभावः सम्यगनासक्तिरित्यर्थः। गुणवैतृष्ण्यरूपं परवैराग्यमिति। उक्तञ्च "रसवर्जं रसोऽप्यस्य परं दृष्ट्वा निवर्त्तते ॥" इति। इदमत्र ज्ञातव्यम् अहङ्कारपरिहार एव वैराग्य-पराकाष्ठा केवलेन पुरुषदर्शनेनाविर्भवति सा, नान्यतः ॥ १६ ॥

वितर्कविचारानन्दास्मितारूपानुगमात् सम्प्रज्ञातः ॥१७॥

दर्शितो निरोधोपायोऽधुनाऽरुणोदयमिव योगपूर्वरूपं विवृणोति वितर्केति। दृश्यं द्रष्टुरेव सारूप्यमित्यनुभववतामभ्यासवैराग्यसम्पन्नानामाविर्भवति सम्प्रज्ञातो नाम योगपूर्वरूपम्। स च वितर्कविचारानन्दास्मितारूपानुगतः सोपानचतुष्टयरूपस्तथापि योग इत्याख्यायते, योगैकान्तसन्निहितत्वात्। तत्र हि दृश्यमिदमसावहं द्रष्टेदं च दर्शनमिति द्रष्टुरेव त्रिधानुभास विशेषेण तर्क्यत इति वितर्कस्तथा तत् त्रयम् एक एव द्रष्टेति तत्र विचरणं विचारो नाम। एवञ्च देहेन्द्रियादिषु ह्लादमयोऽनुभवः समुपजायते, स आनन्दः। ततः क्रमेणात्मीयैकात्मिका प्रतीतिमात्रेऽवस्थितिरायाति सास्मिता; एतच्चतुष्टयरूपमनुगम्यते अवबुध्यत इति रूपानुगमस्तस्मादनुगमाद् योगोऽयं सम्प्रज्ञात इति। सविशेषानुभवरूपं सम्प्रज्ञात विद्यत इति सम्प्रज्ञातः ॥ १७ ॥

---

## ग्रहविलसितम् *

[ निबन्धकः—श्रीउपेन्द्रमोहनसांख्यतीर्थः ]

अनुकम्पितोऽस्मि परिषत्सम्पादकैरागामिनि दिवसे भाविनि परिषदधिवेशने निर्दिष्टपूर्वैः प्रबन्धकर्तृभिर्ग्रहवैगुण्यादनुपस्थास्यद्भिरवतारितः प्रबन्धभारो भवतैव वोढव्य इति सद्यःसन्देशेन। विष्टिकर्म्मणि नियुक्तस्य राजर्षेर्भरतस्येव शिविकया रहूगणवहनं, कर्म्मक्षयमीहमानस्य ममापीदमादेशप्रतिपालनं नाम। अभूच्च तदा मम मनसि यत् किमिद ग्रहवैगुण्य तत्रभवन्त निर्दिष्टपूर्वं प्रबन्धकर्त्तारमपरिजहदेव मामपि भाग्यहीनमग्रहीत्, कथमन्यथा चिराभिलषिताद्विषयात्तत्रभवन्तं वियोज्य मामप्यसस्तुनभयावहे प्रबन्धप्रवाहे प्रपातयदात्मनो ग्रहाभिधानमन्वर्थीकरोति। अत्र किमेक एव ग्रहः प्रभुर्भिन्नो वा, यदि तावदेक एव, तदा कथमेक विरुद्धफलप्रदातृत्वमेकदैव तस्य सम्भवेदिति नावधारयितुमर्हामि। अथ भिन्नश्चेदपि कथमेकदैवोभयोरेकविध एव विपत्पातः। एकविपन्निबन्धनैवापरविपदिति सम्बन्धोऽपि तयोरेकः सम्भाव्यमान इव प्रतिभाति हेतुवादपरेषु। स च सम्बन्ध एकस्यैव कर्त्तृत्वमाश्रित्य यथा प्रत्यवतिष्ठेत, न तथा भिन्नकर्त्तृत्व इत्यपि न निर्हेतुक कौतुकमिव प्रतिभाति। अस्य च ग्रहाभिधानस्य जीवस्य किमस्मादृशामिव जन्मन्यदृष्टं कारणम्, आहोस्वित्कारणान्तरमस्ति। अदृष्टकारणत्वेऽपि जन्मन. पर कि तस्यापि ग्रहान्तरभीतिः शक्यसम्भवा न वा ? तथात्वे त्वनन्तग्रहकल्पनाप्रसक्तिः, अन्यथात्वे च कथं तस्य सुखदुःखादिप्राप्तिः सम्भवति ? सुखदुःखादीनां ग्रहपराधीनोत्पत्तिकत्वात्। आ-कीटादाकैटभवैरि सर्वमेव जगद् ग्रहगृहीतं सत् पक्षाघातग्रस्तमिव न स्वयं परिवर्त्तितुमपि शक्नोति, का कथा स्वाभिलषितसम्पादनाय पटुतरकरण इव स्वल्पमपि चेष्टितुम्।

---

* संस्कृत-साहित्य परिषदो मासिकाधिवेशने पठितोऽयं निबन्धः।

अनेन च कवलितास्ते ते महान्तो नलो वा श्रीवत्सो वा युधिष्ठिरो वा कामवस्थामन्वभवन्निति सर्वजनविदितमिदं वस्तु, न वय पुनरेतेषामुल्लेखेन पिष्ट' पेषयाम । सोऽयमतिप्रतापशाली ग्रहो नि'सहाय एव सर्वं जगदुच्छेत्तुमर्हतीति किं वक्तव्य यदि पुनरुपसर्गेण कृतसाहायकः स्यात्। 'एकेनोत्पाटिता लङ्का किमु यत्र चतुष्टयम्।' उपसर्गसहायेन चायं बहुरूपतामासाद्य एकैकरूपेण चैकैकं कर्म निष्पादयन् मानवसमाजे उपग्रहनाम्ना व्यवह्रियते। तथाहि—व्युपसर्गयोगभयङ्करोऽयं परस्परराज्यलिप्सोर्नृपयोर्वा पैत्रधनविभागार्थं भ्रात्रोर्वा आमिषलोभादामिषाशिनोः पक्षिणोरन्तरा वा रणरूपेण समुत्तिष्ठन् एकतरव्यक्ते रक्तदर्शनेव विरमतीति प्रायो दृष्टचरं सर्वेषाम्। तत्रापि चित्रमितदेव यत्, मानवेषु अस्य प्रभावो यथा अप्रतिहतप्रसरो न तथा पश्वादीतरप्राणिष्विति कार्य्यदर्शनाद् वयमनुमिनुम । तथाहि योऽप्ययं वि उपसर्गयोगेन विग्रहरूपो ग्रहः, स च नरेष्वाजन्मान्तिक वैर साधयन्नपि क्षणमात्रेणैव निर्वाणं लभते पश्वादिष्विति नापरोक्षमर्हिमता विदुषाम्। श्रुतञ्चास्माभिः कस्यचिदनेकदर्शिनो मुखात्,—यत् पटुतरकरणेष्वेव नरेषु ग्रहः प्रायेण प्रवर्त्तते नापटुकरणानाम्। तत्र तेषामिदमेव निदर्शनं यत् प्रतिशतं नराणामनेक एव ग्रहवैगुण्यात् काणत्व खञ्जत्वादिकमनुभवन्ति, किन्तु प्रतिशतं पशूना नैकोऽपि कदापि काणः खञ्जो वा परिलक्ष्यते। अत्र ग्रहसंस्थानविज्ञानपटवो विद्वांस एव कारणान्तराणि सारासारवन्ति मरोमृग्यन्तामिति योग्यतमैय पृष्ठप्रदर्शिता मादृशानाम् अल्पविदुषाम्। उपसर्गान्तरमहिम्ना च नि ग्रहरूपोऽय मानवाना यादृशी दुर्गतिमनर्गलमादधाति, सा तु साम्प्रतमेव लोचनगोचरीभूता पारिषदानाम् अयोग्यतमे मयि प्रबन्धृत्वभारमारोपयतामद्यतने मासिकाधिवेशने। कोयमिदानीं निग्रहो भवता विगुणग्रहाणां, यदेकतो मशकदंशः, द्वितीयतः स्थाणुरिव निश्चलावस्थानं, तृतीयञ्च अमूल्यानां समयानामनर्थक-व्यय ;

फलमुन्मत्तप्रलापश्रवणमात्रम्। सर्वथा कुरुत नमो ग्रहाय तस्मै सोपसर्गाय यदनुग्रहान्नैतादृशीमवस्था पुनर्लभेध्वमिति।

निग्रहरूपग्रहस्य न केवल चेतनवत्सु प्राणिषु परमचेतनेषु शास्त्रादिष्वपि दृश्यतेऽखण्डितमाधिपत्यम्। अचेतनेषु कागद-द्रुमपत्राद्यात्मकेषु ग्रन्थादिषु निग्रहरूप ग्रहस्यास्य किं कीटदंशः फलम्, आहोस्विद् अध्ययनाध्यापनविरह इति त एव जानन्ति निरवशेष, ये ह्यत्र कृतपरिश्रमा अपि न सम्यगवियन्ति, ये वा प्राचीनजीर्णपुस्तका-ध्ययनावसरे कीटदष्टत्वादक्षरपरिचयविधुरा विपद्यन्ते। निग्रहस्थानानि च न्यायशास्त्रोक्तानि निर्दिष्टसंख्यकान्यपि लौकिकासंख्यनिग्रह-स्थानानीव वादिनं प्रतिपक्षं वा दुर्दशामापादयन्तीति विदित वादि-प्रतिवादिभ्याम्। तानि तु लौकिकानीव लोकानामरुन्तुदानि भवन्ति नवेति वादे लोके च निग्रहभाज एव विभावयन्तु नितराम्। यदि च लौकिकनिग्रह एव भूयसा भयापादकः स्यात्तदा मानवेष्वेव ग्रहाणां विशेषप्रभुतेति पूर्वोक्त-मन्मतानुविधानं धिनोति मद्विधाना मानसानि। पर्य्युपसर्गयोगी चाय ग्रहः परितः परिभ्रमन्नपि संसारमूर्द्धनि, यद्यपि विरक्ताना परिग्रहाय न कल्पते, तथापि संसारिणां परिग्रहरूपेण पर-मापन्निदानमिति सभयमभिधातुमर्हामः। विपत्परोऽयं परिग्रहः संसारिसमाजे परमोपादेयतया परिगृह्यमाणोऽपि मुमुक्षुसमवाये पुन-र्हेयतयैवोपादीयत इति—'परिग्रहो हि दुःखाय न सुखाय कदाचन'। —इत्यादिस्मृतिबलादनुभूयते। कथञ्चिदेतत्कवलितस्यापि कष्टेन पुनः स्वरूपावस्थितस्य कालान्तरे नितरामनुशोचनाप्रकारोऽपि स्मर्य्यते —"स मे समाधिर्जलवासमित्र-मत्स्यस्य सङ्गात् सहसैव नष्टः। परिग्रहः सङ्गकृतो ममायं परिग्रहोत्थाश्च महाविधित्साः॥" इति।

दर्शनादौ व्यापकरूपेणोपलभ्यमानोऽप्ययं ग्रहो व्यवहारविधौ पुनर्भार्य्यायामेव पर्य्यवस्यतीति लौकिकी प्रसिद्धिः। जगति चैतत्-प्रतियोगि ग्रहान्तरं नास्तीति सर्वदा तद्रसाभ्यस्ता एव प्रस्तुवन्ति

ममाग्रे। विकुर्वंश्च ग्रहान्तरं सपादग्रहं प्रणामेन, ताम्रादि-धातुद्रव्य ग्रहणेन सभक्तिक पूजोपासनादिना च प्रसीदति, तथाप्यप्रसीदंश्च सोरस्तारमभिशप्यते मानवैः, किन्त्वभिशप्तमप्यप्रसीदर्दपि न दुरदृष्टान्तरं जनयति। अयन्तु (परि)ग्रहो विकुर्वाणः शिरःकुट्टनैरपि न प्रसीदति। आस्तां ताम्रादिधारणं स्वर्णप्रदानेनापि न प्रकृतिमापद्यते, पादग्रहणाद्युपासनया पुनरुपहास सम्भावयन्नधिकतरं कुप्यति। अभिशप्तस्यैदास्तां प्रसादः, परं दुरदृष्टान्तरजननेऽपि न कृपणायते सुतराम्। एवंविधेनापि ग्रहेणानेन परिग्रहरूपेण कदाचिद् भाग्यवशादारूढप्रसादेनोपादीयमानो मानवः कृतार्थम्मन्यो भवति, तत्प्रसादार्थं प्राणात्ययमपि नाधिकं सम्भावयति, न वाकार्य्यमपि किञ्चिदिह जगति कर्त्तुमपरज्यते नाम। तस्य च ग्रहस्य उपोपसर्गे भूयानाग्रहः परिदृश्यते। तथाहि—उपोपसर्गयोगिन पतिमिव बहुमन्यत इति बहुदर्शिनः समामनन्ति। रागस्तु कदाचिदनुपलभ्यमाणोऽपि उपरागः सर्वदैव वदनमण्डलमलङ्करोति। अनभिमतपतिना सहवासमनभिलषन्ती उपवासमनुजानातीति च परिग्रहो व्याख्यातः। अभ्युपसर्गयोगीनायं दस्युरूपी (अभिग्रहपदेन दस्युः प्रतीयते) निर्जने वनप्रदेशे जनसम्मर्दबहुले राजपथे, नौयानेन जलपथे वा पथिकस्कन्धारूढ़स्तं कपर्दकमात्रसम्बलशून्यं विदधानः परा प्रीतिमाविष्करोति। त एव जगति निपुणतया प्रख्यायन्ते, ये तद्ग्रहगोचरता सकृदपि नोपगता इति गतमभिग्रहेण। प्रग्रहरूपश्चायं सारथि करस्थो घोटकनियमणे शक्तोऽपि सम्प्रति गौण्या वृत्त्या वेत्रादिरूपेण छात्रानपि न परिजहाति शिक्षकहस्तगतः। असीमा चास्य शक्तिरुत्पथगामिनो घोटकादारभ्योन्मार्गगामिनो जनानपि तथा पीडयति, यथा न ते मनसापि पुनस्तास्तान् पथः प्रतिगच्छेयुरिति। अवग्रहरूपेणायं वृष्टिप्रतिबन्धेन कर्षकाणा यथापकरोति न तथा चेतराणामिति "मानवेष्वेव तस्याधिक्येनाधिकार" इति पूर्वोक्तमतानुप्रवेश एव परिलक्ष्यते।

यद्यपि वृष्टिप्रतिबन्धेन क्षेत्राणामेव मुख्यतोऽपकारो भवति, तथाप्यचेतनत्वेन तेषां सुखदुःखाद्यभावात् सुखदुःखशालिनस्तत्कर्षका एव फलभाज इति व्यवह्रियन्ते। स चायमवग्रहोऽनावृष्टिरूपः षण्मीतीनामन्यतमः प्रजानां दुःखनिदानमिति शास्त्रकृतः समामनन्ति। ताश्च—'अतिवृष्टिरनावृष्टिः शलभा मूषिकाः खगाः। प्रत्यासन्नाश्च राजानः षडेता ईतयः स्मृताः'॥ इति। आग्रहरूपेणाय जनान् लोकसमाजे उपहासास्पदत्वं नयतीति सर्वप्रत्यक्षमिदम्। अस्य च ग्रहिलतेति नामान्तरं कल्पयितुं शक्यते। एतद्ग्रहप्रभावेण भूताविष्टा इव मानवाः कार्य्यमकार्य्यं वा न गणयन्ति, केवलमभिलषितं प्राप्तुमेव प्राणैः पणैर्यतमाना दृश्यन्ते। प्रतिग्रहरूपश्चाय ग्रहो निरवद्याद् गृहीतदेहश्चेत् कथञ्चिद् विसोढप्रतापोऽपि जातिवर्णप्रतिपत्तिहीन सार्वभौमिकत्वमापन्नः पुनरनर्गलमेव दुर्गतिद्वारं विदधातीति नास्ति सन्देहलेशोऽपि। अद्यत्वे पुनस्तथाविध एव स प्रायशः परिलक्ष्यत इति नैतस्याश्रयभ्रंशः कथमपि भवति। केचन चातिमानुषं व्यवसायमवलम्बमानास्तस्मात् प्रतिग्रहग्रहाद् विराममभीप्सवो वाराणसीं समाश्रयन्ते। तत्र चेदं सम्भाव्यते, यत्तस्याः पृथिवीबहिर्भावादिवास्य प्रतापो नातिरूढतां गच्छतीति प्रतिग्रहोऽपि स्वल्पेन वचसा प्रतिगृह्यते।

संग्रहग्रस्तश्च जनो नोदरपूरमभ्यवहरति, नाञ्जलिपूरमुदकं पिबति, न वा जङ्घापूरं वसनं वस्ते। बहुलधनोऽपि न परिजनान् परिपुष्णाति स्वच्छन्दानुरूपम्। केवलं कथं संग्रहो भवेदिति ग्रहगृहीत इव धनानि विचेतुं नात्मपातमपि गणयति। एतच्च नीतिविरुद्धं, तथाहि—"कर्त्तव्यः सञ्चयो नित्यं कर्त्तव्यो नातिसञ्चयः"। इति हि नीतिविदां समयः।

अत्र यद्यपि बहुतरमेव लिखितव्यमस्ति, तथापि समयाभावाद्वा नैपुण्याभावाद्वा लेखशक्तिविरहाद्वा अद्य एतावदेवास्तु, परिशेषे च

उपसर्गयोगमन्तरेणापि ग्रहस्यास्य दौर्जन्यं किञ्चिदावेद्य प्रबन्धमुपसंहरामः ।—

ग्रहोऽयम् आकारप्रभावात् दैर्घ्यमापन्नो ग्राहरूपेण जले वसन् सुयोगमासाद्यावगाहमानानभिगृह्णाति, समनन्तरञ्च कांश्चित् छिन्नचरणान् कांश्चिच्छिन्नबाहून् जहाति, येन जीवन्नपि स संसारकर्मणि पुनर्न प्रभवेत्। कांश्चिद्वा चिराय संसाराद्वियुज्य शमनसदनातिथीन् विदधाति।

श्रूयते कदाचित् कृतयुग एवंविध एव कश्चिद् ग्रहो ग्राहरूपी जलाशयमेकमधिवसन् यदृच्छया भ्रमन्तं गजपतिमेकं तरसा समग्रहीत्। गजपतिश्च तेन सह चिरं युद्ध्वाऽपि निःशेषबलवीर्यः प्राज्यबलवीर्येण तेन जलमध्यमाकृष्यमाणः शरणान्तरं नोपलेभे। ततश्चानुपहतपूर्वजन्मस्मृतिना तेन जातिस्मरेण करेणुपतिना संस्तुतो भगवान् गरुडारोहणेन प्रादुर्भूतश्चक्रेण ग्राहमुखं विपाट्य करीन्द्रममूमुचदिति। तदत्रैव मधुरया भगवत्कथया समाप्तिमुपैयादयं दुरन्तनिबन्धः प्रबन्ध इति।

---

## कन्याकुमारीश्वरीस्तोत्रम्

[ निबन्धकः—बि ए. बि. एल्—पि कें —नारायणपिक्कः ]

अन्यानपेक्षाक्षयदीप्तिवीचिर्धन्यात्मचैतन्यघनस्वरूपा ।
कन्याकुमारीनिलया ममाद्य वन्यां दहत्वद्रिवरेण्यकन्या ॥१॥
अम्बानुकम्पामृतसम्पदार्द्रे । लम्बालके । सागरतीरवासे । ।
त्वं बालकं मा भवबन्धसिन्धु-जम्बालमग्नं कृपयोद्धरार्ये । ॥२॥
हिमालयाङ्कादहिमालयालङ्कृतस्य वामाङ्कमुपेतुकामा ।
समालम्बे भवतो स्ववासं किमालये मालयवातरम्ये ॥३॥

सह्योदरं शङ्कभयेण वार्धेर्गुहोदरे हन्त तिरोहित ते ।
अन्विष्य पूर्वापरदक्षिणाब्धिसम्मेलनस्थानमगा नगात् किम् ॥४॥
सीतावितानाकलितप्रदेश केदारतुल्येऽत्र तरङ्गितेऽब्धौ ।
समस्तलोकार्तिनिवारणार्थं किं वा जगत्प्राणकृषिं करोषि ॥५॥
अशीतकाश्लेषसमृद्धमर्दक्षणीकृताङ्गाभरणोरगेन्द्रान् ।
किमोहसे पूरयितुं समूढ समीरणाहारमहारसेन ॥६॥
त्वत्-स्पर्शधन्यानिलनृत्तनुन्ना पत्रावलिस्तालमहीरुहाणाम् ।
अच्छायते भक्तियुता यतः सा ससेव्यते लेखनवीजनाख्यैः ॥७॥
त्वदन्तिकप्राप्तिरसप्रणुन्नाः शिलाः किल स्थावरताविषण्णा' ।
चिरात् स्वयं चूर्णितगात्रपिण्डाश्चकासतेऽत्र सिकतास्वरूपा. ।८॥
भुजङ्गहारोऽपजहार कान्ता तरङ्गिणीवशमणी मदीयाम् ।
इति प्रतिस्पन्दितमूर्तिरुच्चैः सजागरो रोदिति सागरः किम् ॥९॥
त्वय्येव रत्नाकर-रत्नगर्भा सीमाविवादेष्वधिकारशक्तिः ।
मित्रं पितुस्ते ननु रत्नसानुः स्त्रीपुंससम्मिश्रवपु' पतिश्च । १०॥
त्वदास्यवाटीद्युतिपुञ्जधाटीं विलोक्य चन्द्र शिवमौलिमस्थः ।
त्रपाभरक्लिष्टतथा कृशित्वा क्रमादजस्रैककलावशेषः ॥११॥
मिमृक्षतीन्दुः स्वकलङ्कमब्धौ निमज्जनेन क्षयवृद्धिरुग्णः ।
चिकीर्षतीहाम्बुधिबिम्बितां ते मुखप्रभां नूनमशेषशेषः ॥१२॥
विलोचनं तेऽनृजुपक्ष्मलक्ष्मोविलोढमीडे श्रुतिमूलनीडम् ।
कनीनिका लुठ्यति यत्र मन्दं सनीलिमाभास्वनिरुद्धमयूखा ॥१३॥
त्वल्लोचनं शाश्वतिकानुकम्पाकल्लोलितं सर्वशक्तियाद्यम् ।
उत्लोचवत् पक्ष्मभिरात्मबोध स्तुल्लोपलोलस्य विकासयेत्मे ॥१४॥
ललाटशोभाच्छतटाकपारे कचाचिरुन्मग्नमिव भ्रुवौ ते ।
प्रजायतो ये भवदक्षिदीप प्रभाशिखाकज्जलमञ्जुरेखे ॥१५॥
नासामुपासे तिलक यदीयच्छायां मुषित्वा तिलता च गत्वा ।
सूनेषु लोम्रं प्रकटीकरोति स्थाने तिलः पेषणदण्डनार्हः ॥१६॥

लालित्यशालास्यलकालिपालीकेलीगृहालिन्द इवालिकं ते ।
नालीकबाणारिविलोभनाभा-धूलीमयी कापि रसप्रतोली ॥१७॥
लेढि त्वदृष्टिं निबिडासितश्रीप्रौढिप्रवाहस्तव केशपाश, ।
सस्फूर्जथुर्गर्जतु वारिवाहः पास्पर्धुं वा तस्य जयः कथं स्यात् ॥१८॥
क्व विद्रुमः कैसलयो विलास क्व बिम्बसम्बन्धि विडम्बनं वा ।
तवाधरोद्यन्मसृणारुणश्रीः क्व वा सुधास्वादरसस्वसा सा ॥१९॥
आस्यप्रसादोत्सवमन्दहासं वात्सल्यसार तव मास्म हासीः ।
भास्वद्विलासेऽपि यदीयभासा ज्योत्स्नासवस्नानसुख नृणा स्यात् ॥२०।
सम्बुध्यते भामिनि कन्धरां ते सम्बद्धरेखात्रयशाम्बरीं यः ।
अम्बुध्यधोभागमुपेत्य गूढ कम्बुः कुटुम्बं स बरीभरीति ॥२१॥
गिरीश्वरात् तावकजन्मलाभमुरः प्ररूढोन्नमनं व्यनक्ति ।
रिरंसते यत्र सदा शयित्वा हर स लेभे गिरिशाभिधानम् ॥२४॥
कुचाचलाभ्यन्तरनिर्गता या तवोदरे राजति रोमराजिः ।
सिरास्रवन्मेचकचूचुकश्रीभरीपरीवाह इवेक्ष्यते सा ॥२३॥
यदि स्मरारेर्नवसङ्गमेषु पराङ्मुखी त्वं त्रपया शयीथा, ।
नितम्बबिम्बप्रथिमैकशय्याश्रयस्फुरत्स्वादुरसं निरुन्ध्यात् ॥२४॥
श्रोणीतटस्तम्भनिभौ त्वदूरू तूणीरचारू जितकल्पदारू ॥
ध्यायन् ययो रूपमजस्रमीशः स्थाणुत्वमापेति जनप्रवादः ॥२५॥
पदाब्जसारक्तनखप्रसर्पच्छविच्छटाविच्छुरितं त्वदीयम् ।
सरोरुहोन्मीलनशक्तिरश्मेर्विवस्वतः कान्तिविकासहेतुः ॥२६॥
अनित्यबन्धेन भवन्ति येन नृणामयस्कान्तसमा, कुमार्यः ।
अवैमि तद् यौवनमेव देहं त्वदीयमाकृष्टसमस्तलोकम् ॥२७॥
स्तुमस्तम.स्तोमहरे। महस्ते समस्तवस्तुप्रसरप्रभस्ते । ,
नमस्तु ते सन्ततमस्तु रूपं समस्तकः कस्तव न स्तवीति ॥२८॥

# वात्स्यायन-कामसूत्रीयम्

सन्ति किलाद्य तथा केचन विद्याचना समभवंश्च केचिदन्ये प्राचीने काले, येषा कामसूत्रमित्यभिधानमपि महान्तमान्तरोद्वेगं समुत्पाद्-यति समुदपादयच्चारात्। ते हि प्रत्यक्ष-मात्रिकवृत्तयः परिहाय कामसूत्रसंहितानि प्रशस्तवस्तूनि व्यस्तेन चेतसा समनुशीलयन्तः सुरहस्यकामतत्त्वविनिवेदकान्येवाधिकरणानि कामसूत्रमिदं विचार्य-मनार्य्यभावजुष्टानामेवेति निर्विशङ्कं कलङ्किता वाचमुदसृजन्नुत्सृजन्ति चेदानीम्। परमापाततो निरुक्तग्रन्थनिबद्धान्यत्युपकारकाणि विषय-मतान्यनालोचयन्तोऽपि यदि वयमस्य ग्रन्थस्य निबन्धारमभिवीचेमहि, तदापि नास्य विषयाः कलङ्कसाराः सम्भवेयुरित्येव प्रतिभायात्।

किञ्च,—प्रथमत एव मङ्गलाचरणं प्रस्तुवता ग्रन्थकारेण 'धर्मार्थ-कामेभ्यो नमः' इति वाक्प्रतीकं निबध्नता धर्मस्यैवात्र मुख्यत्वमत्यपादि। न च धर्मार्थकामरूप-पुरुषार्थत्रयमात्रं मङ्गलाचरणप्रस्तावे प्रस्तुतवता परमपुरुषार्थभूतस्यापवर्गस्य सकलतत्त्वविद्विचारानुगृहीतस्य परिहाणं कृतमिति नोपादेयमिदमिति वाच्य, कामसूत्रस्यास्य सकाम-गृहपति जनोपकरणत्वाद् वैराग्यमूलस्य मोक्षस्य परमपुरुषार्थभूतस्यापि विशे-षतस्तत्रानिर्देशात्, न ह्यनुल्लिखितमेवाननुमत तान्त्रिकाणामिति शक्यं निर्वक्तुं, तथात्वे बहुत्रैव बहूनां विषयाणामनङ्गीकारप्रसङ्गात्। अथवा प्रथमतः प्राधान्येनात्र मोक्षो नोल्लिखितः, परं 'स्थाविरे धर्मं मोक्षञ्च' इत्यनेन सोऽपि नो परिहृतः, किन्त्विह गृहस्थदशायामस्य न मुख्यत्व-मित्येवाकूतमायाति। तदत्र धर्मानुगमादर्थस्तदनुगमाच्च कामः सेव्य इति हि गृहपतिवृत्तं समासतः समाशंसितं भवति।

ते चामी धर्मार्थकामास्त्रिवर्गसंज्ञया व्यपदिश्यन्ते। त्रयाणा-ममीषां सेवनञ्च परस्परमानुकूल्येन परस्परमनुपघातेन च विधेय-

मिति ग्रन्थकारेण स्वयमेव प्रतिपादितं द्वितीयाध्याये त्रिवर्गप्रतिपत्तिप्रकरणं प्रकुर्वता,—तदुक्तं, 'शतायुर्वै पुरुषो विभज्य कालमन्योन्यानुबद्धं परस्परस्यानुपघातकं त्रिवर्गं सेवेत'। इति। द्वितीयाध्यायावसानेऽपि संग्रहश्लोकेन स एव भगवान् वात्स्यायनः शास्ति, यथा,—'त्रिवर्गसाधकं यत् स्याद् द्वयोरेकस्य वा पुनः। कार्य्यं तदपि कुर्वीत न त्वेकार्थं द्विबाधकम्'। इति। तदेवमनेन परस्परानुपघातकत्रिवर्गसमाराधनमेव शिष्टं भवति। ततो धर्मोपस्कृतत्रिवर्गसेवानुशासनं कामसूत्रमनुपादेयमिति को वा कृतधीः समादध्यात्। भवतु यथा तथा वा, स्वानुशिष्टानां विषयाणामुपादेयतैव सम्पादयत्युपादेयतां शास्त्राणामिति विशेषतो विषयोत्कर्षमेवास्य प्रतिपिपादयिषामः।

तत्रादौ गृहस्थजनैराश्रेयं नागरकवृत्तमेवाधिक्रियते,—यदिदं प्राकाश्येन प्रतिपादितं भगवता वात्स्यायनमुनिना कामसूत्रीये चतुर्थाध्याये। तत्रादौ तावत् कदा नागरकवृत्तं योग्यमित्याकाङ्क्षा गृहीतपदा भवतीति तन्निवर्तनाय समुपादिशद् भगवान् वात्स्यायनः,—'गृहीतविद्यः प्रतिग्रह जय क्रय-निर्वेशाधिगतैरर्थैरन्वयागतैरुभयैर्वा गार्हस्थ्यमधिगम्य नागरकवृत्तं वर्त्तेत'। इति। चत्वारः किल वर्णा भवन्ति, तेषां प्रत्येकमेवास्ति गार्हस्थ्य, प्रत्येकञ्च पृथक्प्रकारा विद्याः स्वस्ववर्त्तनानुकूला। तत्र ब्राह्मणाः सुव्यवस्थितेन ब्रह्मचर्य्येण वेदादिविद्याः प्राधान्येन च प्रतिग्रहादिकान् जीवनोपायान् विन्देयुः, क्षत्रिया गृहीतब्रह्मचर्य्या प्राधान्येन धनुर्वेदविद्या शास्त्रजीवित्वात् पर-पराजयादिकांश्च जीवनोपायान्, वैश्यास्तथाभूता एव गृहीतवेदविद्याः प्राधान्येन क्रयविक्रयादिवाणिज्यं जीवनोपायं, शूद्राश्च कारुकुशीलवादयो निर्वेशापराभिधानैः कर्मवेतनैर्जीवनोपायं कल्पयेयुः। न हि विद्यामृते प्रतिग्रहादयस्तानृते नार्था नार्थानृते गार्हस्थ्यमिति पूर्वं पूर्वमर्थवदास्ते। गार्हस्थ्यं पत्नीयोगप्रधानमपहाय नैव नागरक-

वृत्तमिति तथाभूता गृहस्था यदैव गार्हस्थ्यमभ्युपेयुस्तदैव नागरक-वृत्तं चरेयुर्यथाभिलाषम् ।

ते चामी गृहस्था नागरकवृत्तमनुवर्त्तमाना नैव यत्र तत्रावतिष्ठेरन्, वृत्तिञ्च विन्देरन्, परं यत्र नागरकवृत्त सुष्ठु पालयन्तस्ते स्वां वृत्तिमभिनिर्वर्त्तयितुमल भवेयुस्तत्रैवावतिष्ठमाना इति तथाभूत-स्थाननिर्णयोऽपि दत्तः कामसूत्रकारेण यथा, 'नगरे पत्तने खर्वटे महति वा सज्जनाश्रये स्थान' मित्यनेनोपोद्घातेन। 'नगर' नाम अष्टाशतग्रामीमध्ये तद्व्यवहारस्थानम्, 'पत्तन' राजधानीपदम्, 'खर्वट' द्विशतग्रामीमध्ये तद्व्यवहारस्थानम्, तदपेक्षया 'महत्' स्थानञ्च चतुःशतग्रामीमध्ये 'द्रोणमुख' नाम स्थानम्। तेषां यत्किञ्चिदेकं स्थानमात्मनिवासाय नागरा परिकल्पयेयुः। तत्रापि नाधमस्थानं निवासायोपकल्पेरत यत्राधमाना संसर्गेण सुतरामपकर्षमुपयात्यन्तःकरणं कामकलया, पर 'संसर्गजा दोषगुणा भवन्ती'ति नीतिसमादेशमनुरुन्धानेव मतिर्यत्र भूयसा सता ससङ्गमनुभवन्तो प्रकर्षसीमामुपलभेत तत्रैव स्थेयमास्थया सुव्यवस्थिताया वृत्तेरानुकूल्यमभिरक्षितुकामेनेति। तदेव प्रतिपिपादयिषता मुनिना समुपन्यस्तोतं 'सज्जनाश्रय' इति विशेषणपदं नगरादीनाम् ।

तथाहि नगरादिषु नानाविधजनसमागमवत्सु विवेकिना तदेव स्थानमवस्थानाय परिग्राह्य, यत्र सज्जनाः सुचरिता निवसन्तो मोदन्ते, तेषाञ्च समागमसौभाग्यमनुभवन्तस्ते दर्शं दर्शमुत्कर्षशतं स्वमन्तःकरणमतिनिर्मलेन भावेन विशेषतो वासयितुमलं सम्पद्येरन् । अस्ति च सज्जनसमागमस्यैकं फलं सुप्रशस्तं यत्, लज्जया वा भीत्या वा सज्जनाना परिपश्यताम् नालमन्ये निष्पादयितुमपकृष्टानि कृत्यानि, पर गोष्ठीनियमपालनमतिकर्त्तव्यं मन्यमाना अनिच्छन्तोऽपि प्रवर्त्तन्ते प्रशस्तान्येव कृत्यवस्तूनि स्वेनाङ्गीकर्तुमतोऽपि सज्जनाश्रयस्थानसमाश्रयणमतिमात्रमर्थवदिति हृदयं विचक्षणानाम् ।

सन्ति नाम बहुलानि स्थानानि, येषु नावस्थितिः स्वल्पानामपि सज्जनाना, सुमहानागमः परमर्थानां लिप्सिताना, तत्र वृत्तिमात्रापेक्षया नोपयुज्यते तिष्ठासेति मतं मुनीनाम्। नाध्यास्ते किल परमार्थभाव मर्थ एव, परन्त्वस्ति मानुषाणा स्वस्तिकामानां स एकस्मिन्योगादिविलक्षणो, यो धर्म्म इति व्यपदेशमर्हति। 'आहारनिद्राभयमैथुनञ्च सामा न्यमेतत् पशुभिर्नराणाम्। धर्मो हि तेषामधिको विशेषो धर्मेण हीनाः पशुभिः समानाः॥' इति नीतिशास्त्रशासन वीक्षमाणानामेकस्य धर्म्मस्यैव पश्वादितो विशेषाधायकत्वं मानुषेष्विति हि प्रतिभायात्।

स चायं धर्मो मनःशुद्धिमपेक्षमाणः सज्जनसमागमं स्वानुकूलमपेक्षत एवेत्यत्र किं वा बहु वक्तव्यम्। अद्यत्वे पुनरर्थमेव परमार्थभूतं मन्यमाना धर्म्मविचारे दृढमुदासीना एव परिदृश्यन्ते परःकोटयः शरीरिणः समाजेषु। ते हि यत्र यत्र वासोपकल्पनया स्वाभीप्सितसम्पदागमस्तत्र तत्रैव स्वजातिधर्म्मविघटकजनसमाजेष्वपि रममाणाः सम्प्रति सम्पदं सुसम्पादयितुमीहमानाः पर्य्यालोक्यन्ते। परमापाततः सम्पत्तितेन सकलमैहिकसुखमात्रसारेण द्रविणेन विक्रियमाणमतयः स्वल्पमपि विचारमात्महितस्य नारचयन्तीति प्रत्यक्षमिदं सूक्ष्मविषयपर्य्यवेक्षिणामस्माकम्। तत्र याटच्छिकीं प्रवृत्तिं स्वच्छभूतया बुद्धया विनिरुध्य यथा यथा शुद्धं पन्थानमनुवर्त्तमाना गृहपतयो बहुमानमैहिकञ्च पारत्रिकञ्च विन्देरन्, यथा यथा च सांसारिकसुखसिषाधयिषामर्थवर्ती विधातुमलमुपजायेरन्, तथा तथैव लोकानुशासनं विधित्सन्तो गृहपतिधर्मोपदेशका देशनामशेषकल्याणकरीमुपनिबद्धवन्तो वात्स्यायनप्रभृतयः कथमिव नास्माकमर्च्चनीयवाचः सम्भवन्त्विति विचार्य्यमेव तत्त्वपर्य्यालोचकानां कृतधियाम्।

'स्थानं प्रधानं न बल प्रधानम्' इति सूक्तं खलु कस्यापि। स्थानप्रभावेण सतामप्यसतो वृत्तिरभिषति, सतो चासताम्। तदेवमादौ नागरकवृत्तमनुवर्त्तमानैरपेक्षणीयं तथा स्थानं स्वस्तिनिधानम्, यत्र

निवसता गार्हस्थ्यप्रधानोपकरणमर्थश्च सकलकल्याणविनिवेदको धर्मश्चेत्युभावेव नो परिच्चोयेताम्।

यदपि 'यात्रावशाद्'इति शरीरस्थित्युपयोगिस्थानसमाश्रयणोपदेशकं सूत्रं, तदपि नैव शरीरस्थितिमात्रानुकूले स्थाने निवासमभिप्रैति, परं स्वरूपधर्मानपेतकृत्यसाहायकसुपेयुषः स्थानस्यैव परिग्रहं, इतरथा धर्मप्रतिकूलवर्त्तिनं ससारिणं सासारिकजनानभिमतविषयगतसमुपस्थानेन शरीरस्थितेरेव विघटनप्रसङ्गात्। तथाहि अधर्माद् दुःखमुपजायत इति शास्त्रादेशः, अधर्मश्चायमान्तःकरणिकदोषमूल इत्यन्तःकरणदोषनिवर्त्तकस्थानपरिग्रहे ग्रहदूषितस्यवान्तःकरणदोषसञ्चयादधर्मसमन्वये दुःखस्य कोटकैरप्यनोप्सितस्य समुत्पाद इति नैव तिरोहितं शास्त्ररहस्यवासितचेतसा विपश्चिताम्। तद् यात्रावशादपि समाश्रयणीयं पदं तादृशमेव, यत्र नोपतिष्ठेत मानसमकल्याणं परिहेयमेकान्ततः संसारधर्ममाराधयताम्।

"शरीरमाद्यं खलु धर्मसाधन"मिति सूक्तं खलु कस्यापि। वर्णधर्मिणामाश्रमधर्मिणां ,स्वपापलक्षणादृष्टापरपर्य्यायं धर्मं सञ्चिचोषता वा शरीरसन्ततिमात्रमनुकूलमित्यत्र को वा बालिशोऽपि दृढं संशयीत। विश्वेषामेव हि शरीरवतां विना शरीरमशक्यं कृत्यमनु सम्प्रवर्त्तयितुम्। तदिदं शरीरमर्थवदेव समेषां जीवानामभिमतानि कृत्यशतानि प्रथयतामानन्दसन्दोहमनुच्छन्दयितुम्। तच्च सुतरामनुकूलमरक्षितं कथमुपयुज्यतां ससाधने धर्माणामतो यथा कथमपि रक्ष्यमिदं शरीरं वर्षातपादिविविधोत्पातजनितरुजादोषेभ्यः प्रतिनियतम्। इतरथा रथादिरिवासुस्थःस्थानः कायो नायमुपयुज्येत चेतःप्रसादनादिसाधनेषु सुविधानेषु। ततस्तथा वर्त्तितव्यमव्याजं नव्यानव्यैर्यथा कथामात्रसारं शरीरं नाभिसम्पद्येत। तदेव लिप्सितफलानुकूल्येन विवित्सितायां शरीरस्थितौ, चिकीर्षितं वर्षातपादिविनिवर्त्तनेन सन्त्रांसिकं स्वास्थ्यं, सम्पिपादयिषितं दाष

लेशमप्यसूयता सन्तं पन्थानमनुवर्त्तमानेनावरोधजनेन सांसारिकशान्तिसन्ताने, वितितासिते च विविधमहोत्सवव्यापारपारमितया समन्ततः सकलस्पृहणीये महनीये विमलयशःप्रताने भवनमत्युपयुक्तं भविनामित्यत्र किं वा बहु वक्तव्यम्? अत एव निरुक्तपूर्वे नगरादौ क्षितिपदे संसारयात्रानुगुणं वासमभीप्सता संसाधनीयं स्पृहणीयगुणं तथाभूतं भवनं किमपि, यत्र समीपे प्रस्रवन्तो स्वच्छसलिलधारा शीकरकैः पवनप्रवहणमारोहन्तो हन्ति शरीरे सन्तं सन्तापं, दवयन्त्यपि सवनकर्मण्युपयुज्यमाना नितरां पाञ्चभौतिककलेवरकल्याणं विरुन्धानं वाह्यमलानां सन्तानं, पीयमाना चेयं सुशीतला विगतमला शरीरपालनमनुकूलयन्ती सन्तनोति सांसारिकशान्तिसारं नागरकधर्मं शर्मसम्भोगाय समुपेयुषाम्। अनुकूला चेयं सलिलकेलिमपि नागरकवृत्तमनुवर्त्तयन्ती निदाघदिवसात्यये सत्यपि वा सम्पाद्ये निदानान्तरसमुत्पादितखेदाद्यपनोदप्रमोदे द्वन्द्वभावमनुभवतां नागरकमहत्तमानामिति। न ह्यनासन्नाः सरित्सरोवरास्तथा समुपक्रन्तुमलं, यथा किल निरुक्तेन मार्गेण समासन्नाः, ततः समासन्नोदकमिव कल्पनीयं भवनमवनं शारीरमपेक्षमाणैः क्षेमविचारिणेति सारवद्वस्तुराद्धान्तः।

सलिलं नाम महदेवोपकुरुते शरीरस्य, यदा कश्चित् कलेवरावयवः प्रतिहन्यते वस्त्वन्तरेण, लब्धकठोरप्रतिघातश्च विभाव्यते समुद्गिरन्निव रुधिरसङ्घातं, तदैव तत्र विनियुज्यमाना सलिलपट्टिका न चिरं शमयत्युद्धतां वेदनां, प्रतिषेधति सेयं समुत्तीर्य्यमाणमिव शोणितस्तोमं, साम्यञ्च सुसम्पादयति प्रहते तस्मिन्नङ्गभागे। विहितविचारप्रपञ्चाः किल प्राञ्चस्तत एव न किं किङ्करा इव वरुणमस्तुवन्नस्तमितदोषैः स्तुतिवादशतैरपामधिष्ठातारं नानाविधेभ्यो दोषेभ्यः सलिलविनियोगेन शरीरपरित्रातारम्। कारङ्कारममी वरुणाद्युताशनादिदेवोपासनां सनातनं पन्थानमनुपालयन्तः सन्ततमेव चतुरस्त्रिकां समाश्रितवन्तः श्रियमित्यत्र संख्यातीता एव श्रुतिस्मृतयः साक्षिभूताः

विश्रूयन्ते। ततः सूत्रमिदं सूत्रकारस्य, यत् 'तत्र भवनमासन्नोदक'-मिति।

यस्याञ्च दिशि सलिलमासन्नं तस्यामेव दिशि वृक्षवाटिकाप्रति गतमपि तदुद्याम्। समीरणस्य च मन्दं मन्दं सञ्चरतः शैत्येन सौगन्ध्येन च गुणेन प्रतिजुष्टस्य ससङ्ग सम्प्रीणयति बहिरात्मानमन्तरात्मानञ्च शरीरिणां विशेषाम्, एकस्यैव समीरणस्य तथाभूतगुणद्वयसमागमस्तदैव सूपपन्नः स्यात्, यदि सलिलसम्बन्धिनीमेव दिशमधितिष्ठन्ती वृक्षवाटिका भवनमलङ्कुर्य्यात्। एक एव चासौ गुणद्वयसमुपचरितः समुपकरोति तथा शरीराणां यथा नैकगुणमात्रसमुपचरितोऽयम्। तत् 'वृक्षवाटिकाव'दित्यपि समीचीन वचनम्। किञ्च भवनोद्याने ये किल समुत्पद्यन्ते पादपा लता वा ते स्वपरिपोषाय समपेक्षन्ते यथाकालं सलिलसंक्रमं स्वेषु, स च तोयसन्निधानतः सुकरो न तोयव्यवधानेन, तत एव यस्या दिशि तोयपरिस्थितिस्तत्रैव समुत्पाद्यमुद्यानम्, एवं कृते सुकरमुद्यानपाले' पादप-लतादिषु समुत्पन्नेषु स्वच्छन्दं सलिलसेचनेन परिपालनञ्च परिपोषणञ्चामीषाम्। यदृच्छासमुपजातसञ्चारः समीरणोऽपि समुत्प्लवमानः सलिलतरङ्गेषु समाहृत्य तदीयशीकरसङ्घातं सम्पोषयितुमलं सम्पद्यते वृक्षवाटिका भवनशोभादिसाधनभूताम्।

केलिपराः किल नागरा' केलिकलासु रममाणास्तत्तदेव पदं वा वस्तु वा स्वस्तिकामाः कामयन्ते, यत्र यत्र सौकर्य्यं वरीवर्त्ति केलिकलानाम्। अत एव सलिलकेलिकौशलं वा प्रमोदोद्यानविहार वा प्रमोदाय प्रत्यहमत्याग्रहेण कामयमानानामुपयुज्यते नागराणामागारसन्निहितः सरोवरो वृक्षवाटिका चेति निरपवादो राद्धान्तवादः। नागरिकाः करेण समुपादाय करण्डिका लतानुपात पादपानुपातञ्च सञ्चिन्वन्ति लतान्तसम्भारं, सुसञ्चितेन चानेन स्रजं सृजन्तः स्वयं वा समामुञ्चन्ति विमण्डयन्ति वा तया विविधप्रसूनसुभगया सौभाग्यवत्या

युवत्या प्रणयिन्या: कवरीबन्धम्। यथाकालञ्च समर्चयन्त: स्वक-मभोष्टदेवं समाहृतै: प्रसूनोपहारै: सुसञ्चितैश्च पत्रपल्लवादिपूजोपकरण-सम्भारैरलमनुकूलयितुमात्ममनोरथान् सङ्ख्यातीतान्।

वृक्षवाटिका हि नाम क्षमा पञ्चैव ज्ञानेन्द्रियाणि सन्तर्पयितुं नागराणाम्। तथाहि तत्र समुत्पन्ना समासन्नश्यामलपत्रा नमेरवो रमयन्ति नेत्राणि श्रेणिशो विराजमाना सविधे रसवेदिना बहुल-बहुमाना:। प्रतिपादप प्रतिलतञ्च प्रसूनरसपाटच्चराणां भ्रमराणां सुमधुराणि सङ्गीतानि माधवी परिस्थिति परित: प्रचारयतांञ्च पञ्चम-स्वर: सहकारमञ्जरीजडीकृतकण्ठाना कलकण्ठवैतालिकानां समे षाञ्चापरेषामतिमात्रसन्तोषणा: कलस्वना सन्तर्पयन्ति सौभाग्य-दर्पमात्मन परित: समर्पयन्त' श्रवणेन्द्रियं निस्तन्द्रसञ्चारा'। सौरभ-सम्भाराश्च प्रसूनाना सम्भृतमकरन्दविन्दूना दूरादपि समीरणपथमनु-वर्त्तमानाना सन्निधानत: परागाणा रागयोगादिव जनयन्ति घ्राणे-न्द्रियपरितृप्तिमविलुप्तसारा'। पादपा लताश्च ललितललिता परि-णत-फलसमृद्धिमादधाना: काले काले समुत्पादयन्ति तृप्तिं रासनिकीं समधुरफलरसनिवपणेन नानाविधमूलस्वादप्रदानतो निरवद्यभोजन निर्वर्त्तनाच्च भावनिकानाम्। कुसुमसम्पदश्च सुकोमला: शयनाय कल्प माना सम्पादयन्ति परितोष त्वाचं व्यजनवातसदृक्षश्च दक्ष समीरण काननान्तसञ्चारी प्रपञ्चयत्याराद्दिनम्। एवमेव भावनिकाना पञ्चे-न्द्रियसन्तोषणसमर्थो वृक्षवाटिकाया इत्यत्र को वा वालिशोऽपि पर विप्रतिपद्येत।

सरोवरादेरपि तदासन्नस्य पञ्चेन्द्रियपरितोषण प्रतिष्ठेति नैतदपि दुरुपपादम्। तथाहि सनिर्म्मले तदासन्ने सलिले मृदुलानिलप्रति-लब्धजन्मानो रिङ्गन्तस्तरङ्गा' सलीलसञ्चारै: सारस-कारण्डव-दात्यूहादि-जलचरपतङ्गसङ्गता व्याकोशकोकनद-कह्लार-शैवाल धवलोत्पलपलाश शवला नेत्रयो:, सारसादि निनादमधुरिमा श्रोत्रयो, विकचकमलादि-

जलज प्रसूनसौरभाणि घ्राणस्य, मधुर नीरमाधुर्य्यं तथा मृणालादिसमास्वादनस्वरसो रसनायाः, सुशीतलसलिलशीकरवाही च समीरणस्त्वचः, परमं परितोषमावर्जयन्तीति। तदेव वृक्षवाटिका च तदासन्नमुदकञ्च सम्भावयतो भावनिक भव्यमिति सूपपादितं भवति। अत एव हि समुपादिशद्‌ भगवान्‌ वात्स्यायनो 'भवनमासन्नोदकं वृक्षवाटिकावच्चे'ति।

भवने कक्षाविनियोगोऽपि विमृश्य क्रियमाणो हिताय च सौष्ठवाय च परिकल्पेत, विमर्शमन्तरेण व्यपास्तनियमं क्रियमाणस्त्वन्यथैवेति तत्राप्याह 'विभक्तकर्मकक्ष'मिति तथाहि भवनं नाम द्वेधा भवितुमर्हति,—गृहमयमविभक्तकर्म्मकक्षं तथा विच्छिन्नान्तरं विभक्तकर्म्मकक्षमिति। गृहाणाम्‌ आन्तरालिकाविच्छेदं महदमाकार्य्यं भवति कार्य्यमनुतिष्ठतां गृहवतान्‌। कथम्‌? भवने खलु प्रवर्त्तन्ते नाना विधानि कृत्यानि प्रत्यह गृहपतीनां सूक्ष्मनमविचारसव्यपेक्षाणि, तानि च तदैव निष्प्रत्यूहमर्थवन्ति, यदि विचारान्तरेण नान्तरा प्रतिहन्येरन्‌। अतः कृते भवने विभक्तकर्म्मकक्षे यथा दाक्ष्येण शक्यनम्पादः कर्म्मविचारः समीचीनेन पथा सूक्ष्मो, न तथा कथमपि कृतेऽविभक्तकर्म्मकक्षे।

बहुभिरेकत्र न वस्तव्यम्‌। बहूनामेकत्र कक्षायामवस्थानं नाम न हितायेति शारीरतत्त्ववेदिनो वैज्ञानिका अपि समामनन्ति। अतः कर्म्मकक्षाणामविभागे यथा परस्पर कर्म्मणामुपघातस्तथा शरीरस्वास्थ्यप्रत्यूहोऽपीति सुविचिन्तितः पन्थाः। तत्‌ कर्म्मोपघातविनिवृत्तये शारीरस्वास्थ्यसम्पत्तये च भवनमुपयुक्तं विभक्तकर्म्मकक्षं, न त्वन्याद्दशमपीति।

किञ्च भोजनगृहं शयनगृहं मल्लोत्सगगृहं कर्म्मविचारगृहं स्नानगृहं परिच्छदगृहञ्चेत्येतानि नानैव कर्म्मभेदेन गृहाणि सम्भवेयुः। तत्र यद्येकमेव गृहं सकलकृत्यनिर्वाहाय परिकल्पेत, तस्य च वृहत्तया स्थानोपरोधादिदोषोऽपि नैव पदं कुर्य्यात, तथापि कोलाहलादिकृतः कर्म्मविचारोपघातः स्वास्थ्यहानिश्चेत्युभयोरतिक्रमो दुष्कर एव

समापद्येत। अन्यदप्यस्ति किल भवनस्य विभक्तकर्मकक्षतामधिकृत्यानुसन्धेयं, यद्धि नागरकवृत्तमनुवर्त्तमानानामपि सामाजिकपरिस्थित्यङ्गीकारेण नोपेक्षणीय भवति। तच्चेदं, नागरकाः खलु यथाकालं भोजनशयनादिकमिव नियमेन नानाविध कलानुशोलनं क्रीड़ापाटवादिक कामसूत्रभवृत्ताभ्यासमप्यधिकुर्वीरन्, तदिदं सर्वमशक्यानुष्ठान सन्निधाने श्रद्धेयाना गुरूणाम, तस्य सर्वस्य गुरुनयच्छाद्यैव नागरकैरनुष्ठेयत्वेन कर्मकक्षा विभजनीया', येन गृहान्तरमधितिष्ठन्तः श्रद्धेया गुरव शक्या अन्तर्धापयितुम्, शक्यश्च तेभ्यः कर्मप्रच्छादनमायासमन्तरेण समुपपादयितुम्।

अन्यच्च नागरकवृत्तमनुवर्त्तमानैरपि शारीरमान्तरं परिजनोपसर्गं च भद्र बहुमन्यमानैः सुविधेयत्वेन दैवतपरिपूजनादीना क्षैमिकविधीनां पृथगेव कल्पनीयं देवगृहम्। असति नाम विधिभेदेन गृहभेदे देवादीना पावित्रपरिह्रास' प्रसज्येत। व्याक्षेपविनिर्मोकेण विधातव्ये च सम्यग् देवाराधने विषयान्तरसम्पतनसम्पादित' प्रत्यूहः प्रतिहन्त्येव क्षेमप्रतिलम्भम् इति युक्तमेव भवनं 'विभक्तकर्मकक्षम्'।

तच्च पुनरनुकूल द्विवासगृहमेव। यत् किल भवनं सूक्तं नागरकाणां, तत्र वासगृहद्वयम्, एकं बाह्यमपरमाभ्यन्तरञ्चेति। बाह्ये वासगृहे तौर्यत्रिकादिव्यापाराश्च बाह्यसुहृदा नर्मपरिहासाश्च क्रीडानुशीलनव्यायामाभ्यासप्रभृतीनि बाह्यकृत्यान्तराणि च प्रवर्त्तेरन्। आभ्यन्तरे पुनः प्रियासंलापादयो रहस्यव्यापारा इति वासगृहद्वयमेव समीचीनमास्ते। टीकाकृतस्तु 'द्विधा वासगृहमिति शयनार्थेन रत्यर्थेन च युक्तम्' इत्युक्तवन्त, वयन्तु 'विभक्तकर्मकक्ष'मित्यनेनैव तस्यार्थस्य गतार्थतया न तमर्थं बहुमन्यामहे। द्विवासगृहमित्यत्र द्विशब्दस्य उपलक्षणतया अनेकानि वासगृहाणि कल्पनीयानीति तदर्थः प्रतीयते। आभ्यन्तरं वासगृह खलु निकेतनमन्तः स्त्रिकाणाम् इति। अनेन प्रागवरोधनियमोऽपि व्याख्यात'। तदिदं सूत्रं सकलार्थसंग्रा-

क्क व्यतानि भगवता वात्स्यायनेन —'तत्र भवनमासन्नोदकं वृक्षवाटिकावद्विभक्तकर्म्मकक्षं द्विवासगृहं कारयेद्' इति। तदयं विधिः सादरमादेयो निधिरिव नितरामप्रतिनिधिः सुधीनागरकाणामिति।

[ सावशेषम् ]

---

## "परिषच्छात्रसमिति"-नियमावली

१। अस्याः समितेः परिषदङ्गतया "परिषच्छात्रसमिति"रित्येव नाम स्यात्।

२। परिषद्विद्यालयस्य सर्वे विद्यार्थिनो नियमेनास्याः समितेः सभ्यपदं गृह्णीयुः।

३। विभिन्नविद्यालयाध्यापकैः स्वीय-विद्यार्थितया विज्ञापिताश्छात्रा अपि अस्याः समितेः सभ्यपदमर्हेयुः।

४। अस्याः समितेः सभ्यपदग्रहणे किमपि शुल्कं नापेक्षेत।

५। अस्याः समितेरधिवेशने निबन्धा व्याख्यानानि पारस्परिकसंवादाश्च संस्कृता वाचमेवोपजीवेयुः।

६। एतस्याः सम्बन्धिनो निबन्धादयः सर्वे एव विशेषतो विद्यार्थिनाम् उपकारम् अनुरुध्येरन्।

---

## सन्देशाः

**अभिनन्दनम्**—विदितमिदं श्रीमतां पाठकमहाभागानां यथा माननीयाः श्रीमन्तः परिषत्सम्पादका अमरेश्वरठाकुर-एम् ए. वेदान्तशास्त्रिणस्तथा श्रीयुक्त-गङ्गाचरणकर-एम्-ए महोदयाः श्रीयुक्त-

सुशीलकुमारमैत्र-एम् ए महोदयाश्च 'पि एच डि' इत्युपाधिं लब्धवन्त इति। वर्त्तमाने मासे परिषदि बहव सुपण्डिता. सङ्गत्य तदभिनन्दनं कृतवन्त', तत्र माननीया बहव सुव्याख्यातारः समभिनन्दनीयानाममीषां गुणप्रतानमधिकृत्य संस्कृतमयं बङ्गभाषामयञ्च व्याख्यानं कृतवन्त, तेषु श्रीमदक्षयकुमारशास्त्रि-श्रीमदादित्यनाथमुखोपाध्याय-महामहोपाध्याय श्रीयुक्तदुर्गाचरणसाङ्ख्यवेदान्ततीर्थ-महामहोपाध्याय-श्रीयुक्त भागवतकुमारशास्त्रि-श्रीयुक्त-चूणीलाल वसु श्रीयुक्त यतीन्द्रनाथवसुप्रभृतीनां नामानि सगौरवमुद्घोषणीयान्येव। अभिनन्दनीयेषु च सुशीलकुमारमैत्रमहोदयः सुतरां शारीरामयेन कृतविघ्नो नोपस्थित। द्वौ चापरौ समुपस्थितौ कृतस्य चाभिनन्दनस्य सप्रश्रयमुत्तरं दत्तवन्तौ। तस्य च साङ्गतासम्पादनाय कृतः परिषच्छात्र-समित्या 'उन्मत्तराघव'नामकस्य भास्करकविकृतस्य प्रेक्षणकस्य तथा श्रीकालीपदतर्काचार्य्यकृतस्य स्यमन्तकोद्धारव्यायोगस्य प्रयत्नयोगेन सुप्रयोगः। येन न केवलमभिनन्दनीयास्ते परमन्येऽपि सामाजिकाः परां प्रीतिमुपलब्धवन्त। इति शम्।

**पुस्तकप्राप्तिः**—विदाङ्कुर्वन्तु श्रीमन्तः पाठकमहाभागा.। यत् सामन्तसारग्रामात् परिषदा बहवो हस्तलिखितग्रन्था गभीरार्थपूर्णाः सुदुर्लभा परिप्राप्ताः। येषामौदार्य्येण साहायकेन च ते समधिगतास्तेषु सङ्ख्यातीताः साधुवादाः परिषदा वितीर्य्यन्ते। एवं किल शास्त्राणि परिरक्षितानि स्युः, अन्यथा कथमप्रतिरोध' शास्त्रविलोप स्यादिति। सन्ति किल तथा बहवो जना ये स्वभवने स्थितानां प्राचीनानां हस्तलिखितग्रन्थानां प्रत्यहं परिक्षयमयत्नकृतमुपेक्षन्ते, ते सनिर्बन्ध-मस्माभिरनुबध्यन्ते यथा, परिरक्ष्यन्तामसी ग्रन्था भारतगौरवहेतवः संस्कृतसाहित्यपरिषद्ग्रन्थागारे तेषां समर्पणेनेति।

---

# संस्कृतसाहित्यपरिषत्

इयं संस्कृतसाहित्यपरिषत् प्रतिभा रवेः ।
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम् ॥

| | | |
|---|---|---|
| February, 1929 | १८५० शकाब्दे माघे ११श-वर्षस्य १०म-संख्या | Vol XI No 10 |


## दानविभ्रमः

[ निबन्धकः—श्रीतारापदन्यायाचार्य्य तर्कतीर्थः ]

त्वयास्मभ्यं दत्तं किमपि गिरिजे तत् कथय नः
प्रदत्तं वा तुभ्यं निशमय शिवेऽस्माभिरपि यत् ।
वयं दत्त्वा दीनास्त्वमसि तु गृहीत्वा भगवतो
त्रिलोकीसाम्राज्यं पदमधिगतैका विजयसे ॥१॥

अचिन्त्यं देवानां कविजनमनोवागविषयो
मुनीन्द्रैराराध्यं स्मरहर-मनो-मोहनपरम ।
अरूपाये रूपं निखिलजगतो विस्मयकर
यदस्माभिर्दत्तं स्मरसि न शिवे तत् किमधुना ॥२॥

अहोऽस्माभिर्दत्ता खलु गिरिसुतायै मृदुलता
प्रदत्तं तारुण्य विधि हरि-जनन्यै च परमम् ।
रजः सत्त्व नाम्ना तम इति गुणानां त्रयमपि
तदस्माभिर्दत्तं तव न गुणहीने निजधनम् ॥३॥

अनिर्वाच्यैश्वर्यः शिव इति समाख्यो वरवपु-
र्महादेवो वेदस्तुतपदयुगो नृत्यचतुरः ।
प्रदत्तस्ते स्वामी गणपति-कुमारौ च तनयौ
बुधौ दत्तौ शूरौ सुरनरमुनीशार्चितपदौ ॥४॥
प्रदत्त ते नेत्रत्रयमतिविशालं निरुपम
मनोज्ञान्यङ्गानि प्रसुममृदुलानि प्रियभवे ।
अतः किं वा दत्तं गणयितुमये स्तोऽतिकृपणा'
कुलीनायाश्चित्ते निवसति तु मन्यामह इति ॥५॥
त्वयास्मभ्यं दत्तं घनतरदरिद्रत्वमशिव
तडित्प्रख्यं सौख्यं त्रिविधमथ दुःखं स्मरसि किम् ।
जरा हाहाकारो मरणमथ शोको विलपनं
पुनर्वाच्यं लज्जाकरमयि चकास्त्यत्र किमपि ॥६॥

---

## देवता-हृदयज्ञता

[ निबन्धकः—श्री ए रामलिङ्गशास्त्री ]

केषाम् ? श्रीमदप्पयदीक्षितेन्द्राणाम् , कुतः ? उदाह्रियते, न वयमधुना अमीषां दीक्षितवर्याणां पवित्र चरित्र निर्दिदिक्षाम', किं तर्हि ? स्वारस्यावह किमपि ऐतिह्यम् , किं तत् ? शृणुत । सर्वतन्त्रस्वतन्त्रा अमी खलु दीक्षितेन्द्रा देवतानुभूतिशालिन इति को वा जनो न जानाति ? सर्वशास्त्रकाव्यस्तोत्ररूपाणां शताधिकानां सर्वोपयुक्ताना सच्चर्चा-चन्दनचर्चितानां प्रबन्धानां प्रबन्धारः किलैते नैकविधै राजाधिराजैरासेतु हिमाचलनिलयैर्बहुमानिता अमितां प्रख्यातिमुपलेभिर इति प्रकाशम् , तत्र, कस्मिंश्चित् तावत् समये

तस्मा पुरीभूपाले. सम्मानितास्तद्दर्श्यानन्वग्टह्णन् , एतद्द्योत्चितततज्ज-सदृश: श्रीताताचार्य इति प्रथित: कश्चिद् विपश्चिद्वर्योऽपि राज-पण्डितो बभूव , कदाचिन्नृपति: स्वभूमण्डलस्थानि क्षेत्राणि निरी-क्षितुमाभ्या विद्वद्भां, समुचितेन परिच्छदेन च साकं प्रतस्थे ।

कस्मिंश्चिद् हरिहरपुत्तदेवतायतने स्वीयपरिवारसमेतं धर्मशास्तु-र्विम्बं कमनीयं महनीयशीलो भूपाल' समीक्ष्य भक्तिपरवशो—दक्षिण-शयस्य तर्जनीं चिबुके निक्षिप्य देवदेवस्यावस्थितेर्निदानं कीदृश-मिति ग्रामीणान् विदुषश्च पप्रच्छ। ग्रामवासिनस्तावदित्थं प्रति-जगदु:—अस्मत्पूर्वपुरुषाणा भाषणं कर्णाकर्णिकया श्रुतम्,—यत् कश्चिद् विपश्चिदत्र यदाऽभ्येत्य निदानं निरूपयिष्यति तदा भगवान् तर्जनीमुद्धरिष्यतीति ।

तदा किल श्रीताताचार्यवर्य्य कवयाञ्चकार ,—

'विष्णो: सुतोऽहं विधिना समोऽहं
धन्यस्ततोऽहं सुरसेवितोऽहम् ।
तथापि भूतैश्च सुतोऽहमेतै-
र्भूतैर्हतश्चिन्तयतीह शास्ता ॥' इति ।

शास्ता किल पुरा सुरासुराणा सुधानिमित्तं मिथो विरोधे प्रवृत्ते, तन्निवर्तनाय मोहिनीरूपिण: शार्ङ्गिणो हरे, हरस्य च समागमेन भुवनाभ्युदयाय फाल्गुन्यामुत्तरफल्गुनीसहितायामवतीर्ण: पूर्ण-पुष्कलाभ्यासहित: पाण्ड्यदेशे केरलदेशे च किं बहुना, भारतवर्षे सर्वत्र च भक्ताग्रगण्यैराराधितो लीला अत्यद्भुता अपरिमिता: कलया-मासेति उपाख्यानं ललितोपाख्याने सङ्क्षेपतो निरूपितमुपलभ्यते ; अतो भगवान् एवं मन्यते,—विष्णो: अहं सुत., अत: ब्रह्मणोऽपि जन्मकारणनाभीपुटवत्त्वात् नारायणस्य, तत्सुतेन विधिना अहं सम: ; तत: अहं धन्य —ब्रह्मसाम्योपलब्ध्या स्वस्य कृतार्थता , किञ्च, ब्रह्मा यथा सुरै: सेवित: पूजित', तथा अहमपि देवैर्वन्दित एव यद्यपि,

तथापि श्मशानमधिवसतां भूतानाम् ईशस्य सन्ध्यानटस्य सर्वभूताधिपतेस्तनयोऽहम्, इति एतैः भूतैः परिवृतः सन् शास्ता चिन्तयति इह इत्यर्थः। (नात्र शास्तृ-पदेन बुद्धदेवो विवक्षित इति मन्तव्यम्।) पश्यमिद शुश्रुवासः सर्वेऽपि अनिमिषा एव भगवन्तं विलोकयन्त आसन्—अधुना शास्ता शयम् उद्धरिष्यतीति सकुतूहलम्। न तदा देवो हस्तमुच्चिक्षेप।

अनन्तर श्रीमदप्पयदीक्षिता कवयामासुः,—

'अम्बेति गौरीमहमाह्वयामि, पत्न्यः पितुर्मातर एव सर्वाः।

कथ नु लक्ष्मीमिति चिन्तयन्त शास्तारमीडे सकलार्थसिद्ध्यै॥'

हरिहरपुत्र एवं मन्यते,—मदुद्भवकारणस्य भवस्य पत्नीं भवानीमहम् 'अम्ब! मातः!' इति आह्वयामि आकारयिष्यामि, यतः पित्रा ऊढाः सर्वा अपि स्त्रियः जनन्य एव, शास्त्रन्यायानुसारतस्तदीयतनयस्य। कथ नु लक्ष्मी लक्ष्मीदेवीं विष्णोः पत्नीं कया विधया अहम् आह्वयेयम् इति चिन्तयन्त शास्तारं सर्वाभीप्सितसिद्ध्यै ईडे स्तुवे इत्यर्थः।

तदात्व एव वन्दितपादो देवः पाणिं चिबुकाद् उच्चिक्षेप; चित्रीयाविष्टहृदयाः सर्वे समभवन्, आनन्दबाष्पविसरावृतनेत्राश्चाभूवन्; किं कर्त्तव्यतामूढाश्चेति श्रीयुताप्पयदीक्षितचरणाना देवताहृदयज्ञतां शशाधिरे मुक्तकण्ठम्, प्रणेमुश्च चरणारविन्दयोः। श्रीमद्धरिहरपुत्रेण हरिप्रिया कया रीत्या आकारणीया इति प्रियपाठकमहाशया एव विवेचयन्त्विति सादरकुतूहलमभ्यर्थयामहे, दीक्षितवरेण्यानां धर्मशास्त्रेषु चरित्रानुभावादिकमन्यदा प्रकटीचिकीर्षामः, ऐतिह्यमिदं वृद्धमुखात् श्रुतं सरसं प्रियवाचकवर्येभ्यः साभिवादनं समर्पयाम इति शम्।

---

# आदर्शो विन्ध्यः

[ निबन्धकः—श्रीरामेन्द्रनाथभट्टाचार्य्यः ]

व्याडिः। परमतत्त्वाभिज्ञ गुरुदेव। यदा पीयूषरसपरिपूर्णम् भवत उपदेशं श्रुत्वा तमवलम्ब्य कृतकार्य्यो भवामि, तदैव आनन्दितस्य मे शिरः स्वत एव नत भवति भवच्चरणपङ्कजे। भवत इच्छामात्रेणैतत् सम्भवति।

अगस्त्यः। नहि नहि वत्स। के वयमेकं नित्य सच्चिदानन्दं विना, यतो यस्मिन् सर्वे विलीना भवन्त्यन्ते। प्रार्थयस्व सततम्।

व्याडिः। (कृताञ्जलिः) हे भगवन्! तवेच्छा पूर्णा भवतु। तव पदे मतिरस्तु मे। एव करोतु, यथा त्वयि विश्वासस्तिष्ठेदिति।

अगस्त्यः। श्रद्धावान् भक्तिमान् भव, तर्हि यथार्थनामा भविष्यसि।

व्याडिः। देव। पश्यतु पश्यतु भवान् चित्तानन्ददायकमाश्रममिमम्। दुश्चिन्तापरिपूर्णस्य क्लान्तकलेवरस्य प्रवेशनमात्रेणैव मनसि शान्तिराधिपत्यं करोति। अन्यदप्यवलोकयतु,—अन्योऽन्य हिंसा परित्यज्य मृगाः स्थाने स्थाने विचरन्ति। नीवारौदनपरितृप्ता विहङ्गमाः काकलीकलकलेन भयमजानन्त उड्डीयमाना आश्रममाहात्म्य सूचयन्ति सविशेषम। देव! कस्य महात्मनस्तपःप्रभावेण आश्रमोऽय जगत् पवित्रयति?

अगस्त्य। दृष्ट्वेममाश्रमं मनसि समुदेति आख्यादा जीवनेतिवृत्तं मे,—हिंसाद्वेषविवर्जिते वट-हिन्ताल ताल-तमालच्छायरम्य आश्रमे सुशान्तसर्वेन्द्रियवृत्तिमत आत्मज्योति.प्रदीप्तस्य गुरोर्मनोहारिणा कथाच्छलेन सच्चिदानन्दे परात्परे जातविश्वासस्तत उपनीतः सन्

शुद्धालोकोद्भासिते जगति प्रविष्टोऽहम्। तद्दिनं स्मरामि,—यदा गुरोः सादरमाह्वानं, सर्वथा सेवया गुरोरानन्दवर्द्धने चेष्टा, गुरुभ्रातॄणां परस्परं साधने उन्नतिप्रयासः।

व्याडिः। देव! का महती चेष्टा भवता,—सुरैरपि सुदुष्करं कार्य्यमवसितम्। क्रूरकर्माणौ कुहकिनौ वातापिर्वातापिश्च दमितौ भवता तद्भीतलोकशान्तये। असाध्ये कर्म्मणि भवानेवाग्रेसरः। देवकार्य्यसिद्धये शोषितः समुद्रः, अद्यापि विजयवार्त्ता ते प्रकाशयति। ये ये महात्मानो लब्धप्रतिष्ठाः, येषां नाम गोत्रञ्च भक्त्या पठन्ति प्रातरुत्थाय सर्वे, तेषां प्रकर्ष-कारणं किम्?

अगस्त्यः। ब्रह्मचर्य्यं खलु तत्। ब्रह्मचर्य्यबलेन त्रिभुवनं करामलकवत् कृत्वा भगवत्सायुज्यं तन्मयत्वं वापि हेलयाधिगच्छन्ति। संसारमसारं दर्शयिष्ये ब्रह्मचर्य्यपरिपालनेन। तद्बलेन च सर्वान् माङ्गलिकानधिकारान् प्राप्यापि गुरावनन्यमनाः सन् चीरखण्डवत् परित्यजतीति।

व्याडिः। सत्त्वगुणास्पदं स्थानमेतत्। भावगाम्भीर्य्यपूर्णा भक्तिनम्राः सर्वे। देव! एतेन ब्रह्मचर्य्यव्रतावलम्बो कोऽप्यत्र निवसतीति मन्ये।

अगस्त्यः। अथ किं प्रिय। ब्रह्मचर्य्यावलम्बिनो यस्य गुरौ एकनिष्ठत्वात् सर्वे ऐश्वर्य्यसम्पन्ना देवा अपि विचलिता यत्समीपमागत्यागत्य तिष्ठन्ति, यस्य आदर्शेन अज्ञानतमसावृता जुगुप्सार्हा ज्ञानसम्पन्नाः सम्मानिता भविष्यन्ति। प्रलयेऽपि सोऽचलवत् स्थिरस्तत्कीर्त्तिश्चापि। अनेन शिष्येण गौरवम् अनुभूय महाप्रलयं यावत् जगत्पूज्यो भविष्यामि। श्रूयतां वाणी तस्य ( ऐकाग्र्येण उभयोः श्रवणम् )।

विन्ध्यः। न गुरोरधिकं न गुरोरधिकम्। संसारोऽयं परीक्षास्थानम्। प्रायशो लोभनीयानि ऐश्वर्य्याणि चित्तवैक्लव्यकारीणि कर्म्माणि गतिशीलान्यपि स्वप्रभावं प्रकाशयितुं चेष्टन्ते मयि। गुरो!

तवाशीर्वादेन सर्वाणि दूरीभूतानि। अधुना गुरुदेवम् उपासितुम् उपविशामि, नान्यमना भवामि। (कृताञ्जलिस्तिष्ठति)

(ततः प्रविशति सशिष्यः अगस्त्य)

अगस्त्यः। वत्स। पश्य का गुरुभक्तिरिति। अहं सहस्रवर्षं तपस्यया यस्य स्वरूपं न ज्ञातवान्, अग्रे दण्डायमानमप्येतं प्रत्याख्यातवान् गुरुवाक्ये आस्थावानयं बालकः। सद्यो विकसित-सरसिजम् पराजयते निर्विकारेण सौन्दर्य्येण। (समीपं गत्वा) वत्सविन्ध्य। अवलोकय।

विन्ध्यः। (उत्थाय प्रणम्य) अहो मे महत् पुण्यं, गुरुदेव स्वयमेवात्रागतः। गुरुदेव। मदर्थं क्लेशः प्राप्तः, स्वकृपया क्षम्यताम्।

अगस्त्यः। वत्स। तव आचरणेन अतीव सन्तुष्टोऽहं, त्रिभुवनमपि सम्मोहितं त्वया। जीवानां यत् श्रेष्ठतमम् उद्देश्यं, यल्लाभाय पुनः पुनर्धरायाम् आगमनं तदधिगच्छ।

विन्ध्यः। हे प्रभो। आनन्दो न तिष्ठति हृदये। विन्ध्य! आनन्दकानने लुण्ठितो भव। गुरुदेवचरणे प्रणतो भव। देव। अनुगतजने असीमा कृपा तव। प्रभो। कुरु मा धन्य स्रष्टा नगस्य जीवो येन लभेत कल्याणम्। एवं करोतु विश्वजनीनं हृत्सिशून्यं समदर्शिनम्, ससारनिकषे कृत्वा परीक्षणं देहि चरणे स्थानं, येन न भवति पुनरागमनम्। विता चक्षुःकनीनिका मे, वस हृदयासने चरणस्मरणे आस्थसि प्रभो! हृदयवेदनम्। मयि ते सततं कृपा हि केवलम्। ततो भूयो नमो नमस्ते।

---

# जगतः सर्गप्रतिसर्गौ

[ निबन्धकः—श्रीध्रुवानन्दन्यायरत्नः ]

ब्रह्मप्रतिबिम्बसमन्विता सत्त्वरजस्तमोगुणा प्रकृतिर्विशुद्धसत्त्वप्राधान्यात् मलिनसत्त्वप्राधान्याच्च यथाक्रम मायेति अविद्येति च ख्याता। तथाच श्रुतिः "अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमाना सरूपा" इति "मायान्तु प्रकृतिं विद्यान्मायिनन्तु महेश्वर"मिति च। सा च कारणशरीरम्' ब्रह्मण प्रतिबिम्बस्य समष्टिभेदेन ईश्वर इति जीव इति च सञ्ज्ञाद्वयम्। तत्र मायाप्रतिबिम्बितं चैतन्यं ता वशीकृत्य सर्वज्ञता प्राप्तम्। अविद्योपहितं चैतन्य तया वशीभूतं प्राज्ञतां गतम्। तम प्रधानायाः प्रकृतेर्वियदादीनि पञ्च भूतानि जातानि। जाताना तेषा पञ्चानां भूतानां पञ्चभिः सत्त्वांशैः क्रमात् ज्ञानेन्द्रियपञ्चकं जातम्। तथाहि वियत् सत्त्वांशात् श्रोत्रेन्द्रियम्। वायु-सत्त्वांशात् त्वगिन्द्रियम्। तेजः सत्त्वांशान्नयनेन्द्रियम्। अम्बु-सत्त्वांशाद्रसनेन्द्रियम्। पृथ्वी सत्त्वांशाद् घ्राणेन्द्रियमिति। तेषां भूतानां सत्त्वगुणसमष्टितोऽन्तःकरण जातम्। तद्यदा विमर्शरूप भवति तदा मन इति, यदा निश्चयरूप भवति तदा बुद्धिरिति च व्यपदिश्यते। तेषामेव भूताना पञ्चरजोंऽशैः क्रमात् कर्मेन्द्रियपञ्चक जातम्। तथाहि वियद्रजोंऽशाद् वागिन्द्रियम्। वायु-रजोंऽशात् पाणीन्द्रियम्। तेजो रजोंऽशात् पादेन्द्रियम्, अम्बु-रजोंऽशात् वायिन्द्रियम्। भू-रजोंऽशादुपस्थेन्द्रियमिति। तेषामेव भूताना सम्भूतरजोंऽशैः प्राणोत्पत्तिः। स च वृत्तिभेदात् पञ्चधा भिद्यते। तथाहि मुखनासिकावृत्तिः प्राण इति, पायुवृत्तिरपान इति, नाभिवृत्तिः समान इति, कण्ठवृत्तिरुदान इति, सर्वशरीरवृत्तिर्व्यान इति च। पञ्चज्ञानेन्द्रियाणि

पञ्च कर्मेन्द्रियाणि पञ्च प्राणा मनो बुद्धिश्चैतदात्मकं सूक्ष्मशरीरम्। तदभिमानी ईश्वरो हिरण्यगर्भ इति, जीवश्च तैजस इति प्रथितः। प्रतिबिम्बत्वसाम्येऽपि ईश्वरजीवयोरात्मना देव-मनुज पश्वादिभेदभिन्नाना जीवानाममभेदावबोधात् तदभावाच्च यथाक्रमं समष्टि-व्यष्टित्वम्। स ईश्वरः प्रागुत्पन्नानि वियदादीनि पञ्च भूतानि जीवानाम् भोगाय पञ्चीकृतवान्। तद् यथा,—सर्वाणि भूतानि द्विधा विधाय पुनस्तेषां प्रथमखण्डं चतुर्धा विभज्यैकैकभूतस्य द्वितीयार्द्धेनापरेषां चतुर्णां भूतानां चतुर्द्धा विभक्तस्य प्रथमभागीयैकैकांशस्य सम्भावनमेव पञ्चीकरणमिति। तथाहि आदावुत्पन्न सूक्ष्माकाश-द्वितीयार्द्धस्य वायुादीनां चतुर्णां चतुर्द्धा विभक्तस्य प्रथमभागस्थैकैकांशेन मिश्रणात् स्थूलाकाशस्य, सूक्ष्मस्य वायोर्द्वितीयार्द्धस्यान्येषा भूताना प्रथमभागीयैनैकैकांशेन मिश्रणात् स्थूलवायोः, सूक्ष्मतेजसो द्वितीयार्द्धस्यान्येषा भूताना प्रथमभागीयैनैकैकांशेन मिश्रणात् स्थूलतेजस', सूक्ष्माम्बु-द्वितीयार्द्धस्यान्येषा भूताना प्रथमभागीयैनैकैकांशेन मिश्रणात् स्थूलाम्बुनः, सूक्ष्मपृथ्वीद्वितीयार्द्धस्यान्येषा भूताना प्रथमभागीयैन एकैकांशेन मिश्रणात् स्थूलपृथिव्या उत्पत्तिरिति। या तु "तासां त्रिवृतं त्रिवृतमेकैका करवाणि" इत्यादि त्रिवृत्करणश्रुतिरुपलभ्यते, तस्याः पञ्चीकरणोपलक्षणार्थत्वान्न कश्चिद्दोषः। तैश्च पञ्चीकृतैर्भूतैः सर्वं जगन्निर्मितम्। करचरणाद्यवयवान्वित मनुष्यपश्वादिव्यवहारास्पदं स्थूल शरीरम्, तदभिमानी ईश्वरो वैश्वानर। जीवस्तु विश्व इति ख्यातः। पूर्वोक्तेन स्थूलसूक्ष्मकारणशरीरोपाधिना जाग्रत्-स्वप्न-सुषुप्तिरूपावस्था जीवस्य व्यपदिश्यन्ते। इमे जीवा' स्वानुष्ठितकर्मणा देव मनुष्य पशु-पक्षि-सरीसृपादिरूपेण चतुरशीतिलक्ष योनिषु जंजन्यमाना ब्रह्माण्डान्तर्वर्त्तिषु लोकेषु स्वस्वादृष्टफलमुपभुञ्जन्ते। स च ब्रह्माण्डो भू-भुवः-स्व-मह जन-तपः सत्या-तल पाताल वितल सुतल-रसातल तलातल-महातलाख्य चतुर्दशभुवनात्मकः। तत्र लवणेक्षुसुरा-

सर्पिर्दधिदुग्धजलाख्य-सप्तसमुद्रा यथाक्रमवेष्टित-जम्बु शाक कुश-क्रौञ्च-शाल्मलि-प्लक्ष-पुष्कराभिधान-सप्तद्वीपाल्मिका पृथिवी भूर्लोकः। ग्रह-नक्षत्र ताराविचित्रं नभो भुवर्लोकः। तदुत्तरो माहेन्द्रो लोकः स्वर्लोकः। तत्र त्रिदशा अग्निष्वात्ता याम्यास्तुषिता अपरिनिर्मितवशवर्त्तिनः परि निर्मितवशवर्त्तिनश्चेति षड्विधा देवा निवसन्ति। प्राजापत्ये मह-र्लोके कुमुदा ऋभवः प्रतर्दना अञ्जनाभाः प्रचिताभा इति पञ्चविधा देवा निवसन्ति। जनलोके ब्रह्मपुरोहिता ब्रह्मकायिका ब्रह्ममहा-कायिका अमरा इति चतुर्विधा देवा निवसन्ति। तपोलोके अभा-स्वरा महाभास्वराः सत्यमहाभास्वरा इति त्रिविधा देवा निवसन्ति। सत्यलोके अच्युताः शुद्धनिवासाः सत्याभा' सञ्ज्ञासंज्ञिनश्चेति चतुर्विधा देवा निवसन्ति। अतलादिषु अधोलोकसप्तकेषु यक्ष राक्षस-भूत प्रेत-पिशाचादयो निवसन्ति। तदिदं ब्रह्माण्डमण्डलं सूक्ष्मवटधानातः शाखा काण्ड प्रशाखा पत्राद्यवयवनिरस्तभास्वरसौरासजालविशालवट-विटपिवत् सच्चिदानन्दब्रह्मणो नामरूपव्याकृतं प्रतिनियतदेशकाल-निमित्तक्रियाफलाश्रयभूतमनेककर्त्तृभोक्तृसंयुक्तमुत्पन्नम्। तेनैव वर्त्तते, तत्रैव च विलेष्यति। तथा च श्रुतिः "यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्तो"ति। न चात्र कुलालादेर्घटाद्युत्पत्ताविव ब्रह्मणो निमित्तकारणतामात्र मिति वाच्यम्, उक्तश्रुत्यैव तदर्थस्यापोदितत्वात्। तथाहि "यत्-प्रयन्त्यभिसंविशन्तो"ति श्रुति' प्रतिसर्गे जगतो ब्रह्मरूपापत्तिमवगम-यन्ती कुलालादेरिव ब्रह्मणो निमित्तकारणतामात्रं निरस्योपादान कारणत्वमपि स्फुटयति, निमित्तकारणकुलालादिषु घटादीनां लया-दर्शनात्, उपादानमृदादिषु तद्दर्शनाच्च। तच्च उपादानत्वं न परि-णामित्वं किन्तु विवर्त्तित्वम्। तथाहि श्रुतिः "यथा सौम्य एकेन मृत्-पिण्डेन विज्ञातेन सर्वं मृन्मयं विज्ञातं स्याद्वाचारम्भणं विकारो नाम-धेयं मृत्तिकेत्येव सत्य"मिति। न चात्र कारणस्य मृद्दृष्टान्तेन परि-

णामित्वं शङ्कनीयम्। वाचारम्भणमित्यादिना वाङ्मात्रसत्ताकस्य कार्य्यस्य अनृतत्वं प्रतिपाद्य कारणस्यैव कूटस्थत्वावधारणात्। न च कूटस्थस्य परिणामित्व, कार्य्याकारेणावस्थानस्य परिणामशब्दार्थत्वात्। परिणामित्वे च कूटस्थताहानि ।

तस्माज्जगतः शुक्त्यादौ रजतादिवत् सत्ये ब्रह्मणि पारमार्थिकातथ्यत्वेऽपि आ-तत्त्वबोध व्यवहारदृष्टया तद् वज्रलेपस्थिरायते। एतत्-प्रतिसर्गस्तु सर्गक्रमवैपरीत्येन भवति। तथा च स्मृतिः—

"यद् यस्माज्जायते तत्त्व तत्तत्र प्रविलीयते
लीयन्ते प्रतिलोमानि जायन्ते चोत्तरोत्तरम्॥" इति।

तथाहि आदौ सर्वेषा भौतिकाना भूतेषु लयः। 'भूताना च क्षितेरप्सु, अपा तेजसि, तस्य वायौ, तस्याकाशे, तस्य प्रकृत्याख्य मायाया, तस्याश्च मूलकारणे ब्रह्मणि। तथा च स्मृतिः—

"जगत्प्रतिष्ठा देवर्षे पृथिव्यप्सु प्रलीयते।
तेजस्याप. प्रलीयन्ते तेजो वायौ प्रलीयते॥
वायुश्च लीयते व्योम्नि तच्चाव्यक्ते प्रलीयते।
अव्यक्तं पुरुषे ब्रह्मन् निर्गुणे सम्प्रलीयते।" इति।

---

## अमात्यपत्नि-लीलातत्त्वम्

[ निबन्धक'—श्रीकानाइलालपद्मतीर्थः ]

सीतारामौ प्रणम्यादौ वाग्मिष्ठो वक्ति कश्चन।
अमात्यपत्नि-लीलायास्तत्त्वं हर्तुं भ्रिशोर्मन' ॥१॥
सवर्णैरेकगेहान्ते वर्णयुग्मेन चित्रितम्।
चतुःषष्टिस्तरैः पीठं तत्र राज्ञोविरोधिनोः ॥२॥

कोणाद्यन्तोपरिगृहास्तन्मूलाद्या द्विषोडशाः ।
सनौ-वाजोभ-राजावाश्मन्ति हस्त्यश्व-नौबलाः ॥३॥
राज्ञोऽनेकबलादन्यो बन्धं नैकबलोऽर्हति ।
अबध्य तद्यदि बलं बन्ध नेतुमलं क्षतिम् ॥४॥
अत्राश्वो बहुसैन्यं वा बन्धच्छेदाक्षमं मतम् ।
नृपैकशरणं सर्वमबाध्यत्वाद्बलाख्यकम् ॥५॥
ऋजुक्रमाद् भयं हन्ति रिपोर्बलतलस्थितिः ।
भ्रान्तिस्तेनानुद्रुतस्य परितश्चाबलोऽहति ॥६॥
एवं चतुश्चतुर्नौकाश्वगजाष्टाष्टसैन्यकौ ।
द्वौ द्वौ मन्त्रि नृपौ पीठसवर्णौ नर्मयोधनौ ॥७॥
एते दन्ताश्मदार्वङ्का लिङ्गरूपाः शिवादिवत् ।
यथाख्यविग्रहाश्च स्युर्निर्मिता नर्मकोविदैः ॥८॥
पृथक् षोडशकोष्ठाः प्राग् बन्धुं नैकबलौ नृपौ ।
द्वात्रिंशन्मध्यगेहान्तर्नेयास्ते द्विमुखोर्गतौः ॥९॥
विपक्षा लङ्घिनोद्दिष्टौः स्वपक्षाः स्वैरिणोर्गतौः ।
बाधन्तेऽश्वान्यबलिनां विना राज्ञोः सकृद्गतौ ॥१०॥
ऋज्वौ नावो गतौ दृष्टावर्द्धवक्रा युगर्जवः ।
तयोः सदाश्वाः सदनैः कोणवक्रास्तयोरिभाः ॥११॥
सकृदश्वगतौ भूपावेकभूस्वैरिणौ तयोः ।
तरीभार्द्धतविक्रान्तौ मन्त्रिणौ नाश्ववत् क्वचित् ॥१२॥
गताहजूनि दृष्टौ स्युर्वक्राश्चैकपदैः पुरः ।
बलान्यन्त्यपदाप्तान्यनष्टतादृग्बलानि च ॥१३॥
भूपाववध्यावा वैरिदृष्टेरश्वसकृद्गतौ ।
बलिभिः प्राप्तसौधस्थौ बलैः स्वस्थोर्द्धसज्जितैः ॥१४॥
सर्वैर्योग्यगतोच्चाभिस्त्याज्या राजारिदृष्टयः ।
नाशं विना सर्वनाशो नेष्टो लीलाहवे यतः ॥१५॥

स्वपक्षाधिकहानिः स्याद्राजबन्धकरी द्रुतम् ।
तस्मात्योर्नृपाः पान्तु वधबन्धान्मिथोऽन्यतः ॥१६॥
आत्मत्राणान्यनाशाभ्यां गतिदृष्टी समे क्षमे ।
ताभ्यां गौणानि सैन्यानि बलिमुख्यौ च मन्त्रिणौ ॥१७॥
सेना-राजे-भ-नौ वाजि-मन्त्रिणः क्रमशोऽधिकाः ।
पूर्णे नावोऽश्वतो ज्ञेया इति पूर्णादरोज्झितात् ।१८॥
सुग्रहोऽसौ नृपोऽन्येन समोऽपि बलिसंख्यया ।
गतिदृष्टिच्युतेस्तस्य सहायैर्बहलो बलैः ॥१९॥
जिगीषुष्वेव नियते गतिदृष्ट्योर्विरोधिते ।
स्वकीये, स्वेषु ते ज्ञेये तथा स्थानच्युतौ मिथ' ॥२०॥
सर्वत्रारिषु साजात्यं बलीयोऽनेकचारिणाम् ।
नावश्वाविव नावश्वा वध्या मन्त्रिगजैर्नयत् ॥२१॥
वृथान्येषा क्रतोः सर्वाः कुर्य्यू राजारिदृष्टयः ।
विनारिदृष्टिभिर्दृष्टीर्विनाश्वान्याचिभिर्गतीः ॥२२॥
राज्ञोस्तु कृतयोऽव्यर्था रिपुदृष्टिस्थितीर्विना ।
योधैकान्तव्ययेनापि ज्ञेया राजारिदृष्टय' ॥२३॥
योधानामुच्चतुच्छत्वे सम्पत्कालनिरूपिते ।
मन्त्रिणैकबलं तुल्यं यतोऽङ्गीकृतमापदि ॥२४॥
सचिवायत्तते राज्ञोरत्र प्राचीनकल्पिते ।
मन्त्रिणौ बलिमुख्यौ यत्तत्तौ सेव्यौ जिगीषुभि ॥२५॥
प्रस्थितिर्गोपुच्छनुसृतिः स्वैः स्वीयैर्वारिभायनम् ।
किञ्चिदेषु गतौ राज्ञोर्वैरिगुप्तारिदृष्टिषु ॥२६॥
प्रस्थानं गोसृरचा स्वैः स्वीयैर्वा परताडनम् ।
किञ्चिदेषु गतौ राज्ञोः स्वीयगुप्तारिदृष्टिषु ।२॥
एतान्यष्टक्रमैः सन्ति यथाराजबलं पृथक् ।
विना पलायनं द्विचाप्ये कदापि सुयोगतः ॥२८॥

असहायसुहृत्सङ्गाद्दलिनो रिपुवीक्षिताः ।
दुर्बला रिपुराजीर्घ्रा विना बन्धुक्षतेर्भयात् ॥२९॥
रहस्त्वापत्सु सचिवावुपेयातां सुहृन्नृपौ ।
अन्यथा तौ तथा दृष्टौ बध्यौ स्तः प्रबलारिभिः ॥३०॥
दूतास्ते पत्तयोऽपश्चात् पदा येऽरिपुरान्ततः ।
भूयो वक्रमिवायान्ति बलीभूय जयं नृपौ ॥३१॥
पत्तयो राजसचिवा नावाद्यैर्गतिसाधनैः ।
त्रिधा विभज्य योज्यानि यथा पत्रैर्निमन्त्रिताः ॥३२॥
पत्तीन् लघुधियोपेक्ष्य राजादौ गौरवाद्यदि ।
रुध्यन्ते राजसद्मानि सर्वैस्तैः पुत्तलीमिते ॥३३॥
तदा पदातिरन्ध्रेभ्यः पतितैर्हठतोऽरिभिः ।
कर्णमर्म तुदेन्मर्म हाहानादैः सदःसदाम् ॥३४॥
स्वसैन्यदृक्स्थिताः सर्वे गजाद्या बलिनां वराः ।
मानभीत्यारिसैन्यान्ते दिशो यान्ति न यदृदृशः ॥३५॥
भूपौ द्वावपि गच्छेतां न कदाचन दृक्पथान् ।
अमरत्वचटैर्भीतौ गर्वाखर्वतया मिथः ॥३६॥
रोध्यौ ससैन्यौ विरुद्धोचितौ नृपौ
गेहैर्न यद्रोधिरिपू विलुम्पतः ।
तौ वन्धनीयौ निगडैररौचणै-
रुभौ पदाभ्यामपि तत्र साततम् ॥३७॥
असत्युभौता बलिनो गजाद्या व्रजन्त्यदा दृष्टिपथैर्द्रवन्तः ।
इतीष्वरिष्वात्मभिरस्तबन्धा वन्ध्या बलानां रिपुनाशमन्दाः ॥३८॥

इति सचिवादि-बलान्तविवेको नाम प्रथमोऽध्यायः ॥१॥

---

# रजनी

( पूर्वतोऽनुवृत्ता )

[ निबन्धिका—श्रीमती रेणुदेवी ]

अथ शचीन्द्रनाथ. कनीयसी मातरमुपेत्य समपृच्छत्, किमम्ब त्वया रजनीं प्रति अभिहितम्। सा रोदिति। अथ सा मा पर्य्यश्रु-लोचना विलोक्य निष्प्रतिभा प्रियवचसा सादरं समाहूय स्वसमीप मुपवेशितवती, न हि सा शशाक वयसा ज्येष्ठाय सपत्नीपुत्राय सर्वं प्रकाशयितुम्। सोऽपि कनीयसीं मातरं प्रसादमापन्नामवलोक्य कुतोऽपि स्वां मातरं प्रति प्रचलित। अहमपि स्व गृहं प्रति प्रतिनिवृत्ता। अथ प्रावर्तत गोपालेन सह मे परिणयोद्योग:। दिनञ्च निर्धारित-मभूत्, किमिदानीं मया विधेयम्? कुसुममालिकारचनामपहाय नक्तन्दिवं 'कथमद्य विवाहो न स्या'दित्यनन्तचिन्ताजलधौ निमग्नासम्। परिणयेऽस्मिन् मातुरानन्द., लवङ्गलताया: प्रयत्न:, शचीन्द्रनाथश्च घटक:। इदमेव मे सर्वं दु.खमतिशेते यत् शचीन्द्रनाथो घटक इति। अहमेकाकिनी नयनविहीना च कथमत्र प्रतिबन्धकतामारचयिष्यामि। न कश्चिदप्युपायो विलोकित:। स्थगिता मालारचना। पित्रा मात्रा च मनसि कृतं यत् परिणयानन्देन विह्वलाहं मालिकारचनातो विरतासमिति।

जगदीश्वरस्तु मामेक सहायं प्रापयामास। उक्तं मया पूर्वं, गोपालवसु: प्रागेव कृतदारसंग्रह इति। तस्य च पत्नी चम्पकलता चम्पेति विख्याता, सैव केवल विवाहेऽस्मिन् विरोधवती। सा तु अतिशयेन दृढा। यथा सपत्नी गृहे न प्रविशेत्, वर्त्तते तत्रास्या: नितरां सावधाना दृष्टि:। वर्त्तते च तस्या हीरालालनामा कश्चित् सहो-

दरः, वयसा सार्द्धवत्सरमितेन कनीयान्, सुरायामपरिमित मासक्तः, गच्छिकायाश्च कथञ्चिदनुरक्त इति श्रूयते। न च तस्य पित्रा तस्य शिक्षाविधौ विहितः कश्चिदपि प्रयत्नः। किन्तु कथमपि तेन हस्ताक्षरसौष्ठवं साधितम्। तथापि रामसदयेन स क्वापि लेखकपदे नियोजितः। प्रमत्ततापराधेन च तत्पदमपगतम्। हरनाथवसुश्च तस्य वाक्याडम्बरेण समुद्भ्रान्तो धनाना वृद्धौ नितरा लालसस्तस्य साहचर्य्येण वाणिज्ये प्रवृत्तः। दूरे तावदास्तां वृद्धिः, प्रावर्त्तत धनहानिः, स्थगितञ्च तदभूद् वाणिज्यम्।

ततश्च क्वापि ग्रामे प्रतिमासं द्वादशभिर्मुद्राभिः वेतनेन गृहीता तेन शिक्षकता। किन्तु न तत्र सुरा सुलभेति ततः पलायितं हीरा-लालेन।

ततश्च प्रवृत्तः स किमपि सन्देशपत्रं सम्पादयितुम्। अभूच्च कानिचिद्दिनानि तेन तस्य महानर्थागमः। विस्तृता च तस्य यशः-प्रतिपत्तिः। किन्तु अश्लीलतादोषेण राजपुरुषा विरोधिनी जाता। भयेन च तेन तत् सन्देशपत्र परित्यज्य कृतमन्तर्धानम्।

गतेषु च केषुचिद् दिनेषु पुनरपि सहसा प्रकाशमासाद्य शचीन्द्र-नाथस्य नर्मसाचिव्यं विधातुं प्रयतमानो बभूव। किन्तु न तत्र मदिरा प्रचलितेति तत स्वयमेवापसृतः। एवमनन्योपायः प्रवृत्तो नाटकं रचयितुम्। किन्तु मुद्रितमपि केनापि तन्न गृहीतं नाटकम्। न हि मुद्रायन्त्रालये प्रदेया ह्यर्था अवश्यं परिशोधनीया इति रक्षा जाता। अथेदानीं संसारसागरमिमं कूलहीनं मन्यमानेन तेन भगिन्याश्चम्पाया-श्चञ्चलाञ्चलमवलम्बितम्। तया च स स्वकार्य्यसिद्धये नियोजितः। सविशेषं स श्रुतनिखिलवृत्तान्तः पप्रच्छ भगिनीम्,—अपि सत्यं धन-प्रदानम्? य एव तामन्धां परिणेष्यति, स एव किं तेषामर्थानां भाजनम्? चम्पा च तत्र सन्देहभञ्जनं कृतवती। हीरालालस्य महानभावो ह्यर्थाना, स तदैव मे पितुर्भवनमुपेत्य दर्शनं विदधे। पिता

च तदानी गृह एव स्थित । अहमपि तत्समीप एव गृहान्तरे स्थिता । केनचिदपरिचितेन पुरुषेण सह पितुः कथोपकथनं स्वर-संयोगेन विदन्ती तत्र दत्तश्रवणा श्रुतवती, हीरालालस्य कीदृशोऽयं कर्कशः कदर्य्यश्च कण्ठस्वर इति । स कथयति "किं सपत्न्या विद्य-मानायामपि कन्या दीयते ।" पिता तु दुःखेनाभिहितवान् "किं करोमि, एवं न चेत् कथं विवाहः सम्भवति । एतावतापि कालेन न सम्पन्नः परिणयः ।" हीरालालः प्राह, "कथं कथमिति ? का ते चिन्ता कन्यापरिणयं प्रति " पिता विहस्य प्रोवाच, "दरिद्रोऽहं पुष्प-विक्रयेणैव जीवन यापयामि, केन मे कन्या परिणयः करिष्यते । विशेषतो लोचनहीनेयं, वयसश्च प्राचुर्य्यं जातम ।" हीरालालः प्रोवाच, "किमिति पात्राभाव', उत्तमश्चाहमेव परिणयामि । इदानीन्तु वयःस्थामेव कन्यकां लोकः कामयते । अहन्तु यदा सुबुभित्सूर्य्यादिति पत्रिकायाः सम्पादक आसं तदा तरुणीनामेव कन्यकानां विवाहः सङ्गच्छत इत्यधिकृत्य निब-न्धवान् बहून् निबन्धान् । यानाकर्ण्य नभसि पयोधरा अपि अगर्ज्जन् । हन्त ! बाल्यविवाहः ! धिक् कष्टं, कन्यकास्तु युवत्य एव विवाहे प्रदेयाः । एहि, मामेव देशेऽस्मिन् उन्नतेरादर्शप्रदर्शनाय दत्तावसरं विधेहि । अहमेव कन्यकामिमां परिणयामि ।" तदानीन्तनाभिः सविशेषं न विदिताः काश्चिदपि तस्य चारित्रकथाः । पश्चात् श्रुताः । पितापि अनिर्द्धारितकर्त्तव्य इतस्ततो व्यापारयामास चित्तवृत्तिम् । एतावता पाण्डित्येन विमण्डितो जामाता हस्तभ्रष्टो भवतीति दुःखितो जातः । अनन्तरञ्चोवाच, "इदानीमवधारितो विषयो न परिवर्त्तन-मर्हति । विशेषस्तु विवाहेऽस्मिन् शचीन्द्रनाथ एव कर्त्ता । त एव विवाहव्यापारं सम्पादयन्ति । ते यदेव कुर्व्वन्ति तदेव भविष्यति । तैरेव गोपालो जामातृत्वेन निर्द्धारितः ।" हीरालालेनोक्तं "अथ तेषा-मभिमतं त्वया ज्ञायताम् । दुरवगमो हि धनिना चारित्रविशेषः । न ते विश्वसनीया" इति ब्रुवन्नेव स किमपि मनैरभिहितवान् । तत्तु

नाकर्णितमस्माभिः। पिता प्रावोचत्, "नहि नहि नयनहीना मे दुहिता।" हीरालालस्तु तदानीं भग्नमनोरथो गृहेषु समन्ताद् दत्तदृष्टिः पितरमपृच्छत्, "किं तव गृहे वारुणी न वर्त्तते ? किमेवमेव।" पिता तु विस्मितः प्राह, "वारुणी ? कथ सा रक्षणीया।" स तु मदिरा नास्तीति ज्ञाततत्त्वो विज्ञ इव प्रावदत्, "भवन्त सावधानमेव विधातुं मदिदमभिहितं इदानीमभिजनवद्भिः सम्बन्ध बन्धुकामेन भवता ज्ञातव्याः खल्वेतादृशाः पदार्थाः।" कथेयं न पितुर्मनोरमा जाता। हीरालालस्तु नः विवाहेन न वा मदिरया कथमपि देशोन्नतेरादर्शं प्रदर्शयितुं समर्थः क्षुण्णेन मनसा निरगमत्।

क्रमेण सन्निहितो विवाहवासरः। एकमेव दिनमवशिष्यते। क उपायः ? नास्ति निष्कृतिः। सर्व्वतः समुच्छ्वासिता वारीणां राशयः समायान्ति। अवश्यमेव निमग्नया भवितव्यम्। तदा लज्जायै दत्तजलाञ्जलिर्मातुः पादयोर्निपत्य रोदितुं प्रवृत्ता। कृताञ्जलिर्व्याहृतवती च "निवर्त्तय मे विवाहम्, अहमेवमेव स्थातुमिच्छामि।" सा तु सविस्मय प्राह, "कथं कथमिति।" नालमस्मि प्रत्युत्तरं दातुम्। केवलं बद्धाञ्जलिर्विनतमुखो स्थिता, निरन्तरं रोदितुं प्रवृत्ता च। माता तु प्रथमतो विरक्ता ततः क्रुद्धा मा भर्त्सयामास। अथ पितरं प्रावोचम्, सोऽपि भर्त्सयन् प्रहर्त्तुमिव प्रवृत्तः। नान्य किमपि वक्तुमक्षमास्मि। उपायो नास्ति, निष्कृतिर्नास्ति, मग्नास्मि।

अथ तस्मिन्नेवाहनि किञ्चिदवशिष्टे दिवसे अहमेकाकिनी केवलं स्थितास्मि। पिता विवाहाय धनं संग्रहीतुं गतः, माता च द्रव्याणि। अहन्तु प्रायेण पितरि निर्गते मातरि च स्थानान्तरस्थिताया कथमपाटा गृह एव वामाचरणद्वितीया तिष्ठामि। अथ कश्चिद् द्वारमुद्घाट्य गृहमध्यं प्राप। पदशब्दोऽपि न परिचितः। अपृच्छं "कस्त्व"मिति। प्रत्युत्तरञ्च प्राप्ता, "यमस्तवे"ति। शब्दस्तु कोपविकृतः किन्तु कण्ठस्वरः स्वोजनस्येति भय न जातम्। विहस्य मया प्रत्यभिहितं,

"ममापि किं यमो वर्त्तते। एव चेत् एतावन्तं कालं क्व स्थितासि।" न तस्या कोपो व्यपगतः। "इदानीमेव ज्ञास्यसि, श्रहो परिणये महानयमनुराग ?" दुर्मते, दुर्मुखीत्यादिभिः प्रवृत्तं तिरस्कारवचनैः। एव समाप्तासु भर्त्सनपरम्परासु सा मधुरभाषिणी प्रत्यवादीत् "इच्छता-मन्वे, यदि मे स्वामिना सह ते परिणयः स्यात्तदा, यदैव त्वं सवासाय गृहं समुपैष्यसि, तस्मिन्नेव दिवसे त्वां विषदानेन जीवनाद् वियोजयिष्यामि।" ज्ञातं मया स्वयं चम्पेयमिति। विहितादरा च समुपवेष्टुमनुनयन्ती सादरमभिहितवती। "श्रूयतां, त्वया सह वर्त्तते वाचन कथा। तिरस्कारप्रत्युत्तर सादरसम्भाषणमित्यवलोक्य किञ्चित् त्यक्तोग्रभावा सा समग्रहीदासनम्। मयाभिहित, "शृणु, परिणयेऽस्मिन् यथा त्वमसि विरक्ता, तथैवाहमपि। यथा मम नाय विवाहः सम्पद्यते, तथैव विधातुं यतमानास्मि। कथमयं परिणय सप्रतिबन्धः स्यात् तत्र दृश्यते किं कश्चिदुपायः।" चम्पा तु सविस्मय व्याहृतवती "तत् कथं न पितृभ्यां कथयसि।" श्रह प्रत्यब्रुवं "मया सहस्रशः सनिर्बन्धमनुनीतौ पितरौ, किन्तु निष्फल एव सोऽयमनुनयः।" चम्पा प्रत्यवोचत् "कथं मित्रभवनं गत्वा तेषां पादेषु निपत्यैव नानुनीयते ?" "तदपि निष्फल"-मित्यभिदधत्यां मयि सा किञ्चिदिव विचिन्त्य पुनः प्राह "किं तर्हि कार्य्यमेकं कर्त्तुं शक्यते।" किं त"दिति व्याहृतवतीं मा सा "द्वित्राण्य-हानि आत्मनिगूहनं विधेहि"त्याबभाषे। "किं तत् स्थान"मिति मया पृष्टा सा पुनरपि विचिन्त्य "किं मे पितृभवनमुपेत्य स्थातुं शक्यत" इत्य-पृच्छत्। मया तु चिन्तित को दोष, न ह्यन्यः कश्चिदपि दृश्यते श्रस्याः परित्राणाय, किन्तु नयनहीनां मामविज्ञात तदास्पदं कः प्रापयिष्यति। ते वा कथं स्थानं दास्यन्तीति जिज्ञासिता सा मे सर्व्व-नाशिनी मूर्त्तिमतीव कुप्रवृत्तिः चम्पा निगदितवती, "न त्वया तद् विचिन्तनीयं, तत् सर्व्वमेव मया विधास्यते। मयैव करिष्यते स्रोता संग्रहः, ते च कथयिष्यन्ते, त्वया गन्तव्यं चेदभिधीयतामिति।"

मज्जनोन्मुखस्य समीपमुपेतं काष्ठफलकमिव अयमेक एवोपायो रक्षा-हेतुत्वेन मम मनसि प्रतिभातः। मया च सम्मतिः प्रदत्ता। चम्पा-कथितवती, "बाढमेवं, तर्हि विहितोद्यमया स्थातव्य, रात्रौ सर्व्वेषु निद्रितेषु अहमागत्य पुरद्वारमङ्गुल्या शनैराहनिष्यामि। त्वया च बहिरागन्तव्यमिति।" अहमपि दत्तसम्मतिरभवम्।

अथार्द्धरात्रे द्वारि शनैराघातजः कश्चन शब्दो मन्द ध्वनितः। अह जागरितैव स्थिता। द्वितीयं वस्त्रमात्रमादाय समुद्घाटितकपाटा बहि-रागता, तत्रस्थितां चम्पामवेदिषम्, तया सह प्राचलम् च। न सकृदपि विचिन्तितं, सकृदप्यवगतं किमिदं दुष्कर्म्म मया क्रियत इति। पित्रोः कृते कातरमपि चित्तं शीघ्रप्रत्यावर्त्तनाश्वासेन समाश्वासितं, निवृत्त एव विवाहप्रसङ्गे समागमिष्यामीति। अथ सम्भावितश्वशुरभवन चम्पागृहं समुपस्थितायामेव मयि सा सद्य एव सहगामिनं कञ्चन विधाय पत्युरवगतिभयेन कृतातित्वरा प्रेरितवती। यश्च तं मम सङ्गित्वेन निरदिशत् तस्यात्वरातिशयेन तस्मिन् मे प्रबलाप्यसम्मति-निराश्रदा जाता। विचिन्त्यतां हीरालाल एव ममानुयात्रिकः। तदानीमपि नाहं तस्य दुश्चरित्रकथां विदितवती। नवा तदर्थिकेय-मसम्मतिः। किन्तु स युवा, युवती चाहं कथमनेन सार्द्धमेका-किनी गमिष्यामीति मे विमतिनिदानम्। किन्तु कस्तदानीं मे वचनं शृणोति। अज्ञातमपरिचितश्च पन्थाः, रात्रौ चागमनं, ततश्च पथि यानि शब्दसम्बद्धानि चिह्नानि मे ज्ञानकारणं, न तानि तदानीं वर्त्तन्ते। अथ कथं विनैव सहायं गृहं प्रति प्रतिनिवृत्ता भवेयम्। प्रतिनिवृत्तायाञ्च मयि पुनरपि स एव पापः परिणयप्रसङ्गः। अगतिकोऽहं तेन सह भ्रमितास्मि। मनसि मया चिन्तितमन्धः कश्चिदन्धजनस्य सहायो न वर्त्तते चेन्न वर्त्तता नाम। देवास्तु वर्त्तन्ते। ते तु सबलकृतावश्च पीडितं पीडयन्ति। दयावन्तस्ते महिमानम्। एतत्वावश्यमेव दयापरिप्लुतास्ते करिष्यन्ति मे परित्राणम्। नो चेत्

कस्य कृते दयेयं नाम। न तदा विदितमासीत् विचित्रेयमेषो नियमपरम्परा मनुष्याणां बुद्धिमतीत्य वर्त्तमाना। या वय दयां वा पीडां वा ब्रूमः, अनन्तज्ञानशक्तिमतो जगदीशितुर्न सा तथैव। न चापि तदा विदितमासीत् यदनन्तमिदं संसारचक्रम् दयादाक्षिण्यशून्यं नियतं नियमितपथेनैव नातिचक्षया रेखयैवाहरहः प्रचलति। दारुणे तस्य वेगपथे य एव निपतत्यन्धो वा चक्षुष्मान् वा सुखी वा दुःखी वा स एव निःशेषतः पिष्यमाणो भविष्यति। जनोऽयमन्धो निःसहायश्चेति किमनन्तं संसारचक्रपथमतिक्रमितुं समर्थः।

अथ तेनैव सह सुप्रशस्तं राजपथमासाद्य तस्यैव पदशब्दमनुसरन्तो प्रवृत्तास्मि गन्तुम्। क्वापि घटिकायामर्धरात्रमतीतं सूचयन् समुत्थितो यन्त्रध्वनिः। जनशून्यः पन्थाः शब्दहीनश्च। कदाचित् प्रचलतो यानस्य चक्रध्वनिः। क्वापि सुरापानकृतवृत्तीनां कामिनीनामसम्बद्धा गीतिशब्दाः।

(क्रमशः)

---

## पुरुषार्थः

[ निबन्धकः—श्रीआशुतोषशिरोरत्नः ]

शिष्यः। गुरो! पूर्वं प्रतिश्रुतं, पुरुषार्थः कीदृगिति विस्तरतः कथयिष्यामीति, तदवसरश्चेदद्य कृपया कथयतु भवान् शरणागतं माम्।

गुरुः। वत्स! तवैतादृशं प्रश्नमाकर्ण्य मम महानानन्दः समजनि। पाश्चात्यशिक्षाप्रभावादधुना केऽपि न सनातनधर्मविषयकं प्रश्नं कुर्वन्ति, आबाल्याज्जडविज्ञानचर्चाकलुषमतयस्तु श्रुतिस्मृतिवर्णाश्रमाचारविरुद्धं बहुधा वचो जल्पन्तः स्वबुद्धेश्चरितार्थतां स्वीकुर्वन्ति। त्वं धन्योऽसि, यदेतादृङ् महान् प्रश्नः समुत्थापितः। अहमपि यथामत्युत्तरं दत्त्वा धन्यो भविष्यामि।

शिष्यः। भगवन्। वचनमिदं मा कथ्यताम्। अहमेव धन्यो भविष्यामि।

गुरुः। वत्स! श्रूयतामधुना। पुरुषस्य अर्थः, पुरुषार्थः, अर्थः प्रयोजन, तत्तु पुरुषस्याभीष्टरूपम्, इच्छाविषयीभूतमिति वा। पुरुषः खलु स्वबुद्धि द्वारीकृत्य यत् यत् प्राप्तमभिलषति, तत्तदेव तस्य पुरुषस्य प्रयोजनमभीष्टं वेति तात्पर्य्यम्।

शिष्यः। देव! भवदाशीर्वादेन संप्रति पुरुषार्थपदस्यार्थबोधोऽभूत्, किन्त्वस्मिन् मादृशाल्पबुद्धेर्महान् संशयो वर्त्तते, अनुमतिः प्राप्यते चेत्तदा पृच्छ्यते मया।

गुरुः। कुत्र ते संशयः, कीदृक् संशयः कथं वा संशयः, सर्वं कथ्यताम्, निराक्रियते मया यथामति।

शिष्यः। पूज्यतम! आयत्तानि भवन्तु, न भवन्तु वा, जीवानां सर्वं एव विषया अभीष्टाः, विशेषतो मनुष्याणाम्। तत् कथं ज्ञातव्यं पुरुषस्येदमभीष्टमनभीष्टमिदञ्च।

गुरुः। साधूक्तं त्वया, किन्त्वर्भक? भ्रान्तोऽसि, पुरुषस्याभीष्टमन्यविधमेव, न हि पुरुषाणामभीष्टं धन-जन यौवन कामिनी-काञ्चना-तुलैश्वर्य्या-रोग्य-राज्यादिनश्वरपदार्थलाभमात्रादेव पर्य्यवसितं भवेत्। परतः परतस्तत्तदुत्कृष्टतमपदार्थलाभाशाप्रवाहः सर्वदैव जायते, अत एवेत्यमत्र प्रथमतो विचार्य्यं वत्सेन, जीवः खलु किं प्रार्थयते, तथावश्यं वक्तव्यं—

"सुखं मे भूयात्, दुःखं मा भूदिति"

जीवस्य तु सत्स्वपि बहुष्वभीष्टेषु एतद्धि चरममभीष्टम्। अवगम्यत एव संसारेषु- एतादृशी वासना सर्वेषां जनानाम्, अतो दुःखनिवृत्ति. सुखप्राप्तिश्च पुरुषार्थं इत्यवेहि।

शिष्यः। बाढम्, देव! निवेदयामि, जीवानां तर्हि किं दुःखनिवृत्तिर्भवेत्? अवगम्यते हि संसारेऽस्मिन् एकं दुःखमुत्पन्नं, तस्य

कथमपि नाश, ततोऽपरं दुःखमुत्पन्नं तस्य तथा नाश, पुनरपरं दुःखमित्यादिरीत्या अनुदिनं खलु दुःखाम्भोधिप्रवाहः प्रचलति, नास्य विरतिलेशोऽपि, अतो दुःखनिवृत्तिर्दुर्घटैव, आस्तामधुना सुखप्राप्तिविचारः।

गुरुः। वत्स। तव बुद्धिः सूक्ष्मार्थग्राहिणी, अत एव साङ्ख्याचार्यैः कपिलैः स्वप्रणीत-साङ्ख्यदर्शने पुरुषार्थपदमपहाय अत्यन्त-पुरुषार्थ इत्युक्तम्। यथा—

"त्रिविधदुःखात्यन्तनिवृत्तिरत्यन्तपुरुषार्थः" इति।

आध्यात्मिकाधिदैविकाधिभौतिकभेदेन दुःखं नाम त्रिविधं, तस्यात्यन्तनिवृत्ति स्थूलसूक्ष्मभावेन निःशेषतो निवृत्तिरत्यन्त-पुरुषार्थः परमपुरुषार्थः।

शिष्यः। आर्य्य। कृपया दुःखस्य त्रैविध्यं स्वरूपतो निर्देश्यम्।

गुरुः। श्रूयताम्, आध्यात्मिकमित्यत्रात्मशब्दो हि शरीरं मनश्चाभि-दधाति, ते अधिकृत्य यद्दुःखमुत्पद्यते तदाध्यात्मिकं, तच्च द्विविधं, शारीरिकं मानसिकञ्च, व्याध्यादिना यदुत्पद्यते तत् शारीरिकं, शोकादिना यदुत्पते तन्मानसिकम्। आधिभौतिक मित्यत्र भूतशब्दो व्याघ्रादिप्राणिवाचकः, तद्भूतमधिकृत्य यद्दुःखमुत्पद्यते तदाधिभौतिकम्। आधिदैविकमित्यत्र दैवशब्दो-ऽग्निवाय्वादिदेववाचकः, तमधिकृत्य यद्दुःखमुत्पद्यते तदाधि दैविकम्।

(क्रमशः)

आसाम-संस्कृतसमितेः १९२९ खृस्ताब्दीयाधिवेशने
डक्टराद्युपाह्वाना
महामहोपाध्यायाना श्रीभागवतकुमारशास्त्रिणाम्

# अभिभाषणम्

माननीय सभापते, तत्रभवन्तो भूमिदेवाः, श्रीमन्महाराज, समागताश्च महाभागाः,

भारतीयानामार्य्याणां प्राचीनग्रन्थादिषु विश्वजनीनः कश्चिद् भावो नैव लक्ष्यते इत्यद्यतनानां मुखाच्छ्रुतमेव बहुशो भवद्भिः। सर्वेषां मनुष्याणामभ्युदयोऽस्त्विति नव्य एव भाव इति तेषा सिद्धान्तः। न हि पुरास्मिन् भारते कुत्रापि विदुषा सन्दर्भेषु विश्वार्थं यतितव्यमिति कर्त्तव्यतया सुप्रतिष्ठित वर्त्तते। सर्वत्रैवेदमुपदिष्टम्—

'एक एव भवेज्जन्तुरेक एव प्रलीयत' इति।

एवं सति परार्थप्रेरणैव न सम्भवेत्। दूरे तावदास्तां विश्वहितकरी चेष्टा। दृश्यता तावन्नव्यभव्याना चेष्टापद्धतिः। श्रूयताञ्च तेषां लौकिकनीतिरीतिः। कथ मानवा निरातङ्का निरामयाः स्युः, कथ तेषा लौकिकज्ञानस्य परिसरः क्रमशो वर्द्धेत, कथ वा सर्वैस्तैर्भोगैश्वर्य्यैण कृतार्थता लभ्येतेति सदैव नव्या उपायान् भावयन्त्युद्भावयन्ति प्रचारयन्ति च। इयमेव साक्षान्मनुष्यत्वसिद्धिः। अयमेव मनुष्यजीवनस्य समुपयोगः। सर्वत्रैव नव्यतन्त्रानुयन्त्रितेषु प्राच्यप्रतीच्योदीच्येषु देशेषु तत्तन्मानवसमाजेषु भारतापेक्षया दीर्घजीविता विज्ञानकलाकुशलता भोगेषु स्वच्छन्दवृत्तिता च दरीदृश्यते। प्राचीनानुगत्या भारत एव केवलमकालमृत्युर्वस्तुशक्तिनियमनेष्वनभिज्ञता भोगोपकरणसाधनेषु निश्चेष्टता च समुल्लसति। सर्वेषामेवैतत् प्रतीतिगोचरम्। कथं कथमपि नैवेदं तथ्यमपह्नोतुं

शक्य, तर्कावष्टम्भेन वा निष्प्रमाणीकर्त्तुं योग्यम्। भारतीयाना मनुष्यत्वश्चेदुद्बोध्येत, नव्यजगति प्रतिष्ठा चेत् काम्येत, त्यज्यन्तां सद्यः प्राचीनाः संस्कारा, उपादीयतां नव्ये कर्म्मण्वे दीक्षा, समालोच्यन्तां नव्यतन्त्राणि, दृश्यतां विश्वं नव्यदृष्ट्या, स्वीक्रियन्तां सर्व्वे नव्यभावाः। रुचिररुचिरमेवं प्रचरति बहुधा परिजल्पितमिदानीं नव्यशिक्षादीक्षितानां समाजेषु। भारतानां प्राचीनधर्मवादाः प्राचीनदर्शनमतानि चाद्यतने जगति भारतस्य प्रतिष्ठाविधावन्तरायभूतानीति तेषां परामर्शः।

भारतानामधुना दुर्दशा सर्व्वैरेव प्रत्यक्षीक्रियते, सर्व्वैर्वादिभिरङ्गीक्रियते। भारतसमाजो यथा श्रीसम्पन्नः सर्व्वथा परिवृद्धिं लभेतेत्यत्रापि न कापि विप्रतिपत्तिः। विप्रतिपत्तिस्तु दुर्दशाया निदाननिर्द्धारणे, सम्यगुपायसमुद्भावने च। यद्यपि "पुराणमित्येव न साधु सर्व्वं" तथापि "सन्तः परीक्षान्यतरद्भजेरन्" "मा समीक्ष्य पर स्थानं पूर्व्वमायतनं त्यजे"दिति नयविदा सध्रीचीनः समुपदेशः। स्वप्रतिष्ठायां भारते या निरुद्योगता, तत्र भारतीयानां प्राचीनानां धर्मवादानां दार्शनिकप्रस्थानानाञ्चापराधोऽस्ति न वेति प्रथमं तावद्विचार्य्यताम्। अपराद्धं वा नापराद्धं तैस्तन्मतानुसारिणा नियन्तृतयैव भारतस्याधःपात इति तन्मूलमेव सर्व्वादावुच्छेद्यमिवं युक्तिर्नैव साधीयसी। यदि भारतीयभावस्य भित्तिरेव समुत्पाट्येत, तदा कस्य प्रतिष्ठा कुत्र भविष्यति? यद्यपि ध्वंसपूर्व्विका सृष्टिरिति तार्किकरीतिस्तन्नयस्य च नव्यशिक्षायां बहुल समादरस्तथापि वीजनाशेन सर्व्वनाशो न केनापि वारयितुं शक्य.। यस्य कस्यचिदपि क्रमिकपरिपुष्टौ यथाक्रममवस्थापरिवृत्तिरेव सद्भिः स्वीक्रियते, न तु कदापि मूलोच्छेदः। ये केचिद्भारतीयसमाजस्य सम्यक् पुष्टये प्रथममेवात्मनाशमुपदिशन्ति, कथं ते श्रद्धेयवाचः? न कोऽपि प्रेक्षावानुपचारदोषाद्देहमसुन्दरं दृष्ट्वा देहपातनाय प्रयतते। उपचारेषु संस्कारसाधनं यद् यदसुन्दरं तत्तद्

यथासम्भवं रुचिरं क्रियता, देहस्तु रक्ष्यतामिति कस्य वा नाभिमतम्? भारतीयसमाजशरीरे यत्र यत्र संस्कारवैकल्यानि भवद्भिर्निर्णीतानि, तेषां यथायथं सौष्ठवसाधनाय प्रयत्नोऽवश्यमङ्गीकरणीय, समाजदेहस्य विनिर्माणविधिस्तु सर्व्वथा परिपालनीयः। सुप्रतिष्ठितस्य समाजस्य मूलप्रतिष्ठाया लोकहितस्य सत्त्वमूलस्य भावस्यैवानुसन्धान युक्तम्। लोकोच्छेदकृति तमोमूले भावे प्रतिष्ठितः समाजो नचिरादेव स्वयमुच्छिद्येत। भारतीयानामार्य्याणां दर्शनमार्गाणां परीक्षणेन, श्रुतिस्मृतिपुराणेतिहासेषु निहितानां तत्त्वानां पर्य्यालोचनेन, भारतीयसमाजदेहस्य मूलाकृतिविश्वेषामभ्युदयार्थमङ्गीकृत्यैव प्राचीनै समाजस्थपतिभि संविहितेति निर्णीयते। यानि तु तत्र रक्षणार्थं, कालोपयोगिसौष्ठवार्थं वा, देशकालपात्रादिभेदेनाधिकारिभेदेन धर्मसम्प्रदायविशेषैः प्रसाधनानि प्रावरणानि वा समाहृतानि, तानि चेत् कानिचित् कानिचित् कदाचित् कदाचित् परिवर्त्तनीयानि तत्तत्सम्प्रदायेषु सामाजिकैर्मन्येरन् तदावश्यमेव तानि परिवर्त्त्येरन्। न हि सत्यत्रेताद्वापरकलिषु भारतीयानामाचाररीतयः सर्व्वथा सर्वत्र समानरूपाः। परं संस्कारप्रतिसंस्कारेषु मूलनीतिरव्याहतैव। ये तु प्राक् हठकारितामाश्रित्य मूलोच्छेदे प्रवृत्तास्ते पाषण्डिन इत्यपाकृताः। भारतीयसमाजधर्मस्य मूलनीतिर्मूलदृष्टिः सनातनी सर्व्वलोकहितकरी चेति सर्व्वथैव विचारेण प्रतिष्ठापयितुं शक्यते।

कर्मतन्त्रमेव भारतीयसमाजधर्मस्य मूलमिति तदेव वादिभिरधुना बहुश आक्षिप्यते। किन्तु, किमिदं कर्मतन्त्रम्? किमस्य रहस्यम्? किमत्र साध्यम्? केनेदं प्रचारितम्? कस्मादिदं प्रचारितम्? नृणां स्वभावगतिमपर्य्यालोच्यैव किमिदं प्रवर्त्तितम्? स्वभावविरुद्धश्चेत् कथमस्य प्रतिष्ठा समजनि? स्वभावसिद्धश्चेत् कथं मानवानां हितसाधने प्रतिकूलतामियात्? सर्व्वमिदं सविशेष विश्लेषणीय, पश्चाद् भूषणं वा दूषणं वेति श्लाघ्यं वा गर्ह्यमिति वा।

वैदिकयुगादेव कर्मतन्त्रं भारतेऽस्मिन् वर्षे प्रतिष्ठामुपगतम्। वेदेषु नाम कर्मतन्त्रं समुपदिष्टं, वेदपुरुष एव स्वयमस्य प्रवर्त्तकः, परमर्षयश्चार्षदृष्ट्या तदिदं तन्त्रं समाकलय्य लोकानां हितार्थाय जगति प्रावीवृतन्, भारतीयशिष्टानामिवैव सर्ववादिसम्मतः सिद्धान्तः, युक्तियुक्तश्चायम्। कोऽयं वेदराशिर्नाम? येन खलु पूर्णेन प्रज्ञानेन नानारहस्यमयं सुनियमैर्नियमितं जगदिदं नियन्त्रितं, तस्यैव ज्ञानस्य ज्ञेयार्थसमुच्चयात्मकं तज्जगत्। स चार्थराशिः शब्दमूल एव। भारतीयार्षविज्ञाने पाश्चात्त्यविज्ञाने च परमव्योमाश्रितस्य मूलशब्दतरङ्गराशेर्जगदुपादानत्वं युक्त्या विज्ञानरीत्या च निर्णीतम्। इदानीन्तनीषु वैज्ञानिकप्रक्रियासु भौतिकानां सर्व्वेषामेव भावानां शब्दादित्वमेवोररीकृत्य शब्दभावेन परिणमनं परिरक्षणञ्च परिदृष्टं, पश्चाद्वैज्ञानिकक्रममेवाश्रित्य प्रतिप्रसवविधिश्च बहुशः प्रचारितः। अभिज्ञानां सर्व्वमेतत् परिज्ञातम्। वस्तुतस्तु पुरुषाणां बुद्धिप्रयुक्तं निखिलं कार्य्यजातं सूक्ष्मवागाश्रयेणैव सम्पद्यते। पाश्चात्त्यैरपि तार्किकैः स्वीकृतं बुद्धिव्यापारैर्भावनायाः सहयोगिरूपेण तत्तद्भावनाबोधकस्य वाक्यस्य नियोजनमस्त्येवेति। कथं वान्यथा भवितुमर्हति? येन केनचित् पुरुषेण यद् यत् कर्त्तुमिष्यते तेन तेनैव तावत् तत्तत्कार्य्यभावना हृदि निधीयन्ते। सर्व्वं खलु कार्य्यं पुनर्नित्यस्य सतः किमपि किमप्यभिव्यञ्जनमात्रम्। अतः साध्ये कर्मणि सतोऽभिव्यञ्जने स्वतः प्रणोदितस्य सत्ताप्रापकस्य सत्त्वरूपवातोर्विजृम्भणं पुरुषकार्य्यप्रकरणे नितरामेवावधारणीयम्। कार्य्यप्रवृत्तपुरुषान्तर्व्याप्तं तच्च सत्त्वं प्रवर्त्तकभावरूपतया शक्तिविशेषं हृदि समुद्भावयति। तच्च तेजः प्राणानिलव्यापारैर्हृदयपरिसरपद्धतिरूपं नाड़ीतन्त्रमवलम्ब्य प्रवाहभावेन निःसृत्योरःकण्ठादीन् निर्गमप्रदेशानाश्राय शब्दरूपेण स्वप्रकाशने व्याप्रियते। एवं चेतनानां यथा यथा कार्य्योत्पत्तिस्तथा तथैव साहचर्य्येण शब्दरूपवाक्योत्पत्तिः। यस्यां भावनायां कार्य्यस्य निदानं तत्रैव वाक्यस्यापि

निदानम्। चेतनकार्य्यमित्थं वाक्ययोगि। जगतश्चावस्थामर्य्यादादीनां समालोचनया प्रज्ञाचैतन्येन प्रवर्त्तितमिदं जगत्कर्म्मचक्रमिति केनापि न निराकर्त्तुं शक्यते। तदेव प्रज्ञाचैतन्यं वेदपुरुष इति परमर्षिभिः सज्ञायते। पूर्णस्य सर्व्वसत्त्वाधिष्ठानस्य मूलसत्त्वस्य समाश्रय इति पुरुष एवायम्। सर्व्वकर्म्ममूलभूतस्य शब्दात्मकवाक्यराशेरप्याश्रय इति वेदपुरुषश्चायम्। ॐ तत् सदिति मन्त्रब्राह्मणोपनिषत्सु सर्व्व-जगद्बृंहणव्यापृतस्य, बृंहणादेव ब्रह्मणः, परिणियन्तृत्वादेव जीवजग-दन्तर्यामिनः शुद्धसत्त्वाश्रयेण सर्व्वात्मेश्वरस्य परिचयः सर्व्वत्रैव समुद्भासते। ओमितिशब्दमूर्त्तिविश्लेषणेन यदेव निखिलशब्दानामुत्पत्तिबीजं वैज्ञा-निकैरुपलब्ध, तदेव सदिति सर्व्वसत्त्वनिदानं वैदिकैर्निर्दिष्टम्। सर्व्व-श्चेदं कार्य्यपारम्पर्य्यं जगति विकृतिमात्रं विकृतिमात्रमिति नेदं तत्त्वं नेदं तत्त्वमिति कृत्वा शेषभूते सद्रूपे प्रणवरूपे च तद्भावेन परिनिष्ठितम्। अत एव परमतत्त्वस्यैव भावान्तरद्वयमाश्रित्य त्रितयात्मकोऽयं मन्त्रः सर्व्ववेदानां रहस्यतयाऽङ्गीकृतः। निखिलेषु जगत्कार्य्येषु रहस्यमिद मुपादानरूपेण व्याप्रियमाणम्। कार्य्यकारणपरम्परा च तद्रहस्यात्मक-मन्त्रपरम्परयैव प्रकाश्यमाना। एवमेव वेदादेव जगदुत्पत्तिरिति सिध्यति। जगतस्तस्य शब्दयोनित्वं न केवल वेदप्राप्यत्वमपि तु वेद-हेतुकत्वमपि। आद्यस्य लोकस्रष्टुरपि हृदि प्रतिष्ठापितो वेदराशि-र्जगन्निर्माणे तस्य कारणतामवलम्बते। प्रतिष्ठापकश्च सनातनो वेद पुरुषः स्वयमेव नान्यः। आब्रह्मस्तम्बपर्य्यन्तं व्यापृताना जीवपुरुषाणां तदधिकारभूतत्वात् कर्त्तृत्व नैव तेषु सम्भवतीति दिशा वेदानामपौ-रुषेयत्वमपि परिगीतम्। वस्तुतस्तु मूलचैतन्याधिष्ठाने मूलवेदानु-सन्धानं कर्त्तव्य, ब्रह्मादयश्च स्वे स्वे हृदि तत् प्रतिष्ठापितमुद्बोध्य कृतार्थतां लेभिरे, वेदप्रणोदनामन्तरेण जगत्कार्य्येषु स्वस्वाधिकारभूतेषु तेषां क्रियाप्रवृत्तेरेवाभावात्। किञ्च सर्व्वत्रैव ब्रह्मादिकर्त्तृकसृष्टौ, सिसृक्षाभावे पूर्णप्रज्ञपूर्णसत्त्वाधिष्ठितस्य तत्तद्गतान्तःसत्त्वस्य सन्द-

नात् तत् स्पन्दनं पूर्णप्रज्ञस्य पूर्णसत्त्व नीयमान तच्चालनया सृष्टिकार्य्यं निर्वाहयति। एवं सति सर्व्वेषामेव जीवानामन्तर्हृदधिष्ठाने साक्षादन्तर्यामिनः परमेश्वरस्य सर्वसत्त्वाधिष्ठानस्य सद्भावात् कथ न सर्व एव वेदार्थेषु समुद्बुद्धा ? सर्वे च वेदानुगुणसृष्टिप्रतिपालने प्रभवो भवेयुः ? सत्यं स वेदपुरुष सर्वेषा हृदये समवस्थित इति। किन्तु बाह्यकरण व्यापारेषु व्यासक्ता जीवास्तद्योगाद्विच्छिन्ना इव। येन येन तु सौभाग्यवशाद्वेदपुरुषानुग्रहलाभेन तपोयोगसमाधिप्रभृतिभिर्व्यासक्तिकारणेभ्यो हृदयमुद्धृत्य वेदात्मके सदात्मनि विनिवेश्यते, तेन तेन तु तादृशं सामर्थ्यं लब्धुं शक्यत एवेति नास्त्यत्र कोऽपि सन्देहः। आद्याः खलु परमर्षयः तैस्तैरुपायैरेवं योगसिद्धिं लेभिर इत्यनुश्रुतवन्तो वयम। तैरेव च वेदमन्त्राः स्वस्वहृदयादाकलय्य मूलमन्त्रैः सह तत्तद्देशकालोचिततया नानाशाखाविभागेन प्रवर्त्तिताः। अर्वाचीनानां तादृशयोग्यताऽभावान्नैव मन्त्राणां साक्षात्कारो, नैव च शाखाना परिचय इति प्रमादाद्वेदानामुत्सन्नप्रायत्वमेव जातम्। नित्यज्ञानमयो हि वेदः सर्वथाऽचिन्तनीयश्चाप्रमेयश्चेति वेदार्थमनने प्रथमप्रवृत्तेन भगवता मनुना निरणायि। परमथ वैदिकसंहितारूपेषु संग्रहग्रन्थेषु यद् यत् किञ्चित् साक्षात् समुपलभ्यते, मन्वादीना वेदार्थमनने प्रवृत्तानां मुनीनां वेदार्थभावनास्मरणमूलकेषु स्मृतिनिबन्धादिषु च शास्त्रार्थमालोच्य यद् यन्मूलज्ञानरूप वाक्यमाकलयितुं शक्यते, केवलं स स एव तावद्वेद इत्युपादीयते।

तर्हि मनुष्याणा दुर्भगाणामिदानीन्तनाना कर्मतन्त्ररहस्यबोधे का गति ? यथा यथा हि मनुष्याणां कर्म सनातनस्य सत्त्वपुरुषस्य वेदमूर्त्तेः सम्मत, तथा तथा धर्मोऽयमिति व्यपदेशभाग् भवति। सृष्टिकर्मणि सत्त्वे येन धार्य्यते स एव धर्मो धारणात्। जगति परिवर्त्तनशीले जीवकर्मणां समस्या अनुदिनमेव परिवर्त्तन्ते। प्राचीनैर्या याः समस्याः समुद्भाविता समाश्रितास्च,

न होदानीं तामामेव समाश्रयेण कृतकृत्यता जायेत। जीवाना-मन्योन्यसम्मर्दनसङ्घर्षणरीत्या खलु जीवनसमस्याना समुत्पाद । नैतर्हि प्राचीनप्रायाणि जगति संमर्दनसङ्घर्षणानि। दृश्यन्ते हि तानि सदैव नवनवानि जटिलजटिलानि चेति। किमत्र कार्य्यम् ?

न भेतव्यम्। यद्यपि नैव सन्त्यधुना साक्षाद्वेदार्थद्रष्टार ऋषयः, सन्ति तु प्राचीनाना महर्षीणा कर्मतन्त्रविहितिपद्धतय । तासु च कर्मरहस्यस्य मूल समुद्घाटित समुद्घोषितञ्च। तन्मूलमवलम्ब्य वैदिककर्ममार्गानुसारिभिरपि वर्त्तमानसमस्यासु निर्णयः कर्त्तुं शक्यते।

सन्मूलवादिशास्त्रस्य सर्वात्मकस्य, क्रियायाश्च सतः परिचयात्, जीवेष्वाब्रह्मस्तम्बपर्य्यन्तेषु प्राणचेष्टासूचिकाः क्रिया नियतमेवाङ्गी-कार्य्या। एकस्य सतः सत्यरूपस्य देवस्य सत्त्वपुरुषस्याधिष्ठानात् सर्वत्र प्राणिकर्म सुव्यवस्थित वर्त्तत एव। यानि यानि कर्माणि मनुष्यै-र्यदा यदा क्रियन्ते, तदा तदैव सत्त्वात्मके हृदये तेषां तेषां कर्मणा मनुरूपाणि सत्त्वसञ्चालनानि समुद्भवन्ति। यद्यपि सर्वेषामेव जीवाना कर्मसु प्रवृत्तिः, प्रवृत्तिसदृश्यश्च चेष्टा दृश्यन्ते, तथापि मानुषव्यति-रिक्तानां तेषां कर्म न विमर्शनरूपमननपूर्वकम्। मननाधिकारा-देव मनुष्या, मनुष्या इति मननशक्तिमतो मनोः प्रजापतेरात्मजाः। अन्येषान्तु देवतिरश्चां गरिष्ठं लघिष्ठञ्च कर्म स्वस्वकर्मात्मनि प्राचीनानां केषाञ्चिन्मननपूर्वककर्मणा संस्कारवशात् सञ्जाताः प्रवृत्तीराश्रित्य निर्वाहितमित्यङ्गीक्रियते। ईदृशः कर्मणामनुबन्धस्तावन्मनुष्यजन्म-न्येवोत्पद्यते। अत एव यत्र यत्र यो यो जीवो दृश्यते, यस्य यस्य च कर्मचेष्टासु प्रवृत्तिस्तत्र तत्र तस्य तस्यैव सत्त्वात्मानमाश्रित्य मनुष्यरूप-मेवान्तराले समुल्लसति। मानुषकर्मफलेनैव सर्वं जगत् परिचेष्टितम्। कर्मणा मानुषकृताना तारतम्यादुच्चावचजीवव्यवस्था। युक्तञ्चैतत्। ये खलु नरा इह प्रायेण हिंसादिपरायणास्तेषां कर्मसंस्कारमूलं

सत्त्वात्मनि सञ्चितं किमप्यदृष्टं, सर्वथा चरितार्थतालाभाय सर्वसत्त्वाधिष्ठाननियमनात्, स्वानुरूपसत्त्वायतनमिहव्याघ्रादिशरीरमेवापि स्त्रियते। एवमन्यत्रापि। मनुष्य एव हि यथाकर्म यथाश्रुतं स्थावरजङ्गमरूपाणि धत्ते। एकस्मिन्नेव मनुष्यजीवने बहूनां कर्मसंस्काराणां सम्भवात्, सुबहूनि स्थावरजङ्गमरूपाणि यथाक्रमं मनुष्येणैकेन जन्मजन्मान्तरप्रसङ्गाद् गृह्यन्ते। विचारेणैव सर्वे जीवा मानवात्मानः प्रच्छन्नमानवा इति स्फुटं सिध्यति।

किञ्च जगत्यस्मिन् यद्यपि बाह्या प्रकृतिर्जडेति व्यपदिश्यते, तथापि क्षुद्रादपि क्षुद्रं जडकणमात्रमादाय वैज्ञानिकवरैस्तत्र कोटिशो जीवाणूनां सन्धानं क्रियते, वैज्ञानिकयन्त्रैः प्रदर्श्यन्ते च। इत्थमालोचनेन यत्र यत्र सत्त्वं, तत्र तत्र जीवयोगः। जीवहीनं सत्त्वमिति तु रिक्तं वचः। राशिरूपेण यत्र जीवाः समुच्चिताः, किन्तु समुच्चये तत्र चैतन्यमयस्याधिष्ठातुः कस्यचिज्जीवस्य न सद्भावस्तत्रैव समुच्चयस्य जडाविकरणमाश्रित्य जड इति लौकिकव्यवहारः। वस्तुगत्या जीवराशिभिराकीर्णमेवेदं जगत्। जीवशक्तिस्तारतम्येनाब्रह्मस्तम्बपर्यन्तमनुस्यूता। सा च जीवशक्तिर्मूलतो मानुषी शक्तिः। अत एव कर्मतन्त्रे सर्वं जगन्मनुष्यमयमिति सिद्धम्। न हीदृशं कर्मतन्त्रं मनुष्यत्वसमुद्दीपने मन्दमिति विचारसहम्।

इदानीन्तनैरस्मद्देशगौरवभूतैराचार्यपादैर्जगदीशवसुमहोदयैः कृत्स्ने जगन्मण्डले स्थावरजङ्गमात्मके प्राणिनां प्रतिष्ठां वैज्ञानिकरीत्या सर्वसमक्षं प्रकटय्य महती कीर्तिः समुपार्जिता विज्ञानविदां समाजेषु। सर्वं जगत् प्राणिनां प्राणस्पन्दनेन स्पन्दितमिति प्रदर्श्याचार्यपादैः सृष्टिमूले महदिदमैक्यसूत्रमाविष्कृतमिति विस्मयेन परवशं वैज्ञानिकमण्डलम्। न हि प्राणिहीनं किञ्चिज्जगतीति भावनया सत्यमेव मनुष्याणां हृदये सर्वव्यापिसाम्यस्फुरणात् कोऽपि समुन्नतो भावः समुदेतीति नास्ति सन्देहः। सर्वप्रमाणगरिष्ठेन प्रत्यक्षप्रमा-

येनेदं तथ्य तैः प्रतिष्ठापितमित्याचार्य्यपादाना कथं वा नैतत् प्रतिष्ठाकरम्? किञ्चिदमपि न विस्मर्त्तव्यं यत् कर्मतन्त्रिभिः कर्मविचारेण न केवल सर्वत्र प्राणिप्रतिष्ठा कृता, परं तदुपरि मनुष्यत्वप्रतिष्ठा कृतेति। सर्वत्र प्राणी प्राणीति भावना समुन्नतैव, पर सर्वत्र मनुष्यो मनुष्य इति भावना नितरामेव समुन्नततरा। तथापीदं यत् कर्मतन्त्रं विगीयते तदविचारविजृम्भितमेवेति मन्यामहे।

(क्रमशः)

---

## युवतिविवाहे सुश्रुतः

[ निबन्धकः—महामहोपाध्यायः श्रीपञ्चनाथविद्याविनोदः ]

समाजसंस्कारैषिणा केचन वदन्ति महर्षिः सुश्रुतो युवतिविवाहं व्यवस्थापितवान्, यत' सुश्रुतसंहितायां शारीरस्थाने दशमेऽध्याये तेनेदं लिखितम्—

ऊनषोडशवर्षायामप्राप्तः पञ्चविंशतिम्।
यद्याधत्ते पुमान् गर्भं कुक्षिस्थः स विपद्यते॥
जातो वा न चिरं जीवेज्जीवेद्वा दुर्बलेन्द्रियः।
तस्मादत्यन्तबालायां गर्भाधानं न कारयेत्॥

सु० शा० १०अ० ४३श्लो०—(बङ्गवासीसंस्करणे)

स्पष्टमेवैतत् गर्भाधानविषयकं श्लोकद्वयम्, न विवाहविषयम्। परन्तु पाश्चात्यानुकारिण एते संस्कारकर्म्मिणो विवाह-स्त्रीसंसर्गयोरेकार्थत्वमेव प्रायो मन्यन्ते।

विवाहविधिस्तु एतदव्यवहिते पूर्ववर्त्तिनि वाक्ये वर्त्तते, यथा—"शक्तिमन्तश्चैनं (कुमारं) ज्ञात्वा यथावर्णं विद्या ग्राहयेत्। अथास्मै

पञ्चविंशतिवर्षीय द्वादशवर्षां पत्नीमावहेत्, पित्र्यधर्म्मार्थकामप्रजाः प्राप्स्यतीति।" (शा० १०४२)

भगवान् मनुरपि प्राह—

"त्रिंशद्वर्षो वहेत् कन्यां हृद्यां द्वादशवार्षिकीम्।
त्र्यष्टवर्षोऽष्टवर्षां वा धर्मे सीदति सत्वरः।" ९।९४

कन्याया द्वादशवर्षमुद्वाहे गौणः कालो भगवता मनुना व्यवस्थीयते—स एव महर्षिणा सुश्रुतेनापि व्यवस्थितः। धर्म्मप्रवक्ता भगवता मनुना तु 'त्र्यष्टवर्षोऽष्टवर्षां वा' इत्येतेन मुख्य कालो निर्दिशितः—भिषक्शास्त्रकारस्तु मुख्यकाल नोल्लेखितवान् इत्येव तयो. प्रभेद। मन्ये गौरोदानादोना फलमिच्छन्तो धर्म्मशास्त्रमेवावश्यमनुवर्त्तेरन्, नात्र भिषक्शास्त्रस्याधिकार इति मत्वा सुश्रुत. स्वशास्त्रमर्य्यादा नोल्लङ्घितवान्।

ऋतुदर्शनात् प्रागेव कन्याया विवाहो भवेदिति स्पष्ट एव सुश्रुतस्याभिप्रायः, द्वादशवर्षीया (गौणत्वेनापि) विवाहव्यवस्थापनात्—तदेव वयः स्त्रिया ऋतुकालप्रवर्त्तनसमय इति निर्द्दिशाच्च। यथा—

"तद्वर्षाद्द्वादशात्काले वर्त्तमानमसृक् पुनः।
जरापक्वशरीराणा याति पञ्चाशत क्षयम्॥
युग्मेषु तु पुमान् प्रोक्तो दिवसेष्वन्यथाऽबला।
पुष्पकाले शुचिस्तस्मादपत्यार्थी स्त्रियं व्रजेत्॥"
(शा० ३।८,९)

अत्र सुश्रुतेन 'ऋतौ भार्य्यामुपेया'दिति श्रुतिम् 'ऋतुकालाभिगामी स्या'दिति स्मृतिञ्चानुसृत्य 'पुष्पकाले शुचिस्तस्मादपत्यार्थी स्त्रियं व्रजेत्' इत्युक्तम्। स्त्रिया द्वादशे त्रयोदशे वा वयसि रजसि प्रवृत्ते षोडशवर्षपर्य्यन्तमपेक्षणीयम् इति न व्यवस्थितम्। केवल तु मासमात्रं ब्रह्मचर्य्यनियमेन दम्पतिभ्यां स्थातव्यमित्येव व्यवस्था कृता शारीरस्थाने द्वितीयेऽध्याये, यथा—"ततोऽपराह्णे पुमान् मास ब्रह्मचारी

सर्पिं स्निग्धः स्पिं चीराभ्यां शाल्योदनं भुक्त्वा मासं ब्रह्मचारिणीं तैलस्निग्धां तैलमाषोत्तराहारा नारीमुपेयाद् रात्रौ सामादिभिरभिविश्वास्य * विकल्प्यैवं चतुर्थ्यां षष्ठ्याम् अष्टम्यां दशम्यां द्वादश्याश्चैवोपेयादिति पुत्रकामः ।" २८

एकत्रैवं विधाय कथमन्यत्रासौ महर्षिः स्वयमेव 'ऊनषोडशवर्षाया'मित्यादिकं वचनमारचयेद् येन श्रुतिस्मृत्योर्बाधः स्ववचनस्य च व्याघातः प्रसज्येत ? महर्षीणामाप्तत्वेनावितथार्थोपदेष्टृत्वात् 'ऊनषोडशवर्षाया'मित्यादिमोघवचनोपन्यास कथं वा सङ्गच्छते ? मोघत्वञ्च तादृशवचनस्य दृष्टवर्त्तमानपरिस्थितित स्फुटमेव । यतः द्वादश-त्रयोदश-चतुर्दश-पञ्चदशवर्षीया स्त्रियो हि वर्षेऽस्मिन् भारते † अहरहः सहस्रश अपत्यानि जनयन्ति, न तु तानि गर्भस्थान्येव विपद्यन्ते, नापि च प्रायेण स्वल्पायूंषि दुर्बलेन्द्रियाणि वा भवन्ति ।

अतोऽस्माभिरनुमीयते अत्र "ऊनषोडशवर्षा"यामिति पदे अस्ति काचिद् भ्रान्तिरिति, कल्प्यते च 'ऊनषोडश' स्थले 'ऊन द्वादश' इत्येव पाठः साधीयानिति ।

समर्थनायास्यास्मदनुमानस्य भूयः किञ्चिदत्रोपस्थाप्यते । 'ऊनषोडशवर्षाया'मित्यादिवचनस्यायमुपसंहारः—

"तस्मादत्यन्तबालाया गर्भाधानं न कारयेत् ।" इति । "आषोडशाद् भवेद् बाला" इति वचनात् षोडशवर्षस्यैव बालत्वस्य चरमावधित्वे सिद्धे कथम् 'ऊनषोडशवर्षीयाया'मत्यन्तबालात्वव्यपदेशो युज्यते ? अतः 'ऊनद्वादशवर्षाया'मित्येव महर्षेरभिप्रायः, तस्मिन् अत्यन्तबालेति पदप्रयोगः सङ्गच्छत एव ।

---

* अनेन च स्त्रिया अल्पवयस्कत्वमेव सूचितम् ।

† न केवल भारतवर्षे अपि तु ईश्वानरेऽपि ऊनषोडशवर्षा स्त्रियो गर्भिण्यो भूत्वा सुस्थदेहानां दीर्घजीविनाञ्चापत्यानां जनन्यो भवन्ति ।

अत्र तु केनचित् प्रश्नेत—ऊनद्वादशवर्षीया रजःप्रवृत्त्यभावात् तत्र गर्भाधानप्रसङ्गः कथं स्यादिति। अत्रोत्तरं, क्वचिद् गूढरजस्काया अपि गर्भो जायते—अजातरजसं स्त्रियं मा कश्चित् कामिनाभिगच्छेदित्येव महर्षेरभिप्रायः।

अपरञ्च ;—'ऊनषोड़शवर्षायामित्यादिकस्य वचनस्याव्यवहित पूर्वे वचने ( प्रागुक्ते ) विवाहविधौ पञ्चविंशतिवर्षीयो द्वादशवर्षां पत्नीमावहेदित्युक्त्वा कथमसौ महर्षिरनुपदमेव पुंसः पञ्चविंशतिवर्षत्वमविहत्य स्त्रियः षोडशवर्षत्वं विदध्यात्? अत्र तु—"ऊनषोडशवर्षायामप्राप्तः ऊनविंशतम्" इत्येव ( उभयतश्चत्वारि वर्षाणि योजयित्वा ) वक्तव्यमासीत् सुश्रुतस्य। अत एवास्माभिर्यदनुमित तदेव साधीयो भवति—"ऊनद्वादशवर्षायामप्राप्तः पञ्चविंशतिम्" इति, येन ग्रन्थस्य पूर्वापरसङ्गतिर्भवेत्, धर्मशास्त्रोक्तिश्च न व्याहन्येतेति शिवम्।

---

## सन्देशाः

**ज्वालापुरीय-महाविद्यालयः**—प्रोच्छलदच्छोत्तुङ्गतरङ्गायाः कृतकलिकलुषभङ्गाया गङ्गायास्तटे वासन्तिकोल्लासमनोहरे प्रदेशे प्राचीनमहर्षिपद्धतिमनुसारयत् सर्वतो गीर्वाणसरस्वतीरसप्रवाहं प्रवर्त्तयद् उत्तराखण्डं मण्डयद् भारतालङ्कारभूतं विराजते "ज्वालापुर-महाविद्यालयो नाम गुरुकुलम्। के ते अरसाः के वा चक्षुषी ये न वीक्षितुमुत्सहेतेऽस्य सुषमां, कस्य वा सफलजनुषो न श्रवणपुटकामृत इव निष्यन्दाविलमस्याभिधानम्। अस्मिन्नीदृशेऽपि विकटेऽभित. छात्राणामविद्यामृतपिपासुच्छात्रवृन्दस्यैकमेकमात्रमाश्रयभूतम्।

अस्मिन् गुरुकुले सम्प्रत्यधीयते निःशुल्कं छात्राणां समशती, भोजन-वस्त्राध्यापनादिकं सर्वं गुरुकुलेनैव विधीयते। अस्यैवाब्दद्वयं न्याचार्यपदं स्वनामधन्या वदान्यास्तत्रभवन्तः "शुद्धबोधतीर्थस्वामिनः," येषां व्याकरणाखण्डलायितं कस्य न चक्षुष्मतो गोचरीभूतम्। अत्रैव च प्राचि काले दिग्दिगन्तरख्यातकीर्तयः स्मरणीयजन्मानः श्रीपण्डित-नृसिंहदेवशास्त्रिमहोदयाः सर्वतन्त्राप्रतिम-प्रतिभश्री १०८ मत्पण्डित-काशिनाथशास्त्रिचरणवर्याः, श्रीपण्डित शालग्रामशास्त्रिमहोदयाश्च कार्यं निरपादयन्। गुरुकुलमिदं प्रतिवत्सरं स्नातकफलं सूते, तच्च फलमपि फलान्तरं देशसेवात्मकमध्यापनात्मकं वा समुत्पादयतीति चित्रम्। तथा हीदमेवैकतमं गुरुकुलं यदन्यगुरुकुलेभ्योऽध्यापकान् वितरति। अस्य स्नातकाः प्रायशः सर्वेष्वपि गुरुकुलेषु अध्यापकत्वं मुख्याध्यापकत्वं वा बिभ्रति। अस्यैवाष्टादशहिन्दीसाहित्यसम्मेलन स्याधिपतिः श्रीपण्डित-पद्मसिंहशर्मा साहित्याचार्यः, प्रसिद्धो देशभक्तः श्रीपण्डित नरदेवशास्त्री वेदतीर्थश्च कार्यधुर्येष्वेकतमौ। अद्यावधि पञ्चविंशदधिकशतानि स्नातका अस्य गुरुकुलस्य यत्र तत्र कार्येषु संलग्ना मातृभूमेराननमुज्ज्वलयन्ति यो यश्छात्र आ-चतुर्दशवर्षमत्राधीते तस्मै तुष्टं सत् कार्यकर्तृमण्डलं विद्याभास्कर इत्युपाधिं वितरति। अस्याधुनिकेषु कार्यसम्पादकेषु श्रीमान् पण्डित-रविशङ्करशर्मा मुख्याधिष्ठातृपदे, श्री पं॰ काशीदत्तशर्मा सहायक मुख्याधिष्ठातृपदे, विद्याभास्करः श्री पं. हरिदत्तशर्मा शास्त्री न्याय-व्याकरण-काव्य-वेदतीर्थः मुख्याध्यापकपदे, विद्याभास्करः श्री प चण्डदत्तशास्त्री काव्यतीर्थः तथा श्रीरामानन्दघोषः बी ए. महोदयश्च विशेषमुख्यकार्यकर्तृ पदे वर्तन्ते।

स्नातकेषु विद्याभास्कर श्री प विश्वनाथशास्त्री न्याय-व्याकरण-तीर्थं आचार्यः गुरुकुलभैसवालस्य, विद्याभास्कर श्री प. उदयवीर-शास्त्री न्याय-साङ्ख्यतीर्थं. अध्यापकः प्राफेसर (लवपुरे) विद्याभास्करः

श्री पं दुर्गादत्तशास्त्री एम् ए. (प्रोफेसर देवसमाजकालिजे लवपुरस्थ) विद्याभास्करः श्री प. व्यासदेवशास्त्री एम् ए एल् एल् बी. तथा विद्याभास्करः श्री प. सूर्यकान्तशास्त्री एम् ए व्याकरणतीर्थः (प्रोफेसरः प्राच्यमहाविद्यालये लवपुरस्थ) विद्याभास्करः श्री पं रामावतारशास्त्री वेदान्ततीर्थश्च सम्प्रति योगकर्मणि सलग्नो वर्तते तथा श्री पं विष्णुदत्तशास्त्री बी. ए, एवमन्येऽपि कतिचन विशेषत उल्लेखार्हाः।

अन्ते वयं सहर्षं सूचयामो यदमुष्य गुरुकुलस्य वार्षिकमहोत्सव एकविंशतितमः फाल्गुनमासस्य पूर्णिमाया तथा चैत्रस्य वलक्षेतरे पक्षे प्रतिपदातश्चतुर्थीपर्यन्त होलिकामहोत्सवावसरे सम्पत्स्यते। अत्र च सम्पतिष्यन्ति नानादिग्देशान्तरेभ्यो महानुभावा दिग्विकोर्णयशसो महात्मानः सन्यासिनो महोपदेशकाश्च। अथ च युक्तप्रान्तीयार्यप्रतिनिधिमहोपदेशकसम्मेलनम्, पण्डितप्रकाण्डमण्डितविद्वत्कुलसम्मेलनम्, प्रेमसमितिवार्षिकाधिवेशनम्, महिलासम्मेलनम्, युक्तप्रान्तीय-कविसम्मेलनम् इत्यादिसम्मेलनानां सम्मेलनं सम्मिलिष्यति। सर्वेऽपि महानुभावाः समेत्य सुहृद्बन्धुसमेताः सभाजयन्तु गुरुकुलम्, समेधयन्तु चास्माकमुत्साहमित्यर्थयामहे।

वैशेषिकमस्य वृत्तं कदाचिदन्यदा पाठकवर्गस्य श्रवणाध्वाध्वनीनं कर्तुमिच्छामः। कविसम्मेलनस्य सभापतिपदमष्टादशहिन्दीसाहित्यसम्मेलनस्य सभापतिस्तथा प्रसिद्धः काव्यमर्मज्ञ श्रीमान् पण्डितः पद्मसिंहशर्मा साहित्याचार्य एवालङ्करिष्यति। प्रार्थयामश्च सप्रश्रयं यत् कवि-महोदया 'मार्च'मासस्य विंशतितारिकातः पूर्वमेव समस्याः प्रपूर्य्य काव्यरसप्रायाः प्रहिण्वन्तु "महाविद्यालय ज्वालापुर जि. साहारानपुर" इति संकेतेन। सर्वश्रेष्ठ-समस्यापूर्तिकर्त्रे पारितोषिकमपि प्रदास्यते।

## समस्याश्चैता. *

| संस्कृते | हिन्दी-भाषायाम् |
|---|---|
| १ यशोधनाना हि यशो गरीयः। | १ आह कढि जायगो। |
| २ नमस्ते। | २ वीर ब्रह्मचारी ने। |
| ३ किं पारतन्त्र्ये सुखम्। | ३ राखेउ नैन पलक की नाईं। |
| ४ महाविद्यालयो दृश्यताम् | ४ सीता फिनार है। |
| ५ लभ्यं स्वराज्य भवेत्। | |

विद्याभास्करः श्रीजयनारायणशास्त्री।
ज्वालापुर महाविद्यालय' साहारानपुर।

**परिषच्छात्रसमितिः**—द्वित्रेभ्यो वर्षेभ्य' पूर्वमेतदभिधाना काचित् समिति परिषदन्तेवासिभिः कैश्चिदनुष्ठीयमाना काश्चित् प्रतिष्ठामध्यगच्छत्। मन्ये तात्कालिकी परिषत्पत्रिकामालोचयतामयं वृत्तान्तः स्वान्तादनपगच्छन् सत्यतानिर्द्धारणे साहायकमारचयिष्यतीति। तदानीञ्च समुद्योक्तॄणां केषाञ्चन च्छात्राणां सद्बभेदमङ्गी कृत्यान्यत्र प्रस्थानेन, केषाञ्चन चाप्रासबुद्धिवार्द्धक्यतया एकनिष्ठत्वाभावेन सुसमिद्धमानापि सा क्रमेण विलोपमुपासादयदित्यपि त्रपाभरविक्लिष्टपुटाः प्रकटयितुमग्रेसरामः।

इदानीं पुनः केचन प्रदीप्तोत्साहाः सहाध्यायिनो ध्यायं ध्यायमेताहशाः समितेरुपयोगितां, श्रावं श्रावञ्च प्राचीनच्छात्राणामनयैव दिशा प्रख्यातिमतिमात्रामुदयुञ्जतैकां समितिमासञ्जयितुम्। तेषां प्रयत्नपरम्परया च विगतसौरभाद्रपदे ( १२३५ बङ्गाब्दीये ) मासि संस्कृतसाहित्यपरिषद्भवने प्रधानच्छात्राणामैक्येन काचिन्मन्त्रणासभा तथाविधसमितिघटनार्थमाहूता। तत्र च सर्वाविसंवादितया समितिप्रवर्त्तनप्रस्तावः परिगृहीतः, कर्त्तव्यतया चैते विषया प्राधान्येन नियमावल्यामालम्बितवन्तः स्वप्रतिष्ठाम्। एते च नियमा एतत्-

---

* सर्वा, समस्यापूर्त्तयः श्री, पं, हरिदत्तशास्त्रिनाम्ना प्रेरिता भवेयुः।

पत्रिकायाः पूर्वसङ्ख्यिकायामेव प्रकाशं नीताः। व्याकरणार्थञ्च पुनरधो निर्दिश्यन्ते—

१। अस्याः समितेः परिषदङ्गतया "परिषच्छात्रसमिति"रित्येव नाम स्यात्।

न तावन्न विदितमिदमभिज्ञानां यद् वयोवृद्धबहुलायां परिषदि सुकुमारमतीनां बालकाना स्वाभिप्रायप्रकाशचेष्टा नैव तथा पद लभते यथा समवयःप्रायाया स्वानुष्ठिताया परिषदि, एतदर्थ-मनुष्ठितेयं समितिर्न संस्कृतभाषोन्नतिं व्यभिचरतीति परिषदनुकूल-त्वात्, तदङ्गविद्यालयाधिष्ठितशिष्यसमूहानुष्ठितत्वाच्च तथाविधमस्या नामनिर्वाचनमिति।

२। परिषद्विद्यालयस्य सर्वे विद्यार्थिनो नियमेनास्याः सभ्यपदं गृह्णीयुः।

३। विभिन्नविद्यालयाध्यापकैः स्वीयविद्यार्थितया विज्ञापिता-श्छात्रा अपि अस्याः समितेः सभ्यपदमर्हेयुः।

कस्मिन्नपि विद्यालये अनन्तर्निविष्टा बहिरागताश्छात्राः कदाचित् समितिस्थितिं विघटयेयुर्विघटितस्थितयश्च छात्रानप्युन्मार्गगामिनो विदध्युरित्येतदर्थोऽयं नियमोऽन्तर्निविशते।

४। अस्याः समितेः सभ्यपदग्रहणे किमपि शुल्कं नापेक्ष्येत।

यद्यपि एवंविधसभादिपरिचालनमपेक्षत एव प्रकाममर्थं, तथापि संस्कृताध्यायिनां छात्राणामर्थसंकोचमवेक्ष्य परिषदैव परिपूर्य्यते प्रयो-जनीयार्थजातमिति सभ्यानां सकाशात् नापेक्ष्यते किमपि धनम्।

५। अस्याः समितेरधिवेशने निबन्धा व्याख्यानानि पारस्परिक-संवादाश्च संस्कृतां वाचमेवोपजीवेयुः।

पारस्परिकसंवादेषु च श्लोकविवाद-रूपसंवाद एवैको मुख्यतया-स्माभिरनुसर्य्यते, मुख्यतश्च तस्यैवं रूपमस्माभिः कल्प्यते,—कश्चिद् यथेच्छमेकं श्लोकमुपस्थापयेत्, द्वितीयश्च तस्यान्तममक्षरमुपादीयमान

श्लोकस्यादिभूतं कृत्वा अन्य श्लोकमाविष्कुर्य्यात्, । एवमन्यस्ततोऽन्यः एवं रीत्या बहुधा प्रचरिते वादे अधीयमानकाव्याना श्लोकाः सत्वरमायत्तीभवन्ति, तत्रैवास्योपयोगः ।

अस्ति चास्याः समितेरभिनयविभागोऽपि, तत्र अन्तरान्तरा भवति संस्कृतरूपकप्रयोगः । संस्कृतशिक्षायां कौशलसमुद्भावनमेवास्य लक्ष्यम् । एतदन्तर एव च समितिसदस्यैरभिनयकुशलैः प्राचीनकविभास्करकृतमुन्मत्तराघवं तथा नवीनकवि-परिषदाचार्य्य-श्रीकालीपदतर्काचार्य्यकृत स्यमन्तकोद्धारं नाम व्यायोगं भासकविकृतं मध्यमव्यायोगञ्च समभिनीय दर्शितमतिकौशलं रूपकाभिनयकृत्ये, सम्भावना च समुत्पादिता पारिषदाना दीनायाः सुरसरस्वत्याः क्रमिकोन्नतिपरम्परायाम् ।

६ । एतस्याः सम्बन्धिनो निबन्धादयः सर्वं एव विशेषतो विद्यार्थिनामुपकारमनुरुन्ध्येरन् ।

अस्याश्च समितेः कार्य्यनिर्वाहकसभाशरीरमेव कल्पितम्—

सभापतयः—श्रीकालीपदतर्काचार्य्याः ।

सम्पादकौ—श्रीविष्णुपदभट्टाचार्य्यः बि ए,
श्रीगौरीनाथभट्टाचार्य्यश्च ।

नाट्यपरिचालकौ—श्रीकार्त्तिकचन्द्रचक्रवर्त्ती,
श्रीब्रजेन्द्रकिशोरभट्टाचार्य्यश्च ।

सङ्गीतशिक्षकः—श्रीकुलदाचरणरायचतुधुरीणः ।

अन्ये कार्य्यनिर्वाहकसदस्याः—

श्रीज्ञानदाचरणभट्टाचार्य्यः, श्रीनरेन्द्रमोहनचक्रवर्त्ती, श्रीहरेन्द्रकुमारगङ्गोपाध्यायः, श्रीहेमचन्द्रगङ्गोपाध्यायः, श्रीविनयभूषणभट्टाचार्य्यः, श्रीराजेन्द्रनाथभट्टाचार्य्यश्च ।

तदेवमस्याः समितेः परिषत्कल्पसहायभूताया उत्तरोत्तरमभिवृद्धिश्च निराबाधता च परमेशसमीपे समाशास्यते ।

# संस्कृतसाहित्यपरिषत्

इयं संस्कृतसाहित्यपरिषत् प्रतिभा रवेः ।
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम् ॥

| | | |
|---|---|---|
| March, 1929 | १८५० शकीये फाल्गुने ११श-वर्षस्य ११श-संख्या | Vol XI No 11 |

## करुणाष्टकम्

[ निबन्धकः—श्रीदिगम्बरगर्दे ]

परम-दुस्तरमत्र भवाम्बुधिं
सहजमुत्तरितुं दृढमिच्छतः ।
अतुलपापकृतः सकलागसां
प्रशमनं नमनं भवतो क्रियात् ॥१॥

न च कदापि कृतं सुकृतं मया
तव तु नाम्नि दृढा विहिता रतिः ।
कथमिदं तव नाम-रसायनं
ननु हरे न हरेन्मम किल्बिषम् ॥२॥

अपि कृताः कृतश्चरितं तपो
वसु तथा वितत यदि वाऽर्थिषु ।
अखिलजन्म तथापि वृथा गतं
यदि रतिः परमा न रमावरे ॥३॥

ननु नरो जगति प्रगति-प्रिय
प्रयततेऽनुदिनं सुखमीहते ।
न लभते तु तदैहिक-वस्तुषु
भवसि राम ! विरामपदं तदा ॥४॥

तव सङ्कीर्तनं सुखभाजनं
तव नमस्करणं जयकारणम् ।
तव कृपावरणं भव-वारणं
न तव विस्मरणं मरणं वरम् ॥५॥

अहरहः स्मरतो भवतो गुणान्
असुकृतं बहुधा विलयं गतम् ।
प्रणतनाथ ! यदुर्वरितं भवेत्
तदपि सत्कृपया क्षपयापय ॥६॥

मदमयं दमयन् बत कालिय
त्वममलं कृतवान् यमुनाजलम् ।
मम तथैव नियम्य मनोभवं
मतिमिमां सरलां विमलां कुरु ॥७॥

पतितपावन ! हे परमेश्वर
सकरुणं शृणु मे करुणाष्टकम् ।
प्रणमतो भव-बन्ध-विमोचनं
द्रुतमिदं कुरु ! माऽस्तु विलम्बितम् ॥८॥

# श्रीभगवद्गीतासुधाकरः *

[ निबन्धकः—श्रीबाबुलालमिश्रः ]

श्रीर्यस्य चित्तनिहिताऽतिहितावहारं
संसारसिन्धुमपि मोहमहावहारम् ।
सन्तार्य गोष्पदमिवाऽपकरोति हारम्
भारं तमाखुवहमर्पितरत्नहारम् ॥ १ ॥
वृन्दारकप्रवरवृन्दकृतोपहारम्
बालं सुतुन्दचणमर्चकविघ्नहारम् ।
वन्दे शिवाख्यशिवशैशववाग्विहार
नागास्यमेकरदनं परशुप्रहारम् ॥ २ ॥
अविघ्नार्थाय विघ्नेशदेव्यर्था दर्शिता विदाम् ।
गीतासुधाकरेऽत्रैकमन्त्रादाद्यकलान्तरे ॥ ३ ॥
"सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज ।
अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ॥"

देवपक्षे प्रार्थनोपदेशाशीर्वादभेदेनार्थाः प्रायस्त्रिविधास्तत्र गणेशस्य प्रार्थनायामर्था दर्श्यन्ते ।

(१) मे ( हे गणेश ! मः शिव' । "मः शिवश्चन्द्रमा वेधाः" इत्येकाक्षरः । मस्यापत्यम् मिः, तत्सम्बुद्धौ । अत इञ् ) सर्वधर्मान् ( निखिलान् मम धर्माधर्मान् । "अत्र धर्मशब्देनाधर्मोऽपि गृह्यते" इति अस्यैव श्लोकस्य भाष्ये भगवान् शङ्कराचार्यः । हिंसाधर्मान् । सर्वहिंसायाम् अन् ख्यात', भावे घञ् । हिंसकधर्मान् । पचाद्यच्

* निबन्धकर्त्रा 'सर्वधर्मान्' इत्यादि गीताश्लोकस्य निखिलदेवतापक्षे प्रार्थनोपदेशाशीर्वादभेदेन नैकविधार्थाः प्रकटीकृतास्तेषु च गणेशपक्षस्यांशहितत्वादादावुपक्षेप कृत ।

स, श्रा प, स, ।

वा संक्रान्तान् अधर्मान्। सर्पन्तीति सर्पः ( विच्, सर्पश्च ते अधर्माः सर्वधर्माः। तान् ) परित्यज्य ( उपेक्ष्य ) मा * ( लक्ष्म्या सम्पत्त्या शोभया वा मम मात्रा अर्थात् स्वपत्न्या सह ) 'मा च मातरि मानि' इत्येकाक्षरः। शरणम् ( रक्षकः वा आश्रयीभूतः सन् ) अकम् ( दुःखितम्, अविद्यमानं कं † सुखं यस्य स तम्। कुटिलम् उपायम्। अस्वस्थं वा दरिद्रम्। ( अविद्यमानं कं चित्तं वा धनं यस्य सं तम्। ) व्रज ( जानीहि वा प्राप्नुहि ) ननु पापिरक्षणे पापमेव स्यात्, तत्राह मा शुचः अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि। न मद्रक्षणे ते दोषलेशोऽपि स्यात्, यतो धर्माधर्मोपेक्षापूर्वकमार्त्तनादश्रवणमात्रापेक्षे रक्षके पापसंक्रान्तिशङ्का सर्वथानुचितेति भावः। पूर्वस्मिन्नर्थेऽर्थाः चत्वारिंशदुत्तरशतद्वयम् २४०

यतः 'सर्वधर्मान्' इत्यत्र चत्वारः। 'मा' इत्यत्र त्रयः। 'अकम्' इत्यत्र पञ्च 'शरणम्' इत्यत्र 'व्रज' इत्यत्र च द्वौ। ततः ४ + ३ + ५ + २ + २ = २४०

आ अहन्तु सर्वपापेभ्यः। सर्वैः पापैः हिंसापापैः हिंसकपापैः इभ्यः आढ्य। 'इभ्य आढ्यो धनी स्वामी' इत्यमरः ( मा माम् आत्मानम् ) ‡

---

* क्विबन्तोऽत्र माशब्दो ज्ञेय।

† 'मूर्ध्नि चित्ते जले कारे सुखे ब्रह्मणि मारुते।
काले काले सुवर्णे च क' शब्दो द्रविणे ध्वनौ॥' इति अनेकार्थमञ्जरी।

‡ एवं च विदुषां भाषणलेखनशैली दृश्यते, यथा श्रीश्रीहर्षमिश्रा —'[illegible] लभते' ह्यविद्वान् लभत इत्यर्थः। पञ्चदश्यां चित्रदीपे २७५ तथा वाल्मीकीयरामायणे रावणं प्रति मारीचवाक्यम्।

'आत्मनश्च वधं मत्वा रावणस्य च तत्त्वतः।
हित हि तव निश्चित्य वचनं त्वं कर्तुमर्हसि॥'

वा॰ रा॰ आरण्य॰ ३७ २४ तत्र 'तव' 'आत्मन,'।

शुचः ( शोकाद् ) मोक्षयिष्यामि ( मुक्तं करिष्यामि ) अर्थाः २ 'सर्वपापेभ्यः' इत्यत्र । वा—

(३) आ अहन्तु चः दुर्जन , चः दुर्जनः इति शब्दरत्नावली, मा' (आत्मानम्) आशु ( क्षिप्रम् ) सर्वपापेभ्यः मोक्षयिष्यामि । अर्थाः पूर्ववत् 'सर्वपापेभ्यः इत्यत्र ३ । वा—

(४) मा अहन्तु सर्वपापेभ्य ( समस्तेभ्यो दुरितेभ्यः । हिंसा पापेभ्यः । हिंसकपापेभ्यः, समस्तदुष्टेभ्यः, वा हिंसकदुष्टेभ्यः) मोक्षे (मुमुक्षे) इष्यामि ( जानामि च ) [यदुत त्वम्] मा अशुचः (माम् अशोचीः) अवश्य शोचिष्यसि अवश्यं भाविनि भूतवन्निर्देश अनेकार्थत्वाच्छुचतेः शोचतिना तुल्यार्थकत्वम् । नान्यथा चेत्तरङ्गः सम्भवे

(५) 'अमोक्षे' इति । 'इष्याम्+इ' एवं वा च्छेदः । तत्रार्थः— आ अहन्तु सर्वपापेभ्य. अमोक्षे ( मुक्तोऽभवम् ) इ ( किम् ) इष्याम् ( जानीयाम् ) [ यदुत त्वम् ] माम् अशुचः । अर्थाः २० यतः 'सर्वपापेभ्य.' इत्यत्र ५ पूर्वोक्ता एव । 'मोक्षयिष्यामि' इत्यत्र स्थानद्वये द्विधा च्छेदः । ततः ५+२+२=२० । यद्वा—

(६) सर्वपापेभ्यः मोक्षे ( मुक्तिविषये ) अहं त्वा (त्वामेव) इष्यामि ( जानामि ) अतः मा शुचः ( मा शोचीः ) [ 'किं चित् कार्यम्' इति शेषः ] वा ( मा भिदः ) [ 'मम मनोरथम्' इति शेषः ] विभेदेऽपि शुच्यतिः । यथा शुच्यति गात्रं वाण. अथवा ( मा त्वमशोचीः । अवश्यं शोचिष्यसि ) अर्थाः १५ यतः सर्वपापेभ्यः ५, मा शुचः ३, ततः ५+३=१५ । अथवा—

(७) अत्रापि 'इष्याम्+इ' एवं छेदेऽर्थः=इ ( किम् ) अहं सर्वपापेभ्यः मोक्षे ( मुक्तिविषये ) त्वा इष्याम् ( त्वा जानीयाम् ) [ यदुत त्वम् ] मा शुचः ( माम् अशोचीः ) अर्थाः सर्वपापेभ्य. ५ । वा—

(८) 'आ' इति वाक्ये । सर्वपापेभ्यः ( सर्वपापेषु हिंसापापेषु हिंसकपापेषु, इभ्य स्वामी महापापरूपः ) अमः ( रोगः )

अहन् ( प्राहरत् ) [ 'माम्' इति शेषः ] [ तम् अहम् ] अचयिष्यामि ( अचिविषयोभूतं ते कारयिष्यामि ) मा शुचः ( मा किञ्चिच्छोचोः वा मा मम मनोरथं भिदः तु पादपूरणे। अर्थाः ६ यतः सर्वंपापेभ्यः ३ मा शुचः २ ततः २ + ३ = ६। वा—

(९) सर्वपापेषु इभ्यः ( मदोयो महाघोष. ) त्वा अहन् ( त्वाम् अजयत् [ तम् ] मोचयिष्यामि ( त्वद्वारा प्रसभं तन्नाश कारयिष्यामि ) मा शुचः। अर्थाः पूर्ववत् ६। अथवा—

(१०) 'श्रा' इति वाक्ये। सर्वपा ( सर्वरचकेण भवता ) अपेभ्यः ( अपगता इभ्याः स्वामिनो यस्मात् तादृगनाथोऽहं तु ) अमोचयिषि ( अवश्यं मोचयिष्ये ) शुचः ( विचारं कृत्वा ) मा आमि ( न आगन्तव्यम् ) [ आङ्पूर्वकादमतेर्भावकर्मणोर्लुङ् ] किन्तु सद्य एवागन्तव्यम्। सङ्कलिता अर्थाः उत्तरार्द्धस्य १ + ३ + ६ + २० । १५ + ५ + ६ + ६ + १ = ६० षष्टिः। ते पूर्वार्द्धोक्त-चत्वारिंशदुत्तरशतद्वयमितार्थेषु प्रत्येकं कार्याः, ततः २४० + ६० = १४४०० गणेशप्रार्थनापक्षेऽर्थाः सिद्धाः।

कुमारप्रार्थनापक्षे तु तृतीयांशहीनाः ९६०० यतो 'मा' इत्यस्य 'मम माता स्वपत्न्या सह' एषोऽर्थो न युज्यते तस्य कुमारत्वात्॥

---

## वसन्तः

[ निबन्धकः—श्रीदशरथशास्त्री विद्याविनोदसिद्धान्तवागीशः ]

प्रसरिते रवेरुस्रजालकैरनतितापकैः प्राणिनामिह।
अवयवानहो फुल्लयन्नहो: सुरभि(१)बालकः सोऽयमागतः॥१॥
ननु शनैः शनैरंशुजालकैर्मनुजवासरान् वर्धयन् खलु।
मृदुलघर्मकृन्नाति वत्सलनयविचक्षणो राजबालवत्॥२॥

---

(१) 'वसन्त'।

बहुलकोमलैरङ्गुलीकरैरधिकचालितैः सौख्यदैस्ततैः ।
जगति जङ्गमान् स्थावरांस्तना(२)श्चटति बालवद् धामयन् रवि.॥ ·॥
हृदयहारिभिः स्वैरकम्पनैः(३) सुरभि(४)मादधन्मन्दशीतलः ।
क्वणितमेखलैर्जानुरिङ्गणैस्खलति कम्पनो(५) बालको यथा ॥४॥
प्रचुरपेशलैः(६) कोमलामलैर्हरितशोणकैश्चिक्कणैर्दलैः ।
अभिनवोदितै रोमहर्षणं दधति कानने पादपा ननु ॥५॥
यवकधूमकाद्रूपविम्बटे'(७) परिणतैरिय छादिता धरा
हरिणवाससा वासिता प्रसूरिव वसन्तकं पाति बालवत् ॥६॥
परभृताभँकान् आकन्दतः पृथगयन् बलात् क्रीडनैः पुनः ।
सुभगवाशितं शिक्षयश्च तान् शिशुवसन्तको भाति कैलिकृत् ॥७॥
नवनवोदितैः पेलवैर्दलैर्मसृणशोणितैः कामपि श्रियम् ।
वकुलवञ्जुलश्रीफलादयोऽवनिरुहा भुवः पोषयन्ति च ॥८॥
मृदुलकम्पना(८)कम्पिताङ्गलीरुचिरकोरकैराह्वयन्निव ।
मधुलिहः पिकान् कानने शुकान् परभृत(९)प्रियो राजतेतराम्॥९॥
सरसि पङ्कजे' कानने द्रुमे' सस्तमकोरकैः कोकिलागमे· ।
मधुकरोद्गमैः कीरयानकैः(१०) सुरभि(११)रेषको ह्लादयत्यलम्॥१०॥
सुरभिसम्पदासुखतिङ्गता जगति वीक्ष्य के कामिनो न हि ।
चरणपा(१२) लतासङ्गता वने जहति नो प्रिया पक्षिणो जनाः ॥११॥

---

(२) जीवान् । (३) चलनैः ।

(४) गन्धम् । (५) वायु । (६) चारुभि' ।

(७) यवधूमगोधूमसर्षपैर्धान्यविशेषश्चले 'गोधूमो बहुदुग्ध स्यादरूप.' इति निघण्टु ।

(८) मन्दवायुना आ ईषच्चलिताङ्गुलय इव मनोहरकलिकाभिः ।

(९) आम्र । (१०) शुकप्रयाणै ।

(११) वसन्त. । (१२) पादपा ।

दलनिरन्तरान्मञ्जरीधरान् हरितरोहितान् कोकिलप्रियान्(१३)।
विहितकौतुकान् कानने वरा(१४)निव विलोक्य नो यान्ति यान्त्रिणः
॥१२॥
निविडपर्णकैः सान्द्रनीलकैर्गमितशोककै(१५)र्वञ्जुलैर्द्रुमैः।
सरसिजानना त्यागिना नृणा बहिरिती(१६)षणा रोधितापरा ॥१३॥
कुसुमसौरभे निष्कुटे वने विहरतानया रामया सह।
अहित नो गृह मन्मथा(१७)धिपो दिशति चारुता श्रेयसे च नः ॥१४॥
सुरभिनायका(१८)देशतत्परा नवतरच्छदच्छायिकाधरा।
विपिनकाश्यपी(१९) श्रीकरा वरा नृपजना इवाऽऽभान्ति पादपाः ॥१५॥
सरसिजाकरे(२०)भूरुहाम्बरे(२१)र्युवतिनागरह्लादपामरे।
पशुविहङ्गमैः पुष्पकालतो(२२) जगति विक्रिया कापि धार्यते ॥१६॥
सुरभिसन्ततिमप्रेक्ष्य सूज्ज्वलैस्ततकरैर्नवा यौवनङ्गताम्।
प्रियतमान् धरा कामिनीमिव श्लिषति (२३)वाशमा(२४)मन्दता-
न्दधत् ॥१७॥
अनुदिनं क्षमाम्प्रेयसीसमां सहचरीवरां शर्वरीमिह(२५)।
ननु विलोक्य का धूसरद्युतिन्दधति यामिनी(२६)नायको बुधः ॥१८॥

---

(१३) आम्रान्। (१४) वैवाहिकान्।

(१५) अशोकैः वृक्षविशेषैर्वा द्रुमैरिति परेणास्य सम्बन्धः

(१६) इतिरिति गत्यर्थं, तेन बहिर्जिगमिषा।

(१७) कामो राजा यस्य स वसन्त इत्यर्थः।

(१८) वसन्तनामा चासौ नायकस्तदाज्ञारता।

(१९) वनभूशोभाकरा। (२०) तटाकैः

(२१) पर्वतैः। (२२) वसन्तत।

(२३) इवार्थे। (२४) सूर्यं।

(२५) वसन्ते। (२६) चन्द्र।

रुचिरमञ्जरीस्फारचामरः सुपिकवाशितैर्भृङ्गगुञ्जितैः ।
सुरभिसज्जनं सेवयन्निव परभृत(२७)प्रियो राजते वने ॥१९॥
विकसितैः सितैः पुष्पगुच्छकैर्हरितकोमलैः सद्दलैर्घनैः ।
सुपरिधानिका वासिताऽबलेव तरुणी(२८) नरान् क्षोभयत्यलीन् ॥२०
सुरभि(२९)सौरभे रोचिते सुपेरपिहितच्छदैः शोणकान्तिमान् ।
परिणयोद्यतः सद्वरो यथा स्थलसरोरुहः(३०) शोभते सुपः ॥२१॥
विकचितैः सुमै रत्नसन्निभैर्विपिन-वीथिका गौरयन्तिका ।
रसिकभृङ्गकान् मोहयन्तिका लसति माधवी(३१) माधवी-(३२) समा ॥२२॥
कुसुमदन्तुरो यूथिकाततिः सुवनवासिनी नायिकानिभा ।
सुरभिलम्पटाध्मानवाञ्मधुलिह(३३)विटा धरा(३४) हासयत्यलम् ॥२३
विकचिता क्वचिद्धेम-यूथिका शतदला(३५) क्वचिन्मालती क्वचित् ।
क्वचन चम्पको नीलचम्पको लसति फुल्लितो नायको यथा ॥२४॥
अतनुमानिनी(३६)नासिकाशुभच्छविकराख्यलङ्कार(३७)काणिवा (३८)
कुसुमकैतवाद्धारयन्निव वकुलनायको भ्राजतेतराम् ॥२५॥
अलघुपुष्पकैश्चित्रित. पर मृदुदलव्रजेच्छविकान्दधत् ।
नवतनीयसीं वल्लिका मिलल्लसति चित्रको(३९) वल्लभो हरिः ॥२६॥

---

(२७) आम्रः ।　　(२८) युवति. पक्षे सेवन्ती सुपः ।
(२९) मनोज्ञगन्धे ।　　(३०) रक्तगोलापस्य ।
(३१) वासन्ती लता ।　　(३२) लक्ष्मीसमाम् ।
(३३) भ्रमरजारा ।　　(३४) भूमि. ।
(३५) शतपत्रा गोलाप इति भाषायाम् ।
(३६) रतिनासासुन्दरशोभाकराणि ।
(३७) नासापुष्पाभिधानभूषणानि ।
(३८) दूर्वार्थे ।　　(३९) मुचुकुन्द ।

सितसुमच्छलादन्यपादपानलघुहासकङ्कुन्दवृन्दकम् ।
अभिसमीक्ष्य काप्याकुला(४०) वने किमसुना रदावोरिता मम ॥२७॥
कुसुमितं शुभं भालभूषणमिव विशेषकं(४१) प्रेक्ष्य मानिनी ।
इह कुहाङ्कितङ्केन मे कथमिति हि मोहिता तिष्ठति क्षणम् ॥२८॥
सुरभिमागतं प्रेक्ष्य सुन्दरं मधुलिहान्धरैः पीतपुष्पकैः ।
उपवनान्तरे स्वागतादरा दधति दीपना कर्णिकारकाः ॥२९॥
निशितकण्टकैः संयुताश्छदानभिसमीक्ष्य काप्येतया धृतम् ।
मदनसङ्गमाद्रोमहर्षणमिति हि केतकीमीक्षिते बलात् ॥३०॥
किमु वसन्त भोः केतकीमिषान्मदनखड्गको धार्य्यते मुधा ।
वसति सन्निधौ मानदो मम नहि वियोगिनः सन्ति सम्मुखे ॥३१॥
किमु कुचौ करावच्छिणौ पदौ मम किमाननं सेव्यतेऽमुना ।
सरसिजाकरालोकनभ्रमादचलमानसा भाति कामिनी ॥३२॥

---

# स्त्रीपुंसयोः समानाधिकारत्वम्

[ निबन्धकः—श्रीपुलिनविहारो दाशगुप्तः ]

इदानीन्तन-स्त्रीपुरुषयोरधिकारविषयकः प्रश्नस्तयोः परस्पर-सम्बन्धादिकं विचार्य्य सम्यक् मीमांसनीयो न वा, एतस्य समाधान-मतीव दुरूहम् मन्यते । बहूनां पाश्चात्यपण्डितानामतीव सूक्ष्मदर्शिना-मपि विद्यन्ते भूयांसो मत विरोधाः । वस्तुतः कुशाग्रीय-धियोऽपि विद्वांस एतयोस्तुल्याधिकारत्वं समीचीन न वा, एतद्धि विविधैर्गवेषणा-दिभिः स्थिरीकर्तुमधुनापि न शक्नुवन्ति ।

आस्ते हि पाश्चात्य-सभ्यताया एतादृक् हृदयमोहनं माधुर्य्यं

---

(४०) नायिका ।  (४१) तिलकाभिधपादपम् ।

यत् खलु निखिलार्य्यसमाजैरभिनन्दितायां भारतभूमावात्मप्रभुत्वं बाहुल्येन प्रकाशयति। अतोऽस्मिन् बहु-विदग्ध-जनभूषितेऽपि भारत-वर्षे साम्प्रतं नराणां नारीणाञ्च समानाधिकारत्वं सर्वथैव प्रचारित-मवति, अभिमन्यते तदनेकैः सुसमादरेण। स्त्री-पुंसाना परस्परं शक्ति-सामञ्जस्यं प्रकृत्या सञ्जायते, अतस्तेषामेकतोऽधिकाराधिक्यमन्यतोऽ-धिकारलघुत्वमसमीचीनमिति केषाञ्चिन्मतम्। यातु तावत्। यदि ता नार्य्यः सर्वदैव परस्पर-स्वातन्त्र्यं समानाधिकारत्वञ्चानुभवन्ति, नियतोत्फुल्ला आत्मना कल्पित-शक्ति प्राधान्यं विचिन्त्य सर्वत्र स्वैरा-चारेण वर्त्तन्ते, तर्हि किमप्यनुशासनं सामाजिकं राजकीयं वा तासां कार्य्यविधिं संनियम्य सरलपथेन तांश्चालयितुं न कदाचिदपि समर्थं स्यात्। महती सामाजिकी विशृङ्खला जायेत राजशासनञ्च बहु-विघ्नत्वं नियतं समुपलभेत।

पाश्चात्त्यव्यवहारशास्त्रानुसारेण तद्देशीय-स्त्री-पुरुषा एकविंशति-वर्षं वयो यावत् पूर्णाधिकार न लभन्ते। तत ऊर्द्धं सर्वे पुरुषा योषितश्च सर्वविषये पूर्णाधिकारं प्राप्नुवन्ति। प्राप्तवयस्कान् जनान् प्रति तेषामभिभावकानामपि नास्ति किञ्चित् प्रभुत्वम्। किन्त्वेतावत्परि-पक्ववयसि तेषां स्वभावा दुर्वृत्त-बाल-वृन्दानां साहचर्येण संसर्गदोषाच्च एतादृक् कलुषमावहन्ति यत्, प्राप्तवयस्का अपि ते स्वातन्त्र्येण जीवन-यात्रां साधु निर्वाहयितुं नार्हन्ति, बहुक्लेशभागिनः सदैव पापानुरक्ता विलास-सलिलमवगाह्य दुर्वहजीवनं यापयन्ति।

एतत् प्रायश एव दृश्यते। अधुना पाश्चात्त्यजगति युरोपामेरि-कादौ समाजबन्धन यादृक् शिथिलतामवाप्य दशाविपर्य्ययमुपैति, तस्यैव सम्यक् पर्य्यालोचनया सुधीभिर्ज्ञायते यत्, सुकुमारतरुणमतिभ्यः पुयोषिद्भ्यः सर्वत्र स्वातन्त्र्यप्रदानं कीदृक् विषमयं फलमावहति। पाश्चात्त्यसंसत्सु रूप-मोहादिविलसिता नवयौवनाढ्यास्तरुण्यः स्वैरा चारेण यथा तथा भ्रमन्ति, यदृच्छाक्रमेणात्मनः सन्तोषयन्ति, प्रवृत्ति-

मार्गमवलम्ब्य मनोभिलाषान् बाहुल्येन पूरयन्ति, प्रायशो विवेक-रहिता भर्त्तृनप्यवमन्यन्ते, पित्रादीनामधिकारसुल्लङ्घयन्ति, किं बहुना यत्र तत्र विविधमगणनीयमतिगर्हितम् पैशाचिक-व्यापारमभिनयन्तीति जनापवाद' श्रूयते। अलं दर्शनेन, तासामेतादृशं भाववैपरीत्य' श्रुत्वापि भारतीयानामस्माकं नासिका स्वत एव कुञ्चिता भवति, हृदयानि वेपन्ते, रोमहर्षश्च संजायते शरीरेषु।

वर्त्तमानसमये पाश्चात्य-जगतां दृष्टान्तावली भारतीय-जनमानसेषु नानानुकरणप्रवृत्तिं जनयति। भारतवासिनः पाश्चात्यमोहमुग्धाः सदैव तदनुकरणशीला निजस्व वञ्चिताः कलापि-पुच्छ-मण्डित-वायसवत् भ्रमन्ति। भारतीय-रमणीमण्डलं पाश्चात्यालोकमोहितं तद्भावानुप्राणितमार्य्यगणनिसेविता सनातनपद्धतिं विहाय पाश्चात्यशिक्षादिभिरात्मानं विभूषयितु' यतते। वर्त्तते बहूना राजनीतिविदामस्मद्देशीयानां पाश्चात्यज्ञानालोकोद्भासितमतीना तथाकथित भारतनेतृणामेषा प्रचेष्टा,—ययान्तःपुरावरोधः समूलं विनश्यत्यसूर्य्यम्पश्यानामप्यार्य्यनारीणाम्। ताः खलु पाश्चात्यवेशभूषिताः पादुकाशोभित चरणा राजपथेन यथातथा स्वेच्छया हेलया च पद्भ्या भ्रमन्तु, राजशिक्षाधिगताः स्वोपार्जित-वित्तेन स्वेच्छाहारविहारादिकं सुनिर्वाह्य यथानियमं रङ्गालय-छायाचित्रागारादिकञ्च गत्वा लीलयात्मनो विनोदयन्तु, किमधिकम्, ताः सर्वथा पुरुषाधिकारान् समुपलभ्य स्वयमेव सर्वं साधयन्तु। अप्येषा रीतिः सुधीभिरभिमता, ननु सभ्यजनानुमोदिता वा—किं नूनं न विचित्रेयं कालस्य गतिः। अतः परं वा किं भविष्यति।

अस्मिन्नार्य्यनिषेविते सुरचिते देवादिभिर्वन्दिते
ऋत्विग्भिः समलङ्कृते प्रतिदिनं वेदादिगानान्विते।
हन्त प्रीतिनिसूदनी सुरमते यादृग् दशा भारते
तद्दृश्यं करुणं भृशं नयनयोः क्लेशान् दिशत्यञ्जसा ॥

अत्रासन् सीता-सावित्री चिन्ताऽरुन्धती-गार्गी मैत्रेयी दमयन्ती-लीलावत्याद्याः प्रातःस्मरणीयाः पूतस्वभावा वरनार्य्यः, यासां सुचरितावली भारतयोषितामादर्शीभूताधुनापि सर्वत्रैव विराजते। यातु तावत्, न श्रूयते स्त्रीणां स्वाधीनाचारः कदाप्यस्यां भारतभुवि।

"पिता रक्षति कौमारे भर्त्ता रक्षति यौवने।
सुतो रक्षति वार्द्धक्ये न स्त्री स्वातन्त्र्यमर्हति॥"

इत्यादिवचनात् स्पष्टत प्रतीयते यदार्य्यरमण्यः स्वैराचारं कदाचिदपि नार्हन्ति। स्वैराचारो हि समानाधिकारत्वस्यावश्यम्भावि फलम्। भारतस्त्रियो नारीशिक्षां बाहुल्येन लभन्तां, स्त्रियः खलु सदैव यत्नेन शिक्षणीया।

"कन्याप्येव पालनीया शिक्षणीयातियत्नतः॥"

इत्यादिवचनात् नास्त्यत्रापि कश्चिन्मतविरोधः। स्त्रीशिक्षा सर्ववादिसम्मता समीचीना च। किन्तु यादृशीं शिक्षां लब्ध्वा विश्वविद्यालयोपाधिभूषिताभिस्ताभिर्नारीजनोचितानि चरित्र-रत्नानि हेलया गच्छितानि, सा शिक्षा न समीचीना मन्यते।

खेद्यिते भारतस्त्रीणामधुना दशावैपरीत्यं सञ्जातम्। प्राचीनार्य्ययोषितो यादृशीमवस्थामधितिष्ठन्त्यः सनातनीमार्य्यरीतिमवलम्ब्य प्रभूतसुखादिकं लेभिरे, अधुनातनी भारतरमणी तत् स्वप्नेऽपि न पश्यति, का कथा उपभोगस्य। सम्प्रति आर्य्यनारीणां नितरामधःपतनं सम्भवति। अतः खलु पाश्चात्यदेशेषु तासामेतावान् परीवादः श्रूयते, अधुना भारतनार्य्यः पाश्चात्यादर्शमुग्धास्तद्भावानुकारिण्यः प्रतीच्यसुन्दरीणां रीतिमाचरन्ति, तस्मात् पुरुषैः सह समानाधिकारान् लब्धुं प्रचेष्टन्ते। नार्य्यः खलु प्रकृत्या पुरुषैः सह बहु वैसादृश्यं धारयन्ति। शारीरिकं मानसञ्च बहु पार्थक्यं विन्दन्ति। एका प्रकृतिकोमला अपरश्च स्वभाव-कठोरः सञ्जायते। तत् यदेव प्रकृति विरोधि तन्निराकर्त्तुं कः समर्थः। आ सृष्टेरेतदपि दृश्यते यत् पुरुषैः सह

रमण्यः केनाप्युपायेन समानाधिकारं नार्हन्ति। एषा हि भारतीयानां बहुकालप्रचलिता वार्त्ता। भिन्नदेशीयाना वृत्तं स्वतन्त्रमेव। अपरदेशीयानां भारतीयानाञ्च दूरमत्यन्तमन्तरम्। यदन्यदेशे समीचीनं सम्भवति, तदिह भारतेऽपि न समीचीनं स्यात्। भारतस्य रीतिर्देशान्तरस्य रीत्यनुरूपा न कदाचिदपि स्यात्। अत्र चपलता हि स्त्रीचरित्रस्य दूषणं, का कथा स्वाधीनतायाः। यदास्मिन्नार्य्यदेशे आर्य्याणां स्वाधीनतासूर्य्यः समुदित आसीत्तदाप्यत्रदेशीया रमण्यः पुरुषैः सह समानाधिकारं न प्रापुः। कुसुम-सुकुमार्य्यस्तरुण्यः स्वेच्छाहारविहारादिना स्वतन्त्र-जीवनयापनेन च स्त्रीत्वं विहायाङ्गतं पौरुषभावमावहन्ति, नैष भावः सर्वेभ्यो रोचते। यद्यस्माकं नारीपटल पुरुषाधिकारं लब्ध्वा सर्वत्र पुंवदाचरेयुः, तर्हि सर्वमेव विसदृशमवलोक्येत। रूपतो नारी, कार्य्यतः पुरुषः इत्येतदपि प्रकृतिविरुद्धमनुभाति। भारतनारीणामीदृश स्वभाव-वैपरीत्यं भारतस्य श्रेयसे न प्रकल्पते। केवला नैतिक चरित्रावनतिर्हि आर्य्य-योषिता हीनावस्थायाः कारणम्। अतो यया शिक्षया तासा चरित्रोन्नतिर्विधीयते सा शिक्षा ताभ्यः सर्वथा प्रदातव्या। समानाधिकारप्रदानेन तासां समुन्नतिः सुदूरपराहतेति बहुभिर्मन्यते।

सम्प्रति भारतयुवतयः शिल्परचनादि-शिक्षालाभेन विविधकलाविद्यासु पारदर्शिन्यः सञ्जाताः। नानाप्रदर्शनीषु तासां शिल्पकलामाधुरी दर्शकचेतांसि भूयिष्ठमनुरञ्जयति। एताः खलु गृहस्थाश्रमाश्रिता वर्णाश्रमधर्म्मानुसारिण्यः स्वामिपुत्रादिसमन्विताः समाजानुशासनपालिन्यः सदैव ससुखमभिरमन्ते। पुरातनपद्धतिं समुल्लङ्घ्य चेत्ताः सर्वान् पुरुषाधिकारान् प्राप्नु व्याकुलीभवन्ति, तदा तासां भवनानि महदुःखान्यसहनीयानि सञ्जायन्ते। भर्त्तात्मजपरिजनान्वितानां तासामार्य्यस्त्रीणां पुरुषाधिकारप्राप्तिकामना श्मशानसुमनसां विष्णुशीर्षारोहणमिव श्वपचानाममरत्वलाभ इव कीटानां सुधर्म्म-

सभापतित्वप्राप्तिरिव वामनस्य सुधांशुधारणप्रचेष्टेव मूर्खाणां वेदाध्ययनशक्तिरिव, विसदृशो प्रतिभाति ।

अतोऽशेषमङ्गलालयो भगवान् कमलापतिस्तासां भारत-योषितामेतद्दौर्मनस्यमुपशमय्य सुमतिप्रदानेन ता जगद्वरेण्या विदधात्वित्यलमतिविस्तरेण ।

---

## हर्षचरितम् *

[ निबन्धकः—श्रीविष्णुपदभट्टाचार्य्यः (परिषच्छात्रः) ]

वाणादयः कविवराः परिपूज्य यस्याः
पादं सुधांशुनिकरैः खचितं मनोज्ञम् ।
ज्ञानश्रियं सुविमलां दधते स्म धीरा
वाणीं विनम्रशिरसा सततं नमामि ॥

माननीयाः सभापतिमहाभागाः, अन्ये च सम्मानास्पदभूताः सभ्याः ! समादिष्टोऽस्मि संस्कृतसाहित्यपरिषत्सम्पादकैस्तत्रभवद्भिः श्रीमदमरेश्वरठाकुरवेदान्तशास्त्रिभिः एम् ए पि. एइच् डि महोदयैः "हर्षचरितम्" इति-शीर्षकनिबन्धरचनाय । धीराः ! नास्मि संस्कृतसाहित्ये निपुणः, न वा पुनर्बहुविषयग्राहिणी मे मतिरिति ज्ञात्वा निबन्धविषयगौरवं चिन्तयन्नेव पर्य्याकुलोऽस्मि, तथापि अस्यां संसदि यत्किञ्चिदुच्यते तत् केवलं गुरुजनवचनलङ्घनशङ्कया। अतो गुणदोषप्रविभागविद्भिर्भवद्भिर्भ्रमादिकं मे क्षन्तव्यमिति भवतां सविधे प्रार्थये सविनयम् ।

नूनं हर्षचरितसमालोचनतः प्राक् तत्पुस्तकप्रणेतृपरिचयः प्रदेयः, अतः प्रथमतो मया—कस्तावत् हर्षचरितप्रणेता, को वा देशस्तेना-

* संस्कृत-साहित्य परिषदो मासिकाधिवेशने पठितोऽयं निबन्ध. ।

लङ्कृतः, को वा पुनस्तस्य कवेर्वर्त्तनकाल इत्यादीनां प्रश्नानां समाधानं क्रियते।

अतिहि नाम क्षोणं खलु अस्माकं संस्कृतलेखकानां विशेषतः कवीनाम् आत्मजीवनवृत्तज्ञानम्। बहवस्तावत्कवयो नाममात्रेण केवलमस्माभिर्विज्ञायन्ते। सन्ति पुनरत्रापरे केचित्,—यथा कालिदासादयः,—येषां नामधेयानि विचित्रकथासंश्लिष्टानि, अतस्तत्रापि प्रकृतानुसरणं सुदुष्करम्। स्वकीयकृतिषु आत्मजीवनविवरणप्रकाशनेच्छा केवलं स्वल्पसंख्यकानां सहृदयानां संस्कृतग्रन्थकृतां चेतसि सञ्जाता। तेषामग्रणीस्तु प्रथितयशाः कविर्बाणभट्टो नाम, यो हि खलु कादम्बरी-हर्षचरितप्रभृतीनां काव्यानां प्रणेता। पार्वतीपरिणयाभिधेये रूपके अयं तावत् चतुर्थश्लोकः—

"अस्ति कविसार्वभौमो वत्सान्वयजलधिसम्भवो बाणः।
नृत्यति यद्रसनायां वेधोमुखलासिका वाणी॥"

करुणरसनिस्यन्दिन्या कादम्बरीकथाया स्ववंशसंकीर्त्तनावसरे श्रीमद्बाणभट्टैर्यन्निगदितं तदप्युल्लेखनीयमिति विभाव्याधो लिख्यते।

"बभूव वात्स्यायनवंशसम्भवो द्विजो जगद्गीतगुणोऽग्रणीः सताम्।
अनेकगुप्ताचिर्तपादपङ्कजः कुबेरनामांश इव स्वयंभुवः॥
हिरण्यगर्भो भुवनाण्डकादिव क्षपाकरः क्षीरमहार्णवादिव।
अभूत् सुपर्णो विनतोदरादिव द्विजन्मनामर्थपतिः पतिस्ततः॥
स चित्रभानुं तनयं महात्मना सुतोत्तमानां श्रुतिशास्त्रशालिनाम्।
अवाप मध्ये स्फटिकोपलोपमं क्रमेण कैलासमिव क्षमाभृताम्॥
सरस्वतीपाणिसरोजसम्पुट-प्रसुप्तहंसीमसृणीकृताक्षरः।
यशोऽंशुशुक्लीकृतसप्तविष्टपात् ततः सुतो बाण इति व्यजायत॥"

हर्षचरिते तावदिदं दृश्यते—"यस्मिन्नेवावसरे सरस्वत्यसूततनयं तस्मिन्नेवाक्षमाला सुतं प्रसूतवती। एकस्तयोः सारस्वताख्य एवाभवत्, द्वितीयोऽपि वत्सनामाभवत्। यस्मादजायन्त वात्स्यायना नाम

गृहमुनयः असाधारणा द्विजातयः। विकाश्मिनि वात्स्यायनकुले क्रमेण कुवेरनामा द्विजो जन्म लेभे। तस्याऽभवन् अच्युत ईशानो हरः पाशुपतश्चेति चत्वारस्तनया, तत्र पाशुपतस्यैक एवाऽभवत् अर्थपतिरिति सूनुः। सोऽजनयत् भृगु हंसं शुचिं कविं महीदत्त धर्मं जातवेदस चित्रभानुं त्र्यक्षम् अहिदत्तम् विश्वरूपञ्च पुत्रान्, अलभत चित्रभानुस्तेषा मध्ये राजदेव्यभिधानाया ब्राह्मण्या वाणमात्मजम्।

सत्यं वाणेन स्वकृतिषु आत्मपरिचयः सम्यक् दत्त', परं तत्र किञ्चिद् वैषम्यमस्माभिरुपलभ्यते। कुवेरो वाणभट्टस्यासीत् प्रपितामह इति तु कादम्बरीश्लोकैर्ज्ञाप्यते, पर तस्य प्रपितामहः कुवेरपुत्र' पाशुपतनामासीत्। तत्र हर्षचरित प्रमाणम्। अत्र किं तावद् वैषम्यकारणम्? भद्राः। नेह कारणनिर्देश. सुकरः। मुद्रणावसरे यत्नेस्वाश्रयणं जात, तत्र नासीत् पाशुपतनामोल्लेख इति तु केवलं सविकल्प वक्तुं शक्यतेऽस्माभि।

वात्स्यायनवंशोया हिरण्यवाहुतटे (सम्प्रति शोण इत्यभिहितस्य नदस्य तटे) प्रीतिकूटे (ब्राह्मणाधिवास इत्यपि तस्य स्थानस्य अपराभिधा) न्यवसन्। शैशवे वयसि वर्त्तमानो वाण प्रतिकूलदैवतया जनकजननीहीनो जातः। ततः समानवयोभिर्बहुभिर्बन्धुभिर्युक्तो वाणो बभ्राम बहुषु देशेषु स्वभावशोभासन्दर्शनेच्छया। भ्रमणेन तस्य ज्ञानं परां स्फूर्त्तिम् अवाप। ततो गुणज्ञेन राजकुलमणिना हर्षवर्द्धनेन सम्मानितोऽनुगृहीतश्च वाणो विरचितवान् 'हर्षचरितम्' इत्याख्यामाख्यायिकाम्। कवेः शेषजीवनवृत्तान्तोऽस्माभिर्न लभ्यते। वाणनन्दनो (Dr Buhler) पण्डितप्रवरवुलारमहोदयमते भूषणवाणनामासीत्। केषुचित् कादम्बरीलेखेषु पुलिन. पुलिन्दो वेति तन्नाम आसीद् इति दृश्यते। धनपालस्य तिलकमञ्जरीभूमिकायाम् अयं तु षड्विंशः श्लोकः।

"केवलोऽपि स्फुरन् बाणः करोति विमदान् कवीन्।
किं पुनः क्लृप्तसन्धान-पुलिन्दकृतसन्निधिः॥"

स बाणपुत्रो व्यरचयत् कादम्बर्या उत्तरभागम्, यत्र श्लोकोऽयं दृश्यते।

"याते दिवं पितरि तद्वचसैव सार्द्धं
विच्छेदमाप भुवि यस्तु कथाप्रबन्धः।
दुःखं सतां तदसमाप्तिकृतं विलोक्य
प्रारब्ध एव स मया न कवित्वदर्पात्॥"

धीराः सम्प्रति बाणसमय निर्णयाय किञ्चिद्वक्तुकामोऽस्मि। प्रख्यातानां चीनपरिव्राजकानां तत्रभवतां ह्युयेन् सां (Hiouen Thsang) महोदयानां भ्रमणवृत्तान्तात् तथा बाणवचनात् विज्ञायतेऽस्माभिः, सम्राजा श्रीहर्षेणानुगृहीतस्तावदासीत् कविर्बाणभट्ट इति। षडधिकषट्शततम-(६०६) खृष्टाब्दात् समारभ्याष्टचत्वारिंशदधिकषट्शततम(५८४) खृष्टाब्दं यावत् श्रीहर्षराज्यकाल इति, चीनपरिव्राजकागमनम् एकोनत्रिंशदधिकषट्शततम (६२९) खृष्टाब्दे जातमिति च प्रत्नतात्त्विकप्रसिद्धम्। अतः खृष्टीयषष्ठशताब्द्याः शेषभागात् खृष्टीयसप्तमशताब्द्याः प्रथमार्द्धं यावत् समयो बाणवर्त्तनकालः। स्वोदितसमर्थनायाधः प्रमाणानि दीयन्ते।

(१) प्रायः पञ्चाशदुत्तरैकादशशततम-खृष्टाब्द-(११५०) लिखिते रुय्यककृतालङ्कार-सर्वस्वे बाणस्य हर्षचरितस्योल्लेखो विद्यते।

(२) खृष्टीयैकादशशताब्दीशेषार्थे लब्ध-प्रतिष्ठस्य 'कविकण्ठाभरण' 'सुवृत्ततिलका'दिप्रणेतुः क्षेमेन्द्रस्य कृतिषु बाणनाम दरीदृश्यते।

(३) रुद्रटकृतकाव्यालङ्कारटीकाकारो निमिसाधुः कथाख्यायिकोदाहरणप्रदर्शनप्रसङ्गेन हर्षचरित-कादम्बर्योर्नामोल्लिलेख। स च महात्मा एकोनसप्तत्यधिकैकसहस्रतमखृष्टाब्दे (१०६९) तट्टीका प्रणीतवानित्यस्माभिस्तदीयटीकावसानश्लोकाद् बुध्यते।

(४) खृष्टीयैकादशशताब्दीशेषभागे गृहीतराज्यभारस्य भोजराजस्य सरस्वतीकण्ठाभरणे तथा मुञ्जानुगृहीत-धनञ्जयकवेर्दशरूपके वाणभट्टोल्लेखो विद्यते।

(५) ध्वन्यालोकरचयितानन्दवर्द्धनः काश्मीरनरपत्यवन्तिवर्म्मणः समसामयिकः। पञ्चपञ्चाशदुत्तराष्टशततमखृष्टाब्दात् त्र्यशीत्यधिकाष्टशततम-खृष्टाब्दं यावत् कालस्तु (८५५—८८३) तस्य समयः। तेनापि वाणस्योल्लेख कृतः।

(६) खृष्टीय-सप्तमशताब्द्युत्तरार्धे समजनि जातुकर्णीनन्दनो भवभूतिसञ्ज्ञको महाकविः। तस्य च विदुष उत्तररामचरितात्—"इयं गेहे लक्ष्मी"रित्यादिश्लोक उद्धृत्य वामनेन स्वकीय-काव्यालङ्कारसूत्रवृत्त्या दत्तः। वामनस्त्वासीत् काश्मीरभूपतेर्जयापीडस्य मन्त्री। स च पञ्चचत्वारिंशदुत्तर-सप्तशततम (७४५) खृष्टाब्दाद् आरभ्य षट्सप्तत्यधिक सप्तशततम-खृष्टाब्दं यावत् (७७६) शशास वसुधाम्। अतोऽष्टमशताब्द्याम् आविरभूद् वामन इत्यस्माभिः स्वीकरणीयम्।

स्ववचनसमर्थनाय एव क्रमेण बहूनि प्रमाणानि अस्माभिर्दातुं शक्यन्ते। पर एतावदेव मन्ये पर्य्याप्तं भविष्यति विबुधानां चित्तविनोदनायेति कृत्वास्माद्विरम्यते।

( क्रमशः )

## छत्रतत्त्वम्

[ निबन्धकः—कविराज-श्रीवसन्तकुमारविद्यारत्नः ]

कस्मात् कालाद् भारतवर्षे छत्रव्यवहाररीतिः प्रतिष्ठामलभत, तत्र किमपि प्रमाणं न प्राप्यते। पौराणिकाख्यायिकानुसारतः छत्रं किल सूर्य्यलोकात् मर्त्यलोके सम्प्रवर्त्तितमिति श्रूयते।

छत्रस्योत्पत्तिर्यथा—एकदा ज्येष्ठमासे जमदग्निमुनिर्धनुषि वाणान् सन्धाय सन्धाय प्रचिक्षेप, तत्पत्नी रेणुका तान् वाणानानीयानीय तस्मै प्रादात्। सा मध्याह्नकाले रौद्रेण पीडिता वृक्षच्छायामवलम्ब्य किञ्चित्कालं स्थित्वा स्थित्वा तानानिनाय। ऋषिस्तदा क्रुद्धस्तामाह, "किञ्चिरेणागतासि ?" सा प्राह सूर्य्यतेजसा शिरः पादौ च सन्तप्तौ, तेन वृक्षच्छायामाश्रित्य स्थिता, तस्मात् चिरायैतत् कृतम्। तच्छ्रुत्वा मुनिराह, अद्य सूर्य्यं मन्त्राग्नितेजसा निपातयिष्यामि, इत्युक्त्वा धनुषि वाणान् सन्धाय सूर्य्याभिमुखोऽतिष्ठत्, सूर्य्यस्तु दृष्ट्वा भीतो द्विज-रूपेणागत्याह "सूर्य्यादन्नादि भवति, तेनान्नेन भवद्भिः कर्म्माणि क्रियन्ते, कथमेनं हनिष्यसि ? एवं मा कार्षीरिति, तथापि मुनिः शमं न न जगाम। अथ सूर्य्यः शिरस्त्राणं छत्रं निर्म्माय तस्मै दत्त्वा "अद्य-प्रभृति एतत् लोके प्रचरिष्यति, व्रतादिषु चास्य दानं महाफलम्" इत्युक्त्वा गत। छत्रस्य दानफलमुक्तं यथा—

> छत्रं हि भरतश्रेष्ठ यः प्रदद्याद्द्विजातये।
> शुभ्रं शतशलाकं वै स प्रेत्य सुखमेधते॥
> स शक्रलोके वसति पूज्यमानो द्विजातिभिः।
> अप्सरोभिश्च सततं देवैश्च भरतर्षभ॥

इति महाभारते दानधर्म्मपर्व्वणि।

वर्षातपादिकं वारयितुं छत्रव्यवहाररीतिः प्रादुरासीत्। अधुना तु छत्रं सभ्यतायास्तथा शिल्पोत्कर्षस्य शीर्षस्थानमधिकुरुते। छत्र-व्यवहाररीतिः पूर्वकालेऽपि वर्त्तमाना आसीदिति प्रमाणं बहुषु काव्य-व्याकरणपुराणादिशास्त्रेषु प्राप्यते। तद् यथा—

'शशिप्रभ छत्रमुभे च चामरे'—इति रघौ ३।१६

'नलः सितच्छत्रितकीर्त्तिमण्डलः'—इति नैषधीये

'विकसत्कलाय कुसुमासितद्युतिरलघूडुपाण्डु जगतामधीशितुः।
यमुनाह्रदोपरिग-हंसमण्डल द्युतिजिष्णु जिष्णुरभृतोष्णवारणम्'॥

इति शिशुपालवधे १३।२१

'अचलरिचकचक्रीकृतवीरोदावर्त्तपाण्डुरेण दशवदनबाहुदण्डाव स्थितकैलासकान्तिना मुक्ताफलजालिना शतशलाकेन आतपत्रेण निवार्य्यमानातपो निर्गन्तुमारेभे'। इति कादम्बर्य्याम्—

"इत्थम्भूते च व्यतिकरे छत्रधारिणी मामवोचत्।" इति कादम्बर्य्यां "छत्रधारिणी" इति वचनेनावगम्यते खलु यत रमणीना छत्रव्यवहार-रीतिरासीत्। अभिजातरमणीभि छत्रधारणार्थं स्त्रियो व्यवस्थापिताः स्म। तास्त्रियः "छत्रधारिणी" इत्याख्यया अभिहिताः।

'इस्मन्त्रन्क्विषु च'—पाणिनौ ६।४।१७

'द्वन्द्वाच्चुदषहान्तात् समाहारे'—काशिकायाम् ५।४।१०६

"न ते शतशलाकेन जलफेननिभेन च।
आवृतं वदनं वल्गु च्छत्रेणाभिविराजते"॥ इति रा० अयो० २०

"वाजपेयसमुत्थानि छत्राण्येतानि पश्य न।
पृष्ठतोऽनुप्रयातानि मेघानिव जलात्यये"॥
एभिश्छाया करिष्यामः स्वैश्छत्रैर्वाजपेयकैः॥" इति रा०अ०४२।४२।२३

"छत्रं ते वारुणं गेहे काञ्चनस्रावि तिष्ठति।" इति मार्कण्डेयपुराणे

काञ्चनस्रावीति विशेषणेन शिल्पोत्कर्षः सूचितः। तच्छत्रदर्शनेन एवं प्रतीयते यत् स्वर्णद्रवो जलविन्दुरूपेण छत्रात् पततीति।

'आवरणार्थं तच्छत्रं ब्राह्मणाय प्रदीयते'। इति

शुद्धितत्त्वे वराहपुराणम्

एवेन स्वर्गतानां प्रीतये तथा व्रतादिषु कर्म्मसु छत्रदानरीति-रासीदिति ज्ञायते।

'भूम्यासनं जलं चान्न वस्त्रं ताम्बूलमेव च।

गन्धश्छत्रं पादुका च शय्या शक्ती च द्वादश'॥ इति

मतान्तरे—'भूमिरन्नं जलं हेम रजत वस्त्रमेव च।

गन्धो माल्यं फलं छत्रं ताम्बूलमासनं तथा॥

द्वादशैतानि दानानि कर्म्माङ्गाणि विदो विदुः'। इति

व्रतप्रतिष्ठापद्धतौ।

'कल्पवृक्षे गिरेः पार्श्वे छत्रं तन्मण्डलोपरि।' इति

सिद्धान्तसंग्रहोक्तश्रीविद्याध्याने।

'चामरैर्वीज्यमानाश्च श्वेतच्छत्रोपशोभिताम्'। इति

मेरुतन्त्रोक्तगङ्गाध्याने।

'ॐ छत्रं सुनिर्म्मितं देवि वृष्टिरौद्रनिवारकम्।

मया निवेदितं भक्त्या छत्रञ्च प्रतिगृह्यताम्'॥ इति

दुर्गापूजायां देव्यै छत्रदानमन्त्रः।

शालग्रामचक्रशोभित-स्वर्णरजतादिनिर्म्मितं छत्रम् अधुनापि प्रमाणं धत्ते।

'रथाश्वं हस्तिनं छत्रं धनं धान्यं पशून् स्त्रियः।

सर्वद्रव्याणि कुप्यञ्च नो मज्जयति तस्य तत्'॥ इति मनौ ७।९६।

'अभ्यङ्गमञ्जनञ्चाक्ष्णोरुपानच्छत्रधारणम्।

कामं क्रोधञ्च लोभञ्च नर्त्तनं गीतवादनम्'॥ इति मनौ २।१७८।

'ईतेर्विधमनं वल्य गुप्त्यावरणशङ्करम्।

घर्म्मानिलरजोऽम्बुघ्नं छत्रधारणमुच्यते'॥ इति

चरकसूत्रे ५अः ३७।

'अधिगततन्त्रेणोपासिततन्त्रार्थेन दृष्टकर्म्मणा कृतयोग्येन शास्त्रं निगदता राजानुज्ञातेन नीचनखरोम्णा शुचिना शुक्लवस्त्रपरिहितेन छत्रवता दण्डहस्तेन सोपानत्केनानुद्धतवेशेन सुमनसा कल्याणाभिव्याहारेण कुहकेन बन्धुभूतेन भूताना सुसहायवता वैद्येन विशिखानुप्रवेष्टव्या'। इति सुश्रुतसूत्रे १०अः २श्लो'।

'छत्र त्वातपत्रं राज्ञस्तु नृपलक्ष्म तत्।' इति अमरकोषे।

१। छायामित्रं २। पाटोटजम्।

'छत्रे कनकदण्डे तु रागशृङ्गमुदाहृतम्।
नृपलक्ष्म भवेत् तत् तु यच्छत्रं पृथिवीभुजाम्॥' इति शब्दरत्नावल्याम्।

१। आतपवारणम्।

'आतपत्रञ्च राज्ञस्तु नृपलक्ष्म सितन्तु तत्।
पुण्डरीकमथो भद्रासनं राजासनन्तु यत्॥' इति जटाधरः।

नृपतेरातपत्रलक्षणम्।

"निचितं तु हंसपक्षैः कृकवाकुमयूरसारसानां वा।
दौकूल्येन नवेन तु समन्ततश्छादित शुक्लम्"॥ १

हसः पक्षो तत्पक्षैस्तदङ्गरुहै रचितम्। कृकवाकु-कुक्कुट मयूर-सारसा. प्रसिद्धाः। तेषां पक्षैर्निचितम्। दौकूल्येन श्वेतपट्टविशेषेण नवेनाहतेन समन्ततः समन्ताच्छादितं शुक्ल श्वेतवर्णम्।

"मुक्ताफलैरुपचित प्रलम्बमानाविलं स्फटिकमूलम्।
षड्हस्तशुद्धहैम नवपर्वं नगैकदण्डं तु"॥ २

मुक्तामणिभिरुपचितं संयुतम्। लम्बमानाभिः मुक्तामालाभिराविलं समन्ततो युक्तम्। मूले स्फटिकोपलो यस्य, एकदण्ड षड्हस्तप्रमाणम्। श्रेष्ठसुवर्णेनाच्छादितम्। नवभिः पर्वभिर्नगैः सप्तभिर्वा युक्तम्। एकदण्डमितेनैतज्ज्ञापयति यथैकहस्ताङ्कतो दण्डः कार्य्यः। न विजातीये खण्डखण्डे. कार्य्य इत्यर्थः।

"दण्डार्धविस्तृतं तत् समावृत रत्नभूषितमुदग्रम् ।
नृपतेस्तदातपत्र कल्याणपर विजयदञ्च" ॥ ३

दण्ड षड्हस्तप्रमाण तदर्धविस्तृत हस्तत्रयविस्तीर्णं विष्कम्भप्रमाणमित्यर्थः। समावृतं समन्तादावृत सुश्लिष्टसन्धोति यावत्। दण्डमुदग्रं श्रेष्ठमिति। तथा च गर्गः।

'हंसकुक्कुटपत्रैश्च मायूरैः सारसैस्तथा।
निचितं पटसञ्छन्नं शुक्लं मुक्ताफलान्वितम्॥
छत्रं स्फटिकमूलं यत् तत्र दण्डं तु षट्करम्।
कारयेत् हेमसञ्छन्नं नवपर्वणान्वितम्॥
हस्तत्रितयविस्तीर्णं रत्नमालाभिरन्वितम्।
तदातपत्रं नृपतेः कल्याणविजयावहम्॥' इति

युवराज-नृपतिपत्नी सेनापति-दण्डनायकाना छत्रलक्षणमाह।

'युवराजनृपतिपत्न्योः सेनापतिदण्डनायकानाम्।
दण्डोऽर्धपञ्चहस्तः समपञ्चकृतोऽर्धविस्तारश्च' ॥ ४ इति

नृपतिपत्नी-राजभार्या, सेनापतिः चमूनाथः, दण्डनायकः दण्डाधिपतिः, एतेषा सर्वेषा दण्डोऽर्धपञ्चहस्तः। अर्द्ध पञ्चमो हस्तो यत्र। हस्तचतुष्टयं सार्द्धमित्यर्थः। समपञ्चकृतोऽर्धविस्तारः समानः पञ्चानामर्धकृतो विस्तारो यस्य। हस्तद्वय सार्द्धं विस्तीर्णमित्यर्थः।

अन्येषा राजपुत्राणा छत्रलक्षणमाह।

'अन्येषामुष्णघ्नं प्रसादपट्टैर्विभूषितशिरस्कम्।
व्यालम्बिरत्नमालं छत्रं कार्यं तु मायूरम्' ॥ ५

मयूरपत्रनिचितमातपनिवारण छत्र कार्यम्। प्रसादपट्टैः पट्टलक्षणोक्तैर्विभूषितं शिरो यस्मिन् छत्रे तत् तथाभूतम्। व्यालम्बिनी रत्नमाला यत्र तत्।

अथ राजपुरुषवर्जितानामन्येषा नराणा ब्राह्मणानां च छत्रलक्षणमाह।

अन्येषां तु नराणां शीतातपवारणं तु चतुरस्रम् ।

समवृत्तदण्डयुक्तं छत्त्रं कार्य्यं तु विप्राणाम् ॥ ६

अन्येषां साधारणानां नराणां शीतातपवारणं समवृत्तं समन्ततो वर्त्तुलं दण्डयुक्तं छत्त्रं कार्य्यम् ।

यदि एतत् छत्रवैषम्य पर्य्यालोच्यते, तदा स्पष्टं प्रतीयते यत्, तदानीं छत्रव्यवहाररीतौ राजशासनाधीना आसीत् । छत्रेण छत्रधारी अनुमीयते यत्, अयं युवराजो वा सामान्यनरो वेति ।

छत्रलक्षणं यथा विष्णुधर्मोत्तरे—

हंसपक्षैर्विरचित मयूरस्य शुकस्य च ।

पक्षैरथ वलच्छाया छत्त्रं राज्ञः प्रशस्यते ॥

मिश्रपक्ष न कर्त्तव्यं हीनं परिमितं तथा ।

चतुरस्र तु कर्त्तव्यं ब्राह्मणस्य भृगूत्तम ॥ २

वृत्तं राज्ञां प्रशस्तं स्याच्छुक्लवस्त्रविभूषितम् ।

सितं दुकूलसञ्छन्नं पताकाभिर्विभूषितम् ॥ ३

एतस्मिन्दिग्विभागे तु कार्य्याश्चन्द्रांशुनिर्मलाः ।

चतस्रस्तस्य धर्म्मज्ञ पताका रुक्मभूषिताः ॥ ४

दण्डं चामरवत् कार्य्यं वैणवं च प्रशस्यते ।

त्रिचतुःपञ्चषट् सप्तचाष्टपर्वं प्रशस्यते । ५

दशद्वादशभिर्वापि शेषैस्तु परिवर्जयेत् ।

छत्र दण्डोग्रपर्वाण दण्डः सर्वत्र शस्यते ॥ ६

धारयन्ति च दण्डं वै वैणवं गृहमेधिनः ।

राज्ञां प्रशस्तं षड्हस्तं छत्रदण्डं भृगूत्तम ॥ ७

(क्रमशः)

---

# अभिभाषणम्

( पूर्व्वतोऽनुवृत्तम् )

[निबन्धक —महामहोपाध्यायः श्रीभागवतकुमारशास्त्री ]

अन्यच्च पुनः कर्मतन्त्रस्य गौरवमवधार्य्यताम्। कर्मवादभित्तौ प्रतिष्ठितस्य जातिपरिवृत्तिवादस्य तन्मूलकस्य च वर्णविभागनियमस्य निन्दाः शतशः श्रूयन्ते। प्रागभवीय-मनुष्यकर्ममूला जातिरिति समाश्रित्य सामाजिकस्थितीनामङ्गीकाराद् भारतीयजनसमाजो नव्यभव्यसमाजे केषां वा नोपहासास्पदम्? किन्तु यदि मनुष्यकर्मणां संस्कारमूलकप्रवृत्तिभिर्जन्मजन्मान्तरे तत्तत्प्रवृत्त्यनुरूपदेहापत्तिर्विचारेण सिध्येत्, तदा तत्तदनुगुणकर्मप्रवृत्तसमाजेषु तत्तद्देहापत्तिः कथं नाम वार्य्येत? जन्महेतुभूते कर्मसमुच्चये यादृशी प्रवृत्तिर्निर्वर्त्तते, तादृशजातिरूपवर्णग्रहो दुष्परिहर एव। ईदृशी वर्णव्यवस्था भिन्नभिन्नरूपेण भिन्नभिन्नसमाजेषु प्रचरत्येव। सर्वत्रैव योग्य योग्येन युज्यते जन्मतो व्यवहारतश्च। भारतीयाना वर्णप्रविभागे मूलनीतिविरुद्धं यत्र यत्र यद् यत् कृतप्रवेशं कालधर्मानुरोधाद्, यच्च यच्च शिष्टैरपि तादृशमङ्गीकृत, सर्वं तत् परिणमन-परायण-कालधर्मानुसारेणैव सामाजिकैरात्मप्रतिष्ठारक्षणाय कालक्रमेण स्वत एव तिरस्करिष्यते। भाविनि काले वर्णमर्य्यादाः पूर्वरीत्या तिष्ठन्तु वा न वा, कर्मजन्यजातिपरिवृत्तिवादे विश्वजनीनं किमप्यन्यद् यत्तत्त्वं निहितं, तद्भारतीयानां प्राचीनकर्मतन्त्रप्रवर्त्तकानां सर्वकालमेव गौरवमुद्घोषयिष्यति। किमिदमिति विचार्य्यते।—

जीवस्यैकस्मिन् जन्मनि बहवः खलु ममतास्पदीभूता' प्रियाः। भार्य्यापुत्रादिषु स्वजनेषु कुटुम्बेषु परिजनेषु सुहृत्सु च स्वकार्य्यसाधकेषु ममताबुद्धिः सर्वत्रैव जागर्त्ति। प्रायेण जीवनयात्राक्रमेण ममता-

स्वदानां परिसरो दीर्घाद्दीर्घतरो भवति। कोटिशो जन्मान्तरपरिग्रहवशेन तादृशः परिसरः कोटि-कोटिगुणितो भवति। एव रीत्या वस्तुगत्या प्रत्येक जीवस्य कोऽपि न परकीय इति निर्णेतुं शक्यते। ईदृशभावेन कर्मलोकमिमं पश्यतः सर्व्वत्रैव स्वजनताख्यितिर्विचारबुद्धया प्रतिभाति। न केवल मनुष्यलोके किन्तु देव तिर्य्यगादिष्वपि मम स्वजनतेति महीयसी बुद्धिः कर्मतन्त्ररहस्योद्घाटनेनैव बद्धमूला भवति। सत्यं न केवल वसुधैव, परं निखिलं जगत् मे कुटुम्बकम्। यन्मतमवलम्ब्य मनुष्याणामेतादृक् साधीयानभिमानो जायेत, तन्मतं कथमनादरणीयम्? विश्वजनीनभावौदार्य्ये किमन्यदस्य समकक्षता भजेत्? विश्वस्मिन् संसारे सर्व्वे एव ममात्मीयाः, अहमपि सर्व्वेषामात्मीय इति सर्व्वगतमन्योन्यसख्यमुपदिशता कर्मतन्त्रेण यद्यपराद्ध, तर्हि नैव जानीमहे केनान्येन तन्त्रेण किं परमुपकृतमिति। आवहमानकर्मसिद्धत्वात् स्वाभाविकश्चायं भावो मनुष्याणा सुतरामेवानुकूलः, केवलमुद्बोधनापेक्ष एव सदुपदेशादिना।

इत्थ बहुशो निन्दितमपि भारतीयकर्मतन्त्र मनुष्याणा स्वभावगतिमन्वोक्ष्यैव प्रवर्त्तितमिति विभाव्यते। प्रकृतिस्वभावत एव मनुष्याः कर्मपराः। कर्मवशाच्च तेषा नानायोनिषु संसरणम्। तस्मिन् ससारचक्रमणे विश्वत एव पुरुषाणा ममताबन्धः। अतो न कोऽपि पर इति बुद्धया हेयः। सर्वत्रैव पुरुषाणा गूढागूढमनुष्यात्मानः कुटुम्बिनः। सर्व्वत्र ममताबुद्धि., सर्व्वत्र मनुष्यबुद्धि, सर्वत्र च स्वजनबुद्धिः, कर्मार्जितस्वभावात् सिद्धा। पुरुषाणामवाधितः स्वभावस्तान् सार्व्वत्रिकप्रीतिमूलेषु व्यवहारेषु नियोजयेत्। स्वातन्त्र्यमाश्रित्य प्रतिकूलव्यवहारास्तु स्वभावविरुद्धा एव। तन्नियमनार्थमेव स्वभावमनुकूलयितुं निबद्धा कर्मतन्त्रेषु विधानपद्धतयः। स्वभावानुकूलानि भारतीयाना कर्मतन्त्राण्यत एव सुप्रतिष्ठितान्येतावन्तं कालं यावद् भारतेऽस्मिन् वर्षे। कर्मतन्त्रेषु तेषु विश्वजनहितकरीं मूलनीतिमाश्रित्य

या या व्यवस्थाः प्राचीनैस्तत्तद्देशकालाद्यपेक्षया प्रवर्त्तितास्तासां मध्ये कासाञ्चित् कासाञ्चित्, तन्नीतिमाश्रित्यैव, तत्तत्कारणापेक्षयैव, कानिचित् कानिचित् परिवर्त्तनप्रसाधनानि साधितानि काले काले कर्मतन्त्राभिज्ञैराचार्य्यवर्य्यैः। भाविनि च काले तथैव भविष्यतीत्याशास्महे। न हि हठकारिणामुद्योगेन भारतीयप्रतिष्ठाप्रनाशकरो भवेदिति च कामयामहे। कर्मयोगदर्शनेषु या मूलनीति प्रतिष्ठापिता, सैव भारतवर्षे प्रस्थानभेदैः समुज्ज्वलीकृता। भारतीयभावविश्लेषणे शिष्टसिद्धान्तेषु कर्मवादः कुत्रापि नैव व्याहत इति भवेदेव महदाश्वासनम्। किं बहुना, जैनैर्बौद्धैरपि कर्ममूलजन्मान्तरवादमङ्गीकृत्य प्राचीनकर्मतन्त्रस्य दृढभित्तिता विश्वजनीनता च समर्थिते। यथा यथा खलु नानाप्रस्थानप्रवर्त्तकैराचार्य्यैः स्वस्वप्रस्थानानुरूप्येण विश्वजनीनः कर्मवाद समुज्ज्वलीकृतस्तथा तथाऽत्र विमर्शनपद्धतीः किञ्चित् किञ्चित् समुदाहरामः।

वेदेषु समुपदिष्ट"मेकं सद् विप्रा बहुधा वदन्ती"ति सदेकवादमाश्रित्य प्राचीनैः कर्मयोगाचार्य्यैर्योगनाम्ना कर्ममीमांसानाम्ना चाख्यातैः सम्प्रदायभेदेन कर्मतन्त्रमिदं बहुधा कृतम्। क्वचित् क्वचित् प्रदर्शनरीतिभेदे सत्यपि सर्व्वेषामेव योगानां कर्मसिद्धान्तेष्वैकमत्यमेवासीत्। पुरुषकर्मनिमित्तो भूतसर्गं इति सर्व्वेषामेव सम्मतम्। पुरुषा पुनस्तैः सद्विशेषभूता इत्यङ्गीकृतम्। निर्विशेषचैतन्यं पुरुषनिष्ठमिति नैव तेषामभिमतम्। क्रियावशात् पुरुषेषु करणोपकरणभोग्यसम्बन्धादिविशिष्टं विशिष्टं ज्ञानमुत्पद्यते। विशिष्टचेतनाव्यतिरिक्ताश्चेतना नैव सन्ति। निष्क्रियमोक्षदशायां पुरुषाणां सद्भावमात्रमवशिष्यते, न ज्ञानस्य गन्धोऽपि। वरं तादृशमोक्षादुत्कृष्टतरजीवरूपेण सुखैश्वर्य्यभोगः। दुःखासम्भिन्नं सुखं नैव केनापि दुःखेन संभिन्नमिति तदेव काम्यतमम्। अतः स्वर्गलोकाय पुरुषै प्रयतितव्यं काम्यकर्मविशेषानुष्ठानात्। तानि च कर्माणि सत्त्वनिष्ठा-

पौरुषेयवेदबोधितानि ब्राह्मणादिभागेषु समुपदिष्टानि। सर्व्वाण्येव तानीष्टिरूपाणि। यत्नाश्च "भूतभावोद्भवकरा विसर्गाः"। इष्टिभिरेव विश्वार्थकर्म्मभावस्य समुद्दीपितत्वाद् यजमानानां सुप्रवृत्तिसमुच्चया-त्तत्तदनुरूपोच्चजन्मसिद्धि.। श्रेष्ठं तु जन्म स्वर्गभूमौ स्वर्गिदेहाश्रयतः। कर्मणा सर्व्वाधिष्ठानस्य सतः स्पन्दनात्, कर्मफलादेव मनुष्याणां गतिवैचित्र्यम्। इष्टिविधिबोधितं कर्म विधेय, तदन्यद्धेय, निकृष्टगति-कारकञ्च पातकमित्याख्यायते।

वैशेषिकाणामप्येषु योगेषु परिगणना। पुरुषकर्म्मनिमित्ते भूत-सर्गे सति स्पन्दने परमाणुरूपाणां सविशेषाणां क्षित्यप्तेजोमरुतां स्वत एव विशेषान्तररूपैरात्ममनोभिः प्रतिपुरुषनिष्ठैः सम्बद्धानां सद्रूप-दिगाकाशकालाश्रयेण संयोगसमवायादिरीति विशदीकृत्य काश्यपीयैः कर्म्मभावमूला जगन्मर्य्यादा व्याख्याता। नैयायिकैः पुनरेतन्मतानु-सारिभिः सर्गे संयोगसमवायादिव्यापारे परमाण्वादीनां, जीवकर्म्म-जन्यादृष्टनियामकः सदात्मा प्रेक्षावतामग्रगण्यः स्वतन्त्रेच्छो रागद्वेषविव-र्जितः सर्व्वधर्म्मनिलयो निरतिशयनिर्वृतिमयः कश्चित् पुरुषविशेष ईश्वर इति काश्यपीयमतपरिपुष्टिविधयैव प्रतिष्ठापितः। चरकादिभिश्च तत्त्वतो योगमतानुसारिभिरपि योगानुगुणेन साङ्ख्यव्यवस्थाश्रयेन मूलीभूतसद्वस्तुनः पुरुष इत्यव्यक्त इति च संज्ञाद्वयं कृतमेकस्य सतो भावभेदाश्रयणात्। तैः सांख्यदृष्ट्यैव समन्वयरूपेणेदं संज्ञाभेदस्थापनं कृतमिति स्पष्टमेवाकारेषु। अत एव ते. पदार्थविचारे प्रायेण न्याय-वैशेषिकरीतिमङ्गीकुर्व्वद्भिरपि द्रव्यप्रविभागे स्थूलतः क्वचित् सांख्यतत्त्वा-न्येवाङ्गीकृतानि। यथा तथा भवतु, कर्मयोगनिर्दिष्टैव तेषां संसार-कर्मभावविश्लेषणरीतिः।

नानाशाखाविभक्तैः सांख्यैः पुनः पुरुषेषु निर्विशेषं चैतन्यमात्र-मभ्युपगम्यते। विश्वाधिकरणभूतस्य सतश्च जडरूपस्य ते प्रकृति-प्रधानाव्यक्तादिसंज्ञाः क्रियन्ते। चरमे चिदचिद्रूपे द्वे एव तत्त्वे

सांख्यानामभिमते। सृष्टिविषये जडस्य मूलीभूतस्य परिणाम-प्रवणतारूपहेतुतामङ्गीकृत्य प्रकृतेः शक्तिरूपता तन्मते सुतरामेवाव-भासते। सृष्टौ मूलशक्तेर्विकारवैचित्र्यमालक्ष्य प्रधानस्य प्रकाश-प्रवृत्ति-नियमनात्मकं शक्तित्रयमवान्तरभूतं तैः सत्त्वरजस्तमोगुणा-ख्यया यथाक्रमेण संज्ञापितम्। निर्विशेषस्य शक्तित्रयस्य साम्यभाव-त्यागेन वैषम्ये जाते प्रकृतेरेव परिणामविशेषात् सृष्ट्यनुगुणं विशेषा-ध्यवसायात्मक तत्त्वतोऽचिद्रूपं बुद्धिसत्त्वचित्तमहदादिनामकं तत्त्वमेकं जायते। वैषम्यविशेषाणामानन्त्यात् तत्तत्त्वमप्यनन्तं जीवभेद-व्यपदेशेन ब्रह्मादिजीवकोटिमाश्रित्य भिदा गतम्। बुद्धावेव पुरुष-चैतन्यस्य प्रतिविम्बनात् तदनन्तरा प्रज्ञापूर्विका सृष्टिः। बुद्धावेव जीवकर्म्म संस्काररूपेण वर्त्तते। ततश्च जीवकर्माङ्गीकृत्य शक्तित्रयरूपेण गुणत्रयेण भूतसृष्टिप्रक्रिया साध्यते। तत्र चाहं ममेति तत्त्वान्तर-परिणामाज्जीवाना विशेषा जायन्ते। सांख्येषु न चैतन्यमात्रे जीव-संज्ञा, किन्त्वहंभावप्रवणायां चेतन्यप्रतिविम्बितायां बुद्धौ। विशेष-विस्तारार्थं चाहंतत्त्वादेव प्राकृतशक्तित्रय निखिल ब्रह्माण्डं व्याप्य जीवस्य भोगायतननिर्माणे प्रवृत्तं क्रमशो मनइन्द्रियसूक्ष्मस्थूल-भूतानां सृष्टिं निर्वाहयति। सर्व्वं तु सृष्टिकर्म बुद्धिभेदाद्भिन्नस्य प्राकृतस्य जीवस्य कर्मवशात्।

सांख्यमतेऽपि ततः कर्मनिमित्ता भूतसृष्टिरव्याहतैव। प्राकृत-जगति सृष्टिमर्य्यादास्थापक-कर्मविधिबोधक-वैदिकनीत्या सदाचारा-श्रयेणैव नृणा सत्त्वानुरूपिका देवदेहमूलिकोर्द्ध्वगतिस्तदन्यथा क्रियाप्रवणचित्तवशाद्रज'प्राधान्याद् यथायोग्यनृदेहप्राप्त्या नृलोके पुनरावृत्तिर्मोहाकुलचित्तवशात्तम.प्राधान्यादधोगतिश्च तिर्य्यक्स्थाव-रादिवपुषा। यावत्संसारं 'मनुष्यकर्मण एव प्रभुत्वात् सर्व्वत्र मनुष्य-बुद्धि' सांख्यानामपि नितरां सम्मता। जन्मजन्मान्तरसम्बन्धान्ममता-बुद्धिरप्यखिलेषु प्राणिषु साङ्ख्यनये नैव खण्डिता। विशेषस्त्वयं संसार-

विरागिणां सर्व्वं खलु कर्मतन्त्रं प्राकृताधिकारगतत्वात् संसारयातना-हेतुरिति समूलमुच्छेदनीयमेवेति। किञ्च प्राकृतबुद्धिसम्पर्कपरिहारेण केवलचैतन्यरूपात्मानुचिन्तनयोगसमाधिना निस्त्रैगुण्यात्मिका कैवल्य-मुक्तिरेव श्रेयस्तयानुसरणीयेति मूलसिद्धान्तसाम्येऽपि, अवान्तर-सिद्धान्तभेदेन प्रवृत्ताः सन्ति तत्र साङ्ख्यानां बहव सम्प्रदायाः। कार्य्यकारणयोस्तादात्म्याभ्युपगमात् साङ्ख्यागमे कैश्चित् कानिचित् कार्य्यरूपाणि कारणेषु, कैश्चित् कानिचित् कारणरूपाणि च कार्य्येषु तत्त्वपरिगणनायामन्तर्भावितानि। स्थूलसूक्ष्मभेदमात्रेण भिन्नाना परस्परानुप्रवेश एवं नैव दोषावहः। अत एवोक्तम्—

"पौर्व्वापर्य्यप्रसंख्यानं यथा वक्तुर्विवक्षितम्।
एकस्मिन्नपि दृश्यन्ते प्रविष्टानीतराणि च॥
पूर्व्वस्मिन् वा परस्मिन् वा तत्त्वे तत्त्वानि सर्व्वश।
सर्व्वं न्याय्यं युक्तिमत्त्वाद् विदुषा किमशोभनम्॥

(भागवते ११।२२)

यथा तथा भवतु साङ्ख्येषु तत्त्वाना प्रसंख्यानं, कर्मतन्त्र तु प्राकृताधिकारनिविष्टसृष्टिमर्य्यादाप्रकाशक-वैदिक विधीनामानुगुण्येनै-वालम्बितं सर्व्वत्रैकप्राणतया उद्बोधनेन सत्त्वशुद्धिसम्पादने नैव मन्थर-मिति सर्व्वेषामनुमतम्।

पातञ्जलानुसारिणस्तु सांख्यवत् प्राकृततत्त्वप्रसंख्यातारोऽपि प्राकृतगुणात्मकस्य शक्तित्रयस्य सृष्टिमूलीभूतस्य विक्षोभवैषम्ये निमित्तपर्य्यालोचनया, सांख्योक्तं प्रकृतिस्वभावकारणं विचारयन्तः, क्लेशकर्मविपाकाशयैरपरामृष्ट प्रकृष्टसत्त्वोपाधिकं पुरुषविशेष-मीश्वररूप तस्मिन् प्रकृतिस्वभावेऽधिष्ठातारं साङ्ख्योपदर्शितदिशैव विनिर्दिश्य, साङ्ख्यमतपरिपुष्टिमिदं तन्त्र विरचयामासुः। एकैक-बुद्ध्या जीवात्मना सम्पर्क', परमेश्वरस्य परमात्मनस्तु सर्वप्राकृत-बुद्धीनामुपरिचर्य्या प्रकृष्टसत्त्वरूपया बुद्ध्यात्येतन्मते सुबोधम्।

वैराग्ये समाधिमार्गे न केवलं सांख्यवदेभिरात्मानुचिन्तनमात्रमुपदिष्टं, किन्तु परमेश्वरप्रणिधानेन जीवात्मपरमात्मसंयोगमार्गोऽपि दर्शितः। परमेश्वरस्य प्रकृष्टसत्त्वे स्रष्टृभिरव्यागङ्गीकृत सृष्टिपालकशास्त्रमादित एव स्थितमिति योगिनस्तत्प्रणिधानेन तद्भक्त्या स्वस्वहृदये तच्छास्त्रमाकलय्य जगति प्रचारयामासुरतस्तदनुसारेण सृष्टिप्रतिपालकमेवैकसत्त्वानुयन्त्रितं कर्मतच्च मनुष्यैराश्रयणीयमित्येवं पातञ्जलानां परामर्शः।

( क्रमशः )

---

## वकदूतम्

( पूर्वतोऽनुवृत्तम् )

[ निबन्धकः—महामहोपाध्यायः अजितनाथन्यायरत्नः ]

तस्यामेकं नृपतिगुरुभिः प्रार्थ्यमानः परेद्यु-
र्यामे कुर्वन् खडकसहिता साधनाख्याञ्च पल्लीम्।
तेभ्यः कृत्स्नं प्रियमधुकरस्यानुसन्धानमेत्य
मन्दं मन्दं व्रज सुरधुनीमुक्तखाताध्वना त्वम्॥ १७

गच्छत्येवं सुजननगरी सम्मुखस्था क्रमेण
प्रोर्णा जीर्णाकृतिमिव कुटीमिन्द्रचन्द्रस्य कीर्त्तिम्।
दृष्ट्वा तस्यां खगकुलपते! मैत्रकृत्यं समाप्य
सुस्थः स्वस्थः पुनरट पथा विल्वयुक्पुष्करिण्याः॥ १८

पातुं वाञ्छा यदि तव जलं विल्वयुक्पुष्करिण्या
आकाशात्त्वं न नम खग! ते निष्फलो यत्न एव।
अङ्गेष्वेकं मरुपुरमिदं बुद्धिमन्नित्यवेहि
तत्रत्या नो पथिकनिचये बिन्दुमात्रं त्यजन्ति॥ १९

याया मायापुरमिदमितो दक्षिणे यद्यपि त्व
लब्धा तोय त्रिदशसरितो दुर्लभ दुष्कृतानाम् ।
यस्मिन् यत्नाद् वक । सकरुणैर्वैष्णवै' पुण्यशीलै-
राविष्कृते खग । नवनवद्वीप-धाम द्वितीयम् ॥ २०

———

## अग्निगर्भ-गिरि:

[ निबन्धकः—श्रीउपेन्द्रनाथसेनगुप्त' ]

वैदिकेषु तथा लौकिकेषु गीर्वाणवाणीमयेषु साहित्यग्रन्थेषु नैस-र्गिकवस्तूना भूयसो वर्णना समुपलभ्यते। तत्र न केवल सरित:, समुद्रा:, गिरय:, कान्ताराणि च वर्णितानि, परं रघुवंशादौ तिमिप्रभृतीना मत्स्याना जलस्तम्भादीनाञ्च निसर्गविचित्राणा विवरण निपुण-कविवर्णित प्रत्यक्षमिव प्रतिभापयति वस्तुजातम्। अत्रेदमवधेयं यत, तिमिनामका मत्स्या प्रायेण भारतवर्षसमीपवर्तिनि सागरे न दृश्यन्ते, मेरुमण्डले एव तेषा भूयसा प्रचार.। अपि च जलस्तम्भादीनि स्वभाव-विलसितानि तथैव विरलापातानि, यतो ज्योति:शास्त्रेष्वौत्पातिकेष्वपि वस्तुषु तेषां परिगणना न परिलक्ष्यते। संस्कृतसाहित्ये एतद्देशप्रसिद्धाना-मप्रसिद्धानाञ्च वस्तूनां दर्शनादवधारयामो वयं यत्, प्राचीना: कवयो न केवल भारतवर्षं, परन्तु देशान्तराण्यपि सम्यक् सवीक्ष्य वर्णनीयानि वस्तूनि स्वरचितेषु ग्रन्थेषूपनिबद्धवन्त:। परमाश्चर्यमिद यदीदृशाना-मपि महाकवीना कृतिषु महिम्ना वैचित्र्येण च वर्णनीयेषु पदार्थेषु उत्कर्षस्य परां कोटिमधिरूढस्यापि अग्निगर्भभूधरस्य वर्णना, किं बहुना तस्य नामापि नोपलभ्यते। सत्यं साध्यादिकं निर्णयता नैया-यिकाना "पर्व्वतो वह्निमान् धूमादि"ति वाक्यं सुप्राचीनमेव, किन्तु तत्र दृष्टान्ते महानसादाविव पर्वतेऽपि वह्नेः स्थितेरुपलम्भात् वह्निमान्

पर्व्वतोऽग्निगर्भ एव इति निश्चयेन वक्तुं न शक्यते। पीठाख्य-तीर्थाना मध्ये ज्वालामुखी हिमालयान्तर्गता सुप्रसिद्धा। तत्राग्नेः शिखाना वर्त्तमानत्वेऽपि नासौ गिरिरग्निगर्भ इति सर्वेषा सुविदितमेव। हिमवत् सनाथेऽपि भारतवर्षे तथाविधानामग्निगर्भगिरीणाम् (Volcano) अत्यन्ताभावोऽस्मासु भगवतः परमा करुणामेव व्यनक्ति, परमासीत् कोऽपि कालो यदा खलु हिमालयादिगिरीणां बहव एव साग्निका आसन्निति भूतत्त्वविद' समामनन्ति। तेषाञ्च निर्वाणकाल इतो लक्ष-वत्सरादूर्द्धम् इत्यपि विदुषा मतम्। ये पुनर्विद्वास आर्य्या देशान्तराद् भारतवर्षमासाद्य दस्यून् विजित्य स्थानमिदं वासाय कल्पयामासुरिति अर्वाचीनमते श्रद्धामादधति, तेषा मतेऽत्रार्य्याणामागतिर्वर्षाणा सहस्रपञ्चकादूर्द्धं कदापि समभवदित्येव स्थितम्। साम्प्रतं तु सिन्धु प्रदेशे "माहेञ्जिदारो" नामकस्य भूभागस्य खननात् यानि प्रत्नवस्तूनि समुद्धृतानि, तैस्तु तन्मतमुपहसितमिव लक्ष्यते। वय तु प्रमाणान्तरेण प्रतिपादयिष्यामो यत् लक्षवत्सरादूर्द्धंऽपि आर्य्या अत्रैव कृतवसतय आसन्। अपि च, यदि तेषा देशान्तरादागतिरेव समर्थनीया भवेत्, तर्हि स कालो लक्षवत्सरादपि प्राक्तनः समवधार्य्यः। मनोरन्वये भगवतो रामचन्द्रस्य पितॄणामन्यतम आसीत् कश्चित् प्राचीनो राजर्षिः कुवलयाख्यो नाम। वार्द्धक्ये पुत्रे राज्यभार निधाय वनं प्रस्थितस्तस्य जनकः केनचित् मुनिना समासादित उक्तश्च, "महाभाग, प्रजानां रक्षणमेव नृपतीनां तपः, दानवेन पीडिता वयम्, अतस्तस्मादस्माकं त्राण विधाय यथारुचि भवता कान्तारमाश्रीयताम्, न तु दानव-मडलैव। यतः—

> ममाश्रमसमीपे हि समेषु मरुधन्वसु।
> समुद्रो वालुकापूर्ण उज्जानक इति श्रुतः॥
> देवतानामवध्यश्च महाकायो महाबलः।
> अन्तर्भूमिगतस्तत्र वालुकान्तर्हितो महान्।

राक्षसस्य मधो पुत्रो धुन्धुनामा महासुरः ।
शेते लोकविनाशाय तप आस्थाय दारुणम् ॥
संवत्सरस्य पर्य्यन्ते स निश्वासं प्रमुञ्चति ।
यदा तदा भूश्चलति स-शैलवनकानना ॥
तस्य निश्वासवातेन रज उद्धूयते महत् ।
आदित्यपथमावृत्य सप्ताहं भूमिकम्पनम् ।
सविस्फुलिङ्गं साङ्गारं स-धूममतिदारुणम् ।
तेन तात न शक्नोमि तस्मिन् स्थातुं स्वकाश्रमे ।"

( हरिवंशे हरिवंशपर्वणि ११अ० ३२—३६ श्लोकाः )

अत्र सशैलवनकाननाया भुव प्रकम्पः सन्निहितमग्निगर्भं गिरि सूचयति। आदित्यपथमावृत्य धूमाङ्गारविस्फुलिङ्गयुक्तानां रजसामुद्गमन चाग्निगर्भगिरिपक्षे बलिष्ठं लिङ्गम् ।

दृश्यते च, केचनाग्निगर्भगिरयो निर्दिष्टकालापगमे प्रोज्ज्वलन्ति, निर्दिष्टकालश्चाङ्गारादीनि समुद्गिरन्ति, अत "संवत्सरस्य पर्य्यन्ते सप्ताह भूमिकम्पनम्" इति सम्भवत्येव। 'ननु कुत्रायमुज्जानक' इति जिज्ञासा सम्भवति। वयन्तु मन्यामहे यत्रेदानी सिन्धुप्रदेशः, तत्र पुरातनमद्रप्रदेश एवोज्जानकनामानं ग्रामविशेषमन्तर्भाव्य स्थित आसीत्। यतः आख्याने दृश्यते, पित्रादिष्टः कुवलयाश्वो धुन्धु हन्तु श्रावस्तीनगरीतो निर्ययौ, ततश्च स "दिशमावृत्य पश्चिमाम्" धुन्धुमपश्यत्। प्राचीनमद्रदेशः श्रावस्त्याः पश्चिमाया दिशि आसीत् इति भौगोलिकाना मतम्। अपि चाधुनापि तत्र मरुभूमिर्दृश्यते, समुद्रः शुष्कता गत एव मरुं जनयति, अतः "समुद्रो बालुकापूर्णः" "मरुधन्वसु" इति च न दोषाय। "समेषु" इति विशेषणं तु तत्र पर्वताभावं सूचयति, अतो मन्यामहे यत् पर्वतोऽयं बालुकाच्छादित एव बभूव, परमनेन तस्य देशस्य सर्वथा समता न प्रतीयते, यतः उत्तरश्लोकेषु कुवलयाश्वस्य पिता तत्रैव पर्वतमाश्रित्याय इत्यवलोक्यते।

धुन्धु हन्तु' प्रक्रान्ता कुवलयाश्वस्य पुत्रास्तन्मुखनिर्गतेन सलिलेन प्लाविता निधनमुपजग्मु', राजा तु तत् सलिलं योगेन निपीय असुरं जघान इति पौराणिकी वार्त्ता। भूतत्त्वविदश्च कथयन्ति यत्, यत्रैवाग्निगर्भपर्वताः तत्रैवोष्णसलिलस्रोतांसि (Not Spring) भवन्ति, अत एतदपि समर्थकं लिङ्गम्। यत्तु नरपतिर्योगेन सलिलं पपौ इति कथितं तत्र "योगः कर्मसु कौशलम्" इति ज्ञातव्यम्। कौशलेन सलिलं देशान्तरितं कुर्वन् राजा कथमपि हुताशनं निर्वापयामास। अपि च तेन गङ्गामवतारयता भगीरथेनैवाग्नेयगिरेरग्निं निर्वापयता प्रजानां पूजास्थानत्वं गतमिति ज्ञायते। एतेन एतन्निर्णीतं भवति यत्, कश्चिदग्निगर्भगिरिरेव धुन्धुरिति रूपकमाश्रित्य समुपवर्णितः। स च पर्वतो बहुगिरिके सिन्धुप्रदेशे कुत्रापि बालुकान्तर्गत आसीत्। कुवलयाश्वे शासति, भारतवर्षे पर्वतोऽयं धूमाङ्गारादिकं वर्षन्नविद्यत, स च कालो लक्षवत्सरादूर्द्धम्। परमयमेव बहूनामग्निपर्वतानामन्तिमः, यत इतः परमेतादृशस्य वस्तुन उल्लेखमात्रमपि नावलोक्यते।

कुवलयाश्वो महामुनेः पाराशर्य्यात् व्यासात्, प्राचेतसाद् वाल्मीकेरपि प्राचीनः, अतस्तौ किलैतिह्यमात्रमवलम्बमानौ किंवदन्त्याश्रितौ, अनवलोकित-तादृग्वस्तुकौ च गिरिमसुरमसुर इति मत्वा वर्णयन्तौ न दोषमर्हतः। अयन्तु धुन्धर्जनश्रुतिमाश्रयन् अद्यापि जीवति। पश्चिमभारतेऽधुनापि मरुस्थबालुकाः धुन्धुला इति कथ्यन्ते। शब्देनानेन यदि किञ्चिदप्यैतिह्यमवगुण्ठितं भवति तत्तु धीरा एव सम्प्रधारयन्तु वयन्त्वद्य वार्त्तामात्रं निवेद्य वार्त्तान्तरान्वेषणाय प्रस्थिता इति शम्।

# अमात्यपत्तिलीलातत्त्वम्

( पूर्वानुवृत्तम् )

[ निबन्धकः—श्रीकानाइलालपञ्चतीर्थः ]

सचिवादिबलान्तानां लघुतोऽतो विवेकत' ।
कपालघटवत् पश्चाल्लीलातत्त्व वितन्यते ॥१॥
कलौ मन्त्र्यादिलिङ्गानि सज्जयेतां यथाक्रमम् ।
चतु.षष्टिगृहे पीठे द्वात्रिंशत्प्रान्तसद्मसु ॥२॥
अभित सज्जित लिङ्गै. पीठं मध्ये निधाय तौ ।
क्रीडनैः सम्मुखीभूय तिष्ठेता विष्टरे सुखे ।३॥
मितवाक्यौ सुधिषणौ क्रोधलोभादिवर्जितौ ।
नर्म्मविश्रम्भतौ बालौ रक्षितावङ्गचापलै ॥४॥
कपोलमोष्ठमधर न स्पृशेतामनेकधा ।
एकं क्रीडनकं वाच मुद्रादोषा जुगुप्सिताः ॥५॥
तिष्ठेता बहुभिर्युक्तौ साचिभिर्नर्म्मपण्डितैः ।
अपक्षपातिभिर्दक्षैर्द्वयोर्विक्षेपवारणे ॥६॥
युवानावथवा प्रौढौ वृद्धौ वाचोणवीक्षणौ ।
सुलक्ष्ये बालसाधर्म्याद्रमेतामिह नर्म्मणि ॥७॥
क्लृप्ता रावण' क्रीडा मन्दोदर्य्या सम पुरा ।
सवंशो निहतस्तस्मात् स्त्रीपुंसौ वर्जितौ मिथः ॥८॥
रावणः क्रीडनगणो हताश्चाहारवो यतः ।
विश्वा मन्दोदरी पीठो यद्गर्भे कोऽपि न स्थिरः ॥९॥
नेय विचार्य्य बुद्ध्यादौ योद्धृलिङ्ग' पदात्पदम् ।
येन कालेन बहुना न कोऽप्याप्नोति नापदम् ॥१०॥

विप्रलापो विलापोऽपि प्रलापो विफला क्रिया।
प्रतिपत्तधियो येभ्योऽपलापस्तेऽत्र दूषकाः ॥११॥
मध्यस्थः क्रीडतोरेव ग्रक्तः सशयवारणे।
तयोस्तु मतिवैषम्यात् क्रीडनानां जयाजयौ ॥१२॥
क्रीडतोस्तुल्यसुधियोर्द्वन्द्वाभिभवहीनयोः।
राज्ञोरेको गृहेऽन्यस्य द्वितीयस्तस्य चाटति ॥१३॥
अनाकर्ण्यारिभेयाता वर्णधर्मानुभौ नरौ।
लिङ्गैः सेनाङ्गसङ्केतैरभेरीताडनं रणम् ॥१४॥
हस्तिनो बृंहितं नेह हेषा नाश्वस्य कर्कशा।
सैवन्ता मादक घोरा मद्यपानं विनाहवम् ॥१५॥
युद्धैर्घोरा गुणा राज्ञोः काम्यन्ते क्रीडयानया।
भीमकान्ता नृपगुणास्तस्मात् कविवरैः स्तुताः ॥१६॥
यवनोऽलापदीनोऽपि श्रूयते क्रीडयैतया।
भारताद्रावण इव जह्रे सीतामिव श्रियम् ॥१७॥
सव्यापणाद्भरतातीते परायत्तेऽद्य भारते।
यदृच्छा सेविता क्रीडा दुर्गे वेय गृहे गृहे ॥१८॥
अवक्रा पृष्ठवशाभ्या निस्तन्द्रौ नरपुङ्गवौ।
क्रीडेता दक्षपाणिभ्या नान्याभ्यां भद्रतायुतैः ॥१९॥
नयेता योद्धृलिङ्गे द्वे एक वा द्वे गृहे मिथः।
बालौ जयि-पुरस्कारशून्यादावव्यवस्थितौ ॥२०॥
विपक्ष-योद्धृविन्यासं नियम्यात्मजयोद्यमः।
कार्य्यः पृष्ठव्रणे नेष्टं मूर्ध्नि गन्धविमर्दनम् ॥२१॥
यथा युद्ध पत्तिलिङ्गैः प्राग्गम्यं संहतैर्मिथः।
दृष्ट्वा यतो दलभ्रष्ट निहन्युर्बलिनोऽरयः ॥२२॥
प्रमादाच्चेत् किञ्चिदेक वैरिव्यूहमुपाश्रयेत्।
स्वपक्षेणानुगन्तव्यं येनेह बलमाविशेत् ॥२३॥ ( क्रमशः )

## समालोचनम्

### श्रौर्द्ध्वदैहिकक्रियासारस्य

श्रीमदिन्दीवरकृष्णविद्याभूषणसम्पादितस्य।

प्रथितयशसः खलु पण्डितवर्य्याः श्रीमन्त इन्दीवरकृष्णविद्याभूषण महोदयाः सर्वेषु संस्कृतशास्त्रभाषानुशीलनरसिकेषु। श्रौर्द्ध्वदैहिक क्रियासार इत्यभिधाना पुस्तिका सम्प्रति तैर्निर्माय बङ्गाक्षरैर्मुद्रापिता, अस्माभ्यमुपहृतं च खण्डमेकम्। पुस्तिकेयं क्षुद्रापि केषाञ्चनापेक्षित विषयाणां सन्धारणेन सविशेषं गौरवमेवादधाना वर्त्तते। प्राचीन-व्यवस्थाशास्त्रावतामार्य्यधर्म्मसंरक्षणप्रयत्नपराणां नितरां सन्तोष-मेवेयं जनयिष्यतीत्याशास्महे। मुमूर्षोस्तावत् किं किं करणीय-मास्ते, तथा पित्रादिमरणात् परं श्मशानादौ पुत्रादीनां किं कर्त्तव्यं, किं वाऽकर्त्तव्यं, कथं वा शोकापनोदनं भवेत्, तत्सर्वमेव सप्रमाण-मत्र सन्निवेशितम्। समुपन्यस्तानां विषयाणां सरल-बङ्गभाषया तात्पर्य्योपवर्णनेन पुस्तिकायाः सौष्ठववृद्धिः सम्यगेव जाता। अस्याः पठनेन श्रवणेन च शोकप्रभवो विमूढ़भावो विलयमेव कथ-ञ्चिद् यायादिति मन्यमाना वयमस्य ग्रन्थस्य बहुलप्रचारं कामयामहे।

प्राप्तिस्थानम्—टाकी २४ परगणा ग्रन्थकारसमीपम्।

मूल्यं ।० चतुरानकाः।

---

## सन्देशः

**शिक्षासम्पादकानां परिषत्परिदर्शनम्**—अद्य पाठकमहाभागानामिदमेकमानन्दनिदानमावेद्यते, राजकीयशिक्षा-विभागसम्पादका माननीया 'व्यास्' महाशयाः स्वीयभार्य्यया भगिन्या च सह फाल्गुनमासस्य पञ्चविंशदिवसे गुरुवासरे साय

सप्तमहोरायां परिषदि समागत्य सानुरागं ग्रन्थागारादिपर्य्यवेक्षणेन परम सन्तोषमधिगतवन्त'। परिषदि तदीयशुभागमनसम्भावनाय ये ये महानुभावा विद्वांसो विदुष्यश्च सम्मिलितास्तेषु वक्ष्यमाणानां नामधेयानि सगौरवमुल्लेखमर्हन्ति। तथाहि, माननीया दश्मन सागरविश्वदालङ्कृता राजकीयसंस्कृतमहाविद्यालयाध्यक्षा कलिकाता-संस्कृतपरीक्षासमितिसम्पादका' श्रीमन्त आदित्यनाथमुखोपाध्याया' एम् ए, पि एइच् डि महाभागा, कलिकाता-विश्वविद्यालयाध्यापकाः श्रीयुक्त-निरञ्जनचक्रवर्त्तिनः एम् ए पि एइच् डि महाभागाः, तत् पत्नी सुषमा देवी, महामहोपाध्याय-श्रीयुक्त-भागवतकुमारशास्त्रिण एम् ए पि एइच् डि महाभागाः, महामहोपाध्याया. परिषदध्यक्षाः श्रीयुक्त दुर्गाचरणसांख्यवेदान्ततीर्थाः, श्रीयुक्त सुराजराजचट्टोपाध्यायाः, तत्पत्नी श्रीमती तुहिनिका देवी वि ए, राजकीय सस्कृतमहाविद्याल याध्यापकाः महामहोपाध्याय-श्रीयुक्त शितिकण्ठवाचस्पतयः, धर्माधि करणप्राड्विवाकाः श्रीयुक्त-विभारमहोदयास्तथा एसियाटिक्-सोसाइटिसभासम्पादकाः श्रीयुक्ता' भ्यान् मानेन् महोदयाः अपरेऽपि सुगृहीतनामानो महान्तः सभाशोभामुदपादयन्। तेषां तेषामागमन-महोत्सव-सुसम्भावनाय परिषत्सदस्यैः सुप्रयुक्तो मध्यमव्यायोगो नाम भासप्रणीतो व्यायोगः। तदवलोकनेन सर्वं एव महतीं परितृप्ति-मुपेत्य प्रायेण रात्रे. सार्द्धनवमहोरायां स्वं गेहं गतवन्तः। अभिनया-वसाने ते समागतैर्महद्भिर्दृष्टाः परिषत्सङ्गृहीता हस्तलिखिता बहवः प्राचीनग्रन्था, अवलोकितानि च परिषदा संरक्षितानि परः-शतानि चित्राणि प्राचीनपण्डितानाम्, सर्वमेवेद तेषां सन्तोषकार-मासीदिति परिषदात्मानं श्लाघ्यं परिपुष्टञ्च मन्यत इति शम्।

# संस्कृतसाहित्यपरिषत्

इयं संस्कृतसाहित्यपरिषत् प्रतिभा रवेः ।
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम् ॥

१८४८ शकोये चैत्रे १०म-वर्षस्य १२श-संख्या

## मतिमञ्जरी

वर्षसमाप्तिः—मान्याः ! पारिषदाः अद्य किल समाप्तिमभ्युपैति संस्कृतपरिषत्पत्रिकाया दशम संवत्सर इति विदितमेवेदं श्रीमताम्। अस्याश्च कालकलाया क्रियन्तो विपर्ययाः संसारोरसि क्रीडन्तः कान् कान् प्राणिनः केन केनावस्थान्तरेण व्यवास्थापयन्निति निःशेषविज्ञातारः परोक्षा एवेति न तत्रास्माकमाग्रहः, केवलमात्मीनान् कांश्चन विपर्ययान् आवेदयितुमुद्युक्ताः स्म ।

अस्मिन् संवत्सरे कर्मपरिचालकानां केषाञ्चन पारिवारिकविपत्पातेन तथा प्रधानपरिचालकाना परिषदः जीवनभूताना महनीयचरिताना परिषदुन्नतिमेव जीवनमहाव्रतं कृतवता पशुपतिनाथशास्त्रिणाम् अकाले परलोकप्रयाणेन अनतिक्रान्तशैशव। परिषत् कीदृशं शोकविकलतामासादितवती तत्कालमलेन वचसा वर्णयितुम् जीव खलु भाविनं विषयं यथा यथा सङ्कल्पयति, न तथा तथैव तस्य परिपूर्त्तिरिति द्रष्टव्यं बहुशः । वर्त्तमानवर्षप्रारम्भे वयमपि पत्रिकाया उन्नतये यथा यथा संकल्पं कृतवन्तः, प्रायेण सर्व एव स सङ्कल्पो दौर्भाग्यादस्माकं वैफल्यमुरीचकारेति सदुःखमावेदयामः। यथाकालमव-

तरणमस्या पत्रिकाया असाधारणो विशेष इति सगर्वमुल्लापूर्वमस्माभिः, अन्तरा च भाग्यवैषम्येण सुरसरस्वत्या वितथमेव जातमिति सङ्कल्प-भ्रंशाद् अकमायमाना वय जिह्मो वाङ्मात्रेणापि दोषक्षालनं कर्तुम्। भवतु, अलमनिमात्रमात्मदैन्यं प्रकटय्य विदितवेदितव्येषु। यदस्मिन् संवत्सरे सञ्जातमस्माकमपराधसहस्रं तत्र दैवमपराध्यति न पुरुषकार इति अनुकम्पया श्रीमन्तः क्षमन्तामित्येव नः प्राप्तकालमावेदनम्।

नह्यतिक्रमितुमभिलाषवन्तोऽप्यलं दैवप्रतिबन्धं जनिमन्तः; तत् यदि भाविनि वत्सरे दैवेन वय प्रतिरुद्धा न भवेम, तदा यथायथमस्याः सौष्ठवादिसम्पत्तये यत्नमाचरेम इति दैवश्रवणभयान्नीचैःकारं श्रीमत्सु विज्ञापयामः।

ते चात्र सुतरामत्र प्रशंसामर्हन्ति येषामसीमकरुणापूर्णकटाक्ष-पातो द्रविणसाहाय्येन श्रीमतीमिमां परिपोष्य तावन्तं कालं जीवन-मस्या अनुकूलयति, येषाञ्च सुरसगभीरान् निबन्धानाददाना प्रति-मासमियं वाचकसचिवानां समीपमुपगत्य परमप्रीतिसमुत्पादनेन प्रणयभूमिः सञ्जाता विपश्चिताम्।

प्रतिदिनमेषा क्षुधिता सम्प्रार्थयते ललितललितानि भोज्यानि, अभ्यस्ता चेय चिराय तथाविधेष्वेव भोज्येष्विति अस्मात्प्रजरोगोत्पाद-भिया न यथाप्राप्तभोज्यसम्भारेणाप्येना पुपुष्मः। तदस्याः प्रार्थनानु-रूपभोज्यनिष्पादनेन कुर्वन्तु भवन्तः परिपुष्टामिमाम्, मा नाम चिरोचितभोज्यविरहेण क्षुधितेयं पञ्चत्वमुपयायादिति स्वल्पेन वचसा वयमभीप्सितमात्मनीनं प्रतिपादयामः।

## व्याघ्राचार्य्यः—बृहल्लाङ्गूलः *

[ निबन्धकः—वि-सु-श्रीरामस्वामिशास्त्री ]

श्लोकैर्वर्णयितुं समीहितवतः शार्दूलविक्रीडितं
सर्वत्र परविद्ययाञ्चिततनुः शार्दूलपादेहितः ।
गौष्पत्यादिबुधार्चितो मम मतिं शार्दूलपुर्यां नटन्
देवः स्वर्णसभापतिर्वितनुयाच्छार्दूलकृत्तिं धरन् ॥ १

गङ्गाम्भःपरिपोषिते शुभतमे वङ्गाख्यदेशे वने
तुङ्गानोकहवीरुदादिलसिते सगम्य सम्मेलिते ।
शार्दूलैः स्वहितैषिभिः सुसमजे वृत्तन्तु यत्प्रस्तुतं
वाग्देवीं प्रणतेन सम्प्रति मया संक्षिप्य तद्वर्ण्यते ॥ २

नानारण्यसमागतैः सकुतुकैः सभ्यैः कृतालोचनैः
साभापत्यपदे न्ययुज्यत मुदा स्थूलोदराख्यो वृहन् ।
शार्दूलः परिवेष्ट्य पुच्छमतुलं तस्मिन्निविष्टस्तदा
सम्बोध्य प्रियबान्धवान् परिषदः कार्य्यं समारब्धवान् ॥ ३

सोदर्या शृणुताधुना मम वचो दत्तावधानाः परं
कालेऽस्मिन् पशवोऽपि सन्ति विबुधाः क्षुद्राश्च शाखामृगाः ।
व्याघ्राणान्तु कुले प्रमादवशतो विद्या विलुप्ताधुना
सम्मेल्य प्रयतामहै पुनरपि स्यामाग्रगण्या यथा ॥ ४

अत्रास्मिन् समजे समस्ति हि बृहल्लाङ्गूलनामा गुरु-
र्देशेषु भ्रमणादवाप्तधिषणो भक्त्या मया प्रार्थितः ।
अस्माकं हितकाम्यया स तु महानङ्गीकरोत्यादरा-
न्मर्त्यानां विषयेषु किञ्चिदधुना व्याख्यातुमेव स्वयम् ॥ ५

---

कविसम्राजो वङ्किमचन्द्रस्य प्रबन्धमवलम्ब्य लिखित ।

सर्वः सभ्यगणोऽन्वमोदत तदा लाङ्गूलघातारवैः
प्रान्तेऽस्मिन् चटचड्रवे स तु गुरुः सभ्यैर्भृशं मानितः ।
धुन्वन् पुच्छमितस्ततो बहुतरं नत्वा सभां तत्पतिं
पान्थानां भयदायकैः स्वरचयैर्व्याख्यातुमारब्धवान् ॥ ६
भद्राः सभ्यवरा वदामि भवतां विज्ञानहेतोर्भृशं
दृष्टं यत्तु मया मनुष्यचरितं चित्रं हि तद्वर्ण्यते ।
छिद्रं नैव तु विद्यते वचसि मे सर्वेऽवधत्त क्षणं
क्षुद्रो मर्त्यगणो नितान्तमुखरः प्रज्ञाविहीनो लघुः ॥ ७
भ्रामं भ्राममितस्ततो वनमगां पुर्याः समीपं गतः
तत्रैकं रमणीयवंशरचितं सन्मण्डपं प्रैक्षिषि ।
मध्ये बद्धमजार्भकञ्च पृथुकं नृत्यन्तमत्यादरात्
भक्ष्याशा वशगोऽविशं सकुतुकं द्वारं पिनद्धं तदा ॥ ८
भुक्त्वा मांसलमर्भकं रुचिकरं गन्तुं बहिः प्रावृतं
रन्ध्रान्वेषणतत्परस्य नितरां व्यर्थोऽभवन्मे श्रमः ।
तत्रैवागतवान्मनुष्यनिचयो बद्धादरो भक्तितः
पत्नीसोदरबन्धुवर्गसहितः सन्दर्शनार्थं मम ॥ ९
स्कन्धे वैणवमण्डपेन सहितं धृत्वा तदा गौरवा-
त्सङ्घीभूय जना अवाहुरखिलाः कृत्वा च कोलाहलम् ।
पश्चान्मां शकटे वृषद्वययुते संरोप्य बद्धादरा
प्रासादं रुचिरं शिलोच्चयसमं भक्त्या जवादानयन् ॥ १०
मध्ये मार्गमितस्ततोऽपि विकिरन् दृष्टिं प्रसादावहां
व्यद्योते वरवेणुमण्डपगतो दंष्ट्राप्रभाभासुरः ।
पौरान् जानपदान् कुतूहलयुतान् सेवार्थमभ्यागतान्
सन्धिन्वन् दरमन्दहासनिचयैश्चन्द्रश्चकोरानिव ॥ ११
श्रीमान् गेहपतिस्तु मां वनपतिं दृष्ट्वा निरागाद् बहिः
सम्भाष्यैव मुदा प्रसन्नवदनः पृष्ट्वा पुनः स्वागतम् ।

आदिश्चनिजसेवकान् सपदि मा नेतु गृहाभ्यन्तरं
भृत्या मण्डपसङ्गत द्रुततर भक्त्यानयन्नत्वरा । १२
वासार्थं मम लोहदण्डनिचित रम्य गृहं कारितं
सत्काराय च सेवको निर्यमितो दक्षो विधेयो युवा।
मन्नेह विमलैर्जलैः प्रतिदिनं संशोध्य सप्रश्रयं
सद्यो मारितगोवृषादिपललैर्मह्यं सपर्या व्यधात् ॥ १३
कश्चित्कालमवाप्समायसगृहे भक्त्या समाराधितः
स्मार स्मारमथाटवीं स्वजननीमश्रूणि मुञ्चाश्रदम्।
आहारोऽपि न रोचते स्म मधुरः ( सम्पूर्णतुन्दाय मे )
निद्रा नैव समागता व्यमनिनः ( सुप्तप्रबुद्धस्य च ) ॥ १४
ज्ञात्वा वा मम कामना बलवती भक्त्या प्रमादेन वा
भृत्यो मे गृहशोधनात्परमगात द्वाराण्यपावृत्य वै।
मध्याह्ने समये मनुष्यरहित प्राप्तावकाशो मुदा
धावं धावमिहागमं सरभम द्रष्टुं स्वमित्रावलीः ॥ १५
व्याघ्र मध्यपशुः परस्परहितं नित्यं करोत्यादरात्
मर्त्योऽसभ्यपशुर्मिथ कलहकृत् संबाधनं स्पर्धते।
ज्ञानं नैव हि विद्यतेऽस्य कुपशोश्चेत्यसौ भक्षित
च्छागान् गा महिषान् खरांश्च शुनकानश्वांश्च शाखामृगान् ॥१६
मातु क्रोडभव धयन्ति हि पयः सर्वे मृगाः शैशवे
क्षुद्रा मर्त्यगणाः पिबन्ति सतत धेनोर्महिष्याः पय ।
एतेषां मतिवैभवे च समता दृष्ट्वा महिष्या पुन-
र्मन्ये मानुषवंश एष समभूत धेन्वा महिष्या ध्रुवम् ॥ १७
रक्षार्थे स्वतनोर्नरस्य निशिता दंष्ट्रा नखाः सन्ति नो
शृङ्गाद्यायुधसङ्कुतो न स पुनः शक्तश्च नो धावितुम्।
वेधा मन्दमति किमर्थमसृजन्क्षुद्र पशुं दुर्बलं
प्रश्नास्यार्थमहं न किञ्चिदपरं शार्दूलसेवां विना ॥ १८

शास्त्रज्ञाः प्रवदन्ति तत्त्वनिपुणाः कालक्रमेणाखिलो
जन्तुः सावयवः प्रकृष्टपशुना तुल्यो भवत्यन्ततः ।
तस्मान्मर्त्यपशुर्द्विपाज्जडमतिः पुच्छादिभिः सङ्गतः
शाखासञ्चरणक्षमः प्रथमतः कोशो भवेन्निश्चयम् ॥ १९
कश्चिद्ग्राम्ययुवा यदा सहचरीं सप्रेम सङ्गच्छते
कार्य्याधीनममुं विवाहविषयं नैमित्तिकं ब्रूमहे ।
आजन्मावधि कार्य्यते परिणयो मूर्ख्यैर्यदा मानवै-
र्नित्यान्तां कथयन्ति पण्डितवराः वैवाहिकीं प्रक्रियाम् ॥ २०
धान्येषु द्रविणेषु लोलुपतमः कुक्षिम्भरिर्वञ्चको
मूर्खो मर्त्यपशुः पुरोहित इति क्षुद्रैर्भृशं मानितः ।
मध्येऽसौ वरकन्ययोर्वदति चेद्वाक्यं किमप्यादरात्
उद्वाहोऽथ समाप्यते नृपशुभिर्नित्यः सकोलाहलम् ॥ २१
वाक्यं तत्कथयन्ति मर्त्यपशवो मन्त्रं हि वैवाहिकं
मन्त्रार्थं प्रकटीकरोमि भवतां सभ्याग्रगाणां पुरः ।
जामाता वदति स्त्रियं तव पदे दासो भवेयं ध्रुवं
भक्ष्यान्वेषपरिश्रमे मम भरस्त्वय्यस्तु तद्रक्षणे ॥ २२
कन्या च प्रतिवक्त्यमुं मृदुपदैरङ्गीकरोम्यादरात्
सेवायै पदपद्मयोर्मम पुनर्दास्यामि तुभ्यं क्षणम् ।
दासस्त्वं कुरु सावधानमखिलं यद्यत् मे रोचते
नो चेत्त्वां प्रहरामि पादहतिभिस्तन्मे मनो निश्चितम् ॥ २३
सभ्या ये पशुवृत्तयो नरवरा अस्मादृशाः शिक्षिता-
स्ते सर्वेऽपि समन्ततः परिणयं कुर्वन्ति नैमित्तिकम् ।
सर्वस्यापि हि दृश्यते नरपशोर्नैमित्तिकेऽत्यादरः
किन्त्वस्मात् कितवात्पुरोहितपशोर्भीत्यैव सङ्गोप्यते ॥ २४
मुद्रोद्वाह इति प्रथामुपगतो ह्यन्योऽस्ति नैमित्तिको
मुद्राभिर्मनुजः करावभिमृशेन्नार्य्या रहस्ये यदि ।

तत्रैवोपयमः परस्परकृतो निर्वर्त्यते मोदत-
स्तस्मिन्नेव नृणां महत्यभिरुचिः सन्दृश्यतेऽस्मादृशैः ॥ २५
मुद्रा केति निबोधयामि भवता यद्यस्ति कौतूहलं
मुद्रैव प्रियदेवता नरपशोः सर्वेष्टसन्दायिनी ।
देवीं तां सकला नरा ह्यतितरां ध्यायन्ति नक्तन्दिवं
तत्सन्दर्शनमाप्तुमेव रभसान्नित्यं यतन्ते च ते ॥ २६
वृत्ताकारतया च तत्प्रतिकृतिः स्वर्णेन रौप्येण वा
ताम्रेणोत शुभा प्रयत्नवशतो मुद्राप्यते सादरम् ।
लोष्टैर्दारुमयैर्जनास्तु फलकैर्निर्मान्ति देवालयं
कौमैश्चर्मभिरादरादिदयते तस्याश्च सिंहासनम् ॥ २७
देव्येषाश्ममयी सदा हितकरी यन्मन्दिरे राजते
तद्गेहं न कदापि मुञ्चति जनः सन्ताडितोऽपि ध्रुवम् ।
अप्राज्ञोऽपि स गण्यते ह्यतितरां धीमान् महापण्डितो
विद्वानप्यवमन्यते स तु नरो यन्मन्दिरे नास्त्यसौ ॥ २८
तस्या लोभवशात्परस्परवधं कुर्वन्ति सर्वे जना
इत्येव सुविचार्य मृत्युकारिणीं मुद्रान्तु नेहानयम् ।
मर्त्यानामनुशिक्षणं तदधुना कर्तव्यमस्मद्विधै-
र्बुध्येरन्न बुधाः स्वधर्म इति ते व्याघ्राय देहार्पणम् ॥ २९
वक्ता चेति समापयन्नरकथामत्यन्तमोदावहाम्
आराद्धावितमेषवृन्दनिचयं सन्दृश्य नेता तदा ।
वेगेनान्वगमत् तमेव महता सन्त्यज्य सामाजिकान्
भक्ष्यान्वेषणतत्पराः पुनरमी सभ्या ह्यधावन् द्रुतम् ॥ ३०
शार्दूलानां सभायामघटत चरितं श्लाघनीयं रसज्ञै-
र्मन्दप्रज्ञेन यत्नात् कथमपि रचितान् तद्धितत्यै मयाद्य ।
श्लोकान् कांश्चिन्नदोषान् गुणलवरहितान् साधुवृत्ते निबद्धान्
दोषज्ञाः साधुवृत्ता निजसदयदृशा वीक्ष्य तुष्टा भवेयुः ॥ ३१

# आयुर्व्वेद प्रभावः *

[ निबन्धिका—श्रीमती गौरीदेवी आयुर्व्वेदसरस्वती भिषगाचार्य्या ]

विद्याः समस्तास्तव देवि ! भेदाः
स्त्रियः समस्ताः सकला जगत्सु ।
त्वयैकया पूरितमम्बयैतत्
का ते स्तुतिः स्तव्यपरा परोक्तिः ।
सर्व्वस्य बुद्धिरूपेण जनस्य हृदि संस्थिते ।
स्वर्गापवर्गदे देवि ! नारायणि नमोऽस्तु ते ॥
अरुन्धतीं महाभागां सावित्रीं परमां सतीम् ।
अहल्यां द्रौपदीं सीतां भूयो भूयो नमाम्यहम् ॥

नमः सभाभ्यः सभापतिभ्यश्च, मान्याः सभासदः, विदितमिदं तत्त्व भवितथं यदायुर्व्वेदो नाम प्रजाहितहेतो प्रचारितो भगवता धन्वन्तरिणा पुनर्वसुना च । यदुक्तं "तत प्रजापतिरधिजगे तस्मादश्विनौ, अश्विभ्यामिन्द्र इन्द्रादहं मया त्विह प्रदेयमर्थिभ्यः प्रजाहितहेतोः" अपरञ्च—"अथ मैत्रीपरः पुण्यमायुर्व्वेदं पुनर्वसुः शिष्येभ्यो दत्तवान् षड्भ्यः सर्व्वभूतानुकम्पया" इत्थं वेदस्यास्य विश्वजनीनवृत्तितयापि प्रचारितो भारतीयैर्भारते इत्यत्र सन्देहलेशोऽपि नास्ति । तदुक्तं—

"विघ्नीभूता यदा रोगाः प्रादुर्भूताः शरीरिणाम् ।
तपोपवासाध्ययनब्रह्म चर्य्यव्रतायुषाम् ॥
तदा भूतेष्वनुक्रोशं पुरस्कृत्य महर्षयः ।
समेता पुण्यकर्म्माणः पार्श्वे हिमवतः शुभे" ॥

अनेन स्पष्टमिदं प्रतीयते यत् ब्रह्मचर्य्यव्रतादिपरायणास्त्रिकालज्ञा महर्षय एव प्रवर्त्तयितारः परमर्हिषिणोऽथर्व्ववेदोपाङ्गस्य वेद-

---

* त्राह्मणायुर्व्वेदसभाया माघमासीयाधिवेशने पठितोऽयं प्रबन्धः ।

स्थास्य। नह्यस्योपलभ्यते नियतः प्रचारकालः। परमिदमविसंवादि, यदार्षयुग एवायं प्रकाशमलभत प्रकृतिषु। दृश्यते हि वेदेऽस्मिन्नध्ययनाध्यापनशैली रचनाशैली च भारतीयार्य्यजनोचिते एव, समुपलभ्यतेऽत्र मनःशरीरविशोधनक्षमो महाप्रभावो ब्रह्मचर्य्योपदेशः, वाङ्मनःशरीरकुशलं दैनन्दिनं कर्म्मजातञ्च। अभारतीयं चात्र किञ्चिदपि द्रव्यजातं नाभिसम्बद्धं, सम्बद्धञ्च सर्व्वं भारतवर्षसुलभं हिमवद्विन्ध्याद्रिप्रभवं भौममौद्भिदञ्च भेषजजातम्। भेषजानि हि देशकालपुरुषापेक्ष्याणि तत्तद्विषयनियतशक्तिकानि च भवन्ति, दृश्यते हि पाश्चात्या अन्ये च शीतप्रधानदेशवास्तव्याः सततमुष्णावरणा उष्णवीर्य्यद्रव्यसेविनश्च भवन्ति, आजन्म सात्म्यतया तान्यावरणानि भोजनानि च न तेषां किञ्चिदपि विघ्नमापादयन्ति, अधिकं तु आरोग्येण दीर्घायुषा च योजयन्ति तान्। एवमेतत् शीताभिसात्म्यानामुष्णाभिप्रतिकारिणाञ्च तेषामुष्णरसवीर्य्यविपाकप्रभावपरिपुष्टाना शरीराणि बलवन्ति क्लेशसहानि तीक्ष्णौषधक्षमाणि च भवन्ति। तदितरदेशीया विविधकालर्त्तुधर्म्मभाजो नियतपरिवर्त्तित-शरीरभाव-विशेषा एकेनैव परमकारुणिकेन विश्वसृजा सृज्यमाना अपि न पूर्व्वोक्त-पुरुषसाधारणा भवन्ति।

का पुनरेतद्देशीयानां कथा, पाश्चात्त्यैरपि बहुकालत एतद्देशवासिभिः स्पष्टतया एतत् स्वीक्रियते यद्यद्वस्तु इंलण्डप्रभृतिदेशे स्वास्थ्यरक्षणाय सम्पद्यते, अस्मिन् देशे तत्तद्वस्तु स्वास्थ्यविघाताय प्रतिपद्यते इति। इतः पूर्वम् इयुरोपीयप्रचारित "इण्डियन् मेडिकेल् गेजेट"-पत्रिकायां कश्चित् सारगर्भ प्रबन्धः प्रकाशितः, तत्र तैः स्पष्टतया स्वीकृतमेतत् "यद्भारतवर्षसदृशोष्णप्रधानदेशे युरोपीयानाम् उष्णवीर्य्य-गव्यमांससेवनं न स्वास्थ्यानुकूल" इत्यं यदि शीतप्रधानदेशीयानाम् उष्णाहारविहारोचितशरीराणामपि अस्मिन् देशे उष्णोपचारः परिहरणीयो भवेत, तदा एतद्देशीयाना तद्विधोपचार-परिवर्जने सन्देहलेशोऽपि न भवितुमर्हति। आहारविहारवदौषधेऽपि एषैव युक्तिः

सङ्कुच्छते। भेषजानि हि काल-प्रकृति सात्म्य-देश-पुरुष विशेषापेक्षाणि भवन्ति। दृश्यते हि यस्य भेषजस्य यादृशी मात्रा बलवति पुरुषे प्रयुज्यते, तस्य भेषजस्य तादृशी मात्रा बाले दुर्बले गर्भिण्यां च नोपयुज्यते। द्रव्येऽपि दृश्यते सात्म्यप्रकृत्यादिविशेषेण उपयोगविशेषः। विषादीनि हि तीक्ष्णोष्णवीर्य्यौषधानि रोगविशेषे हिततमान्यपि नोप यच्छन्ति बालवृद्धभीरुदुर्बलेभ्यः कुशलाश्चिकित्सकाः। सृष्टिविषयेऽपि सर्व्वथा परिदृश्यते देशकालादिभेदेन विश्वविधातुः सृष्टिव्यतिक्रमः, जलस्य हि मधुररसस्य केषाञ्चिन्मते अव्यक्तरसस्य वा अनुभूयते समुद्रे लवणो रसः, दार्शनिकमते शुक्लस्यापि तस्य दृश्यते यमुनादौ स्थानमहिम्ना नीलादिवर्णता। अपि च आम्रफले कुत्रचिदम्लता कुत्रचिच्च मधुरता, कन्दमूलशाखादीनां कुत्रचिदुत्पत्तिबाहुल्यं कुत्रचिच्च तद्वैपरित्यं, यवगोधूमशस्यादीना कुत्रचिदुत्पत्तिः कुत्रचिद्वानुत्पत्तिः, आमलक्यादिफलानां हिमालयादिपार्व्वत्यप्रदेशे आर्य्यावर्त्तादौ जाङ्गलभूमौ च बृहत्त्वम्, आनुपादि-समतलभूमौ च तेषां ह्रस्वत्वं, नारिकेलफलस्य समुद्रोपकुलप्रदेशे लवणाक्ते वानुपभूमौ जन्माधिक्य, तद्विपरितजाङ्गलादिप्रदेशे तेषां सर्व्वथानुत्पत्तिः ; एतत्सर्व्वं स्थानमहिम्नैव संघटते। पुरुषविषयेऽपि दृश्यते केचित् समकारणसत्वेऽपि कावुलादिप्रदेशीया बलवन्तो बृहच्छरीराः, अपरे च प्रदेशविशेषवासिनो निर्व्वलाः क्षीणशरीराश्च ; केचित् श्यामादिपार्व्वत्यप्रदेशवास्तव्याः तद्देशीयजलवाय्वादिप्रभावेण आममांसान्यपि अभ्यवहरन्तः सुखजरणक्षमा बलोपचयसम्पन्नाश्च भवन्ति। अपरे च पक्वान्यपि विविध-दीपन-पाचन-द्रव्यसंस्कृतान्यपि गुणतो लघून्यपि मांसानि यथाकालं जरयितुमक्षमा दुःखमेव समश्नुवते नितरां, एवंविधाभिः बहुभिर्युक्तिभिः सात्म्यकालप्रकृतिपुरुषबलशरीर-देशविशेषानवेक्ष्यावेक्ष्य बुद्ध्या तत्पुरुषोपयोगिन्येव आहारविहारभेषजादीनि प्रविचारयन्ति कुशलाः।

परमेतत् दुःखावहं, यत्साम्प्रतं भारतवर्षे एतद्देशीयाहारविचार विहारादीना भेषजादीनाञ्च महानुपचारव्यामोह परिलक्ष्यते। अधुना नाभिनन्दन्ति प्रायशो भारतीया ऋषिगणानुमोदितमाचारजातं, न गणयन्ति शिष्टानुमोदितं शास्त्र, न स्वीकुर्व्वन्ति चाप्तवचनानि।

एषु केचन भारतीयाः "पूर्व्वाचार्य्याः भ्रान्तविश्वाससम्पन्ना आत्मप्रतिष्ठास्थापनपरायणा अनुसन्धित्साविमुखाश्च" इत्येवमादिभिः शब्दाडम्बरैः अधिक्षिपन्ति नियतं पूर्व्वाचार्य्यान्। अस्तु, नास्माकं लेखवाहुल्यं परितोषाय भवति विदुषां, प्रभवन्तु तत्र सदसद्विवेकवन्तः श्रीमन्त सामाजिकमहोदयाः। वयम् अस्मिन् प्रबन्धे आयुर्व्वेदशास्त्रे अधुना भारतीयाना यादृक् रुचिवैपरीत्यं जातं तदवतारयामः।

विदितमत्रभवता यदायुर्व्वेदचिकित्साया भारतीयानां यादृशो श्रद्धा पुरासीदधुना तादृशी न परिलक्ष्यते, किमेतत् पाश्चात्त्यशिक्षायाः फलम्? उत पाश्चात्त्यराजप्रभावस्य? अस्ति तत्रास्माकं महान् विकल्पः, यदि पाश्चात्त्यशिक्षायाः फलमेतत् स्वीक्रियते तर्हि पाश्चात्त्यशिक्षाप्रधाने अस्मिन् भारतवर्षे पाश्चात्त्यशिक्षाया प्रवलप्रतियोगिताया सत्याम् आयुर्व्वेदचिकित्साया नामापि न श्रूयेत, कथं वा अधिगतपाश्चात्त्यशिक्षा अपि बहव सहृदया भारतीया यूरोपीयाश्च आयुर्व्वेदीयचिकित्सामनुमन्येरन्, कथं वानधिगतपाश्चात्त्यशिक्षा अपि भारतीयाः पाश्चात्त्यचिकित्सायामास्थां स्थापयन्ति महतीम। पाश्चात्त्यराजप्रभावस्यापि फलमेतत् चेत्यात्तदपि स्वीकर्त्तुं नोत्सहामहे, पाश्चात्त्यराजो हि सार्द्धशताधिकवत्सरकालम् अत्र विस्तारयति स्वप्रभावं, परं तु तदानीमपि आसीत् प्रसिद्धायुर्व्वेदचिकित्सकाना महानभ्युदय.। नह्यस्मदीयो राजा राजपुरुषो वायुर्व्वेदे आत्मनः किञ्चिदपि प्रभुत्व प्रकटयति, न वा निवारयति देशीयचिकित्साध्यवसायम्, अधिकन्तु विहारादिप्रदेशे आयुर्व्वेदपरीक्षाप्रणालीं प्रवर्त्तयन् आयुर्व्वेदविद्यालयं दातव्यचिकित्सालयञ्च संस्थापयन् परमां महानुभूतिमिव प्रदर्शयति।

स्यादेतत्, वयं तु भारतीयानामनुकरणप्रियत्वमविमृष्यकारित्वं चात्र-कारणमनुमन्यामहे। सन्ति लोके सुयोगजल्पाः स्वोद्भावितसिद्धान्तसत्य-निश्चयाः येऽसत्येनैव सत्यमनुसन्धित्सवः संक्षोभयन्ति सरलाना चेतांसि। सम्प्रति हि साम्प्रतिकाः केचन भारतीया आधुनिकचिकित्सापद्धतिं स्वर्ग्यां यशस्याञ्च मन्यमानाः तथैव प्राधान्येन विलुप्तान्यायुर्वेदाङ्गानि सम्पूरयितुं समुपदिशन्ति, भाषन्ते च ते "त्रिदोषान्तर्गता आयुर्वेदीय-चिकित्सा न विज्ञानसम्मता" इति। अत्र ब्रूमः, चिकित्सा खलु सर्वत्रैव व्याधितानां व्याधिपरिमोक्षार्थं, स्वस्थस्य स्वास्थ्यरक्षणार्थञ्च परिदृश्यते; यथाह भगवान् धन्वन्तरिः "इह खल्वायुर्वेदप्रयोजनं व्याध्युपसृष्टानां व्याधिपरिमोक्षः स्वस्थस्य स्वास्थ्यरक्षणं च" तत्र व्याधितानां व्याधि-परिमोक्षार्थमायुर्वेदविद एतानुपायाननुमन्यन्ते तद् यथा—"अना-तुरेण भेषजेनातुरं चिकित्सामः, कृशं दुर्बलमाप्याययामः, स्थूलं मेदस्विनमपतर्पयामः, शीतेनोष्णाभिभूतमुपचरामः, शीताभिभूत-मुष्णेन, न्यूनान् धातून् पूरयाम, व्यतिरिक्तान् ह्रासयामः, तेषां नः तथा कुर्वतां भेषजसमुदायः कान्ततमो भवति" पाश्चात्यचिकित्सका अपि एतानेवोपायान् सर्वत्र चिकित्सायामनुवर्त्तन्ते। तथा कुर्वतां तेषां चिकित्सा यदि वैज्ञानिकी भवेत्, तर्हि कथं तथाविधविधिविहि-ताया आयुर्वेदचिकित्साया अवैज्ञानिकतादोषो नवावतार इति समीक्षाकारिभि लोकचरित्रेक्षणकुशलैरेव विवेचनीयम्।

अथोच्यते आयुर्वेदः अपूर्णः, अङ्गानि चास्य विलुप्तानि, तदर्थं पाश्चात्य-विज्ञानसाहाय्येन आयुर्वेदो विवर्द्धनीयः, इत्येतदपि न विचारसहम्। नहि किञ्चित् पाश्चात्यचिकित्साविज्ञानं सर्वथा पूर्णमस्ति, येनायुर्वेद-स्तस्मात् पूर्णतां लभेत, तथा सति न तावत् जनपदध्वंसकरैः रोगादिभिः व्याधिभिः मनुष्या अकालमृत्युं लभेरन्। लोकायतिकसत्यनिष्ठ-यापि नैकान्तग्राहिणो भवितुमर्हन्ति पाश्चात्यचिकित्साविज्ञाने विज्ञा भारतीयाः। विभिन्नानि हि प्रतिदेशपुरुषप्रकृतीनामवस्थान्तराणि,

यानि प्रतिदेशपुरुषप्रकृतिविशेषोपयोगभाञ्जि भजन्ते भद्राणि, वयमपि—

"श्रेयान् स्वधर्मो विगुणः परधर्मात् स्वनुष्ठितात्।
स्वधर्मे निधनं श्रेयः परधर्मो भयावहः॥"

तथा "सहजं कर्म कौन्तेय! सदोषमपि न त्यजेत्।
सर्वारम्भा हि दोषेण धूमेनाग्निरिवावृताः॥"

इति भगवद्वाक्यं प्रमाणीकृत्य पुनः पुनः प्रार्थयामहे यत्, काममनुकुर्वन्तु श्रीमन्तोऽनुकरणप्रियाः। परं न कथमपि भवद्भिः विलोपनीया विशोधनीया वा पाश्चात्यप्रज्ञया अवितर्कस्मृतिप्रविभागविदाम् आप्तानां इहामुष्मिंश्च लोके हिततमा चिकित्सापद्धतिः। असंशयं हि स्वल्पाप्तवचनं भवति। यदयाहरति भगवान् पतञ्जलिः—

"रजस्तमोभ्या निर्मुक्तास्तपोज्ञानबलेन ये।
येषां त्रिकालममलं ज्ञानमव्याहतं सदा॥
आप्ताः शिष्टा विबुधास्ते तेषां वाक्यमसंशयम्।
सत्यं वक्ष्यन्ति ते कस्मादसत्यं नीरजस्तमाः॥"

इदञ्चेदञ्च नः प्रत्यक्षं यदापाततः प्रतिपत्तिकराणि पाश्चात्यौषधानि रोगान् प्रशमयन्त्यपि प्रायो रोगान्तराण्यपि उत्पादयन्ति। सत्यमेतत् यदधुनातनैराविस्कृता 'इञ्जेक्शना'ख्या काचनाभिनवा चिकित्सा, यां खलु महाभ्युदयां महाफलाञ्च मन्यमाना नवीना आयुर्वेदचिकित्सका अपि आयुर्वेदस्य विश्वचिकित्साज्ञानाकरत्वसिद्ध्यर्थं रसवैद्यानां "सूचिकाभरणरस"-दृष्टान्तमुपन्यस्य आयुर्वेदसम्मता व्याहरन्ति। परं लभ्यमानायुर्वेदतन्त्रपर्य्यालोचनपरम्परया नैवम्भूतां चिकित्सामायुर्वेदसम्मता व्याहरन्ति कुशला।

'इञ्जेक्शना'ख्यया हि प्रक्रियया प्रायः शिराभिः प्रविचार्य्यमाणमौषधं शोणितवेगसम्पर्कात् सर्वशरीरं व्याप्नुवत् आश्वेव शुभाशुभाभिनिर्वृत्तिप्रत्ययभूतं भवति। रोगं प्रशमयच्च प्रायो रोगान्तराण्यपि

उत्पादयति। इत्थंभूतो भैषज्यप्रयोगः नायुर्वेदशास्त्रानुमतः। यदुक्तं चरके—

"तदात्वे चानुबन्धे च यस्य स्यादशुभं फलम्।
कर्म्मणस्तन्न शंसन्ति विज्ञाः केऽपि चिकित्सकाः॥"

अपरं च "प्रयोगः शमयेद्व्याधिं योऽन्यमन्यमुदीरयेत्।
नासौ विशुद्धः शुद्धस्तु शमयेद् यो न कोपयेत्॥"

मान्याः सभासदः यथामति मया प्रतिपादितोऽयं प्रबन्धः, अत्र च गुणदोषविचारे श्रीमन्तो विबुधा एव प्रमाणम्।

---

संस्कृतसाहित्यपरिषदन्यतरसम्पादकपशुपतिनाथशास्त्रिणां महाप्रयाणे परिषदः

## शोकाश्रुधारा

शशधर! करधारां किं सुधा हन्त! दत्से
मलयपवन! नूनं व्यर्थ एवाद्य वासि।
कुसुम! तव विचित्रं हास्यमास्तां विदूरे
बत पशुपतिनाथो देवभूमिं प्रयातः॥

पशुपते! क्व गतोऽसि महामते! परिषदं परिहाय चिरप्रियाम्।
सपदि सा विरहेण तवाकुला विलपति प्रतिकर्म्मणि दुर्ब्बला॥
प्रतिदिशं प्रथिता यदियं शुभा परिषदद्य निदानमितो भवान्।
परिषदः सुचिरं शुभचिन्तया निजविपत्तिरमानि तृण त्वया॥
प्रतिपदं तव सौम्यतमाकृतिः सुमधुरं चरितं प्रियभाषितम्।
सविनयव्यवहारगतिस्तथा स्मृतिपथे प्रचरन्ति महाशुचे॥
तव विरुद्धदलद्वययोजने कुशलता विदिता जगदुत्तरा।
सपदि यौथविधावुपयोगितां वहति या क्व नु साद्य समीक्ष्यताम्॥
विरहशोककृशास्तव बान्धवाः परिसरन्तु कमाश्रयपादपम्।
प्रियसशोकमपि क्षपयन् शुचा किमिव नाद्य सुकोमल! खिद्यसे॥

प्रियसुताः स्वजनाः सुहृदस्तथा तव वियोगमकालसमुद्भवम् ।
समुपगत्य कथं धृतिमात्मना निदधता हृदि शोकसमाकुलाः ॥
विषमसंस्मृतिसञ्चरणाच्चमा सुतगणास्तव शैशवभागिनः ।
स्वजनपालनचिन्तनविह्वलाः प्रविलपन्ति भजन्ति च मूर्च्छितम् ॥
अविरताविधुरां जननीं निजाम् अनियमेन विहाय शुचा कृशाम् ।
नयविदां प्रथमस्य तवाधुना त्रिदिववाससुखं न हि युज्यते ॥
परिषदो विहता शुभभावना गलितपुण्यमदा सुरभारती ।
सुचरितं क्व गतं शरणच्युतं जगदिदं तिमिरेण समावृतम् ॥
परिषदं स्वसुतामिव साधयन् बहुगुणा परिपुष्टकलेवराम् ।
सुजनहस्तगतामविलोकयन् अपि कथं त्रिदिवे रतिमीप्ससे ॥
तव कृतिः सुतरामसमापिता वद कमेत्य समाप्तिमुपाश्रयेत् ।
अमरसन्निधिमेत्य सुरालये परिषदम्प्रति देहि शुभाशिषम् ॥
परिजनेषु धृतिं तनु सन्ततं शुभपथे भवता परिदर्शिते ।
सुचिरमेव यथा विहरन्तु ते हृदयशोकमपास्य समुन्नताः ॥

परिषदमतिदीना त्वद्वियोगाश्रुलीनां
कथमिव वयमेते सान्त्वयामो विमुग्धाम् ।
सुरपुरमुपयातो देवभूयं गतस्त्वं
यदि वितरसि शान्तिं सान्त्वितेयं तदा स्यात् ॥

---

## पशुपतिनाथशास्त्रिणः प्रयाणे शोकविलापः

[ निबन्धकः—श्रीयोगीन्द्रमोहनविद्यारत्नः ]

हा धिग् विधे ! कतिविध तव निर्दयत्वं
सन्तापकारि जगताऽस्ति विचित्रवीर्यम् ।
तन्निर्णये न हि नरस्य मतिः समर्था
धातापि मन्थरमतिः परिलक्ष्यतेऽत्र ॥ १

मन्ये जनस्य नयने नियतं यदि स्या-
दश्रुप्रवाहनिवहः प्रियनाशजातः ।
आषाढवारिदसमप्रचुरप्रवर्षी
नार्द्रं तु तेन हृदयं तव जातु किञ्चित् ॥ २

हा-हा-रवैर्मुखरिता धरणी समन्तात्
कर्णौ न तेन बधिरौ तव नित्यकृत्ये ।
दृष्टिर्न तेऽश्रुविकला करुणाच्च दृश्यात्
कर्त्तव्यमात्रशरणस्त्वमहो कठोर ॥ ३

सर्व्वस्य दृष्टिसरणिं समतीत्य तिष्ठन्
यद्रोचते प्रकुरुषे न जनैर्निवार्य्यः ।
अन्यैरलक्ष्यतनुता ननु चातुरीयं
वन्ध्यान्यथा तव फलप्रसवेऽभविष्यत् ॥ ४

शिक्षासभागृहशिखामलरत्नराजि-
ज्योतिः प्रदीप्तवसुधं क्रमशः प्रभास्यत् ।
एकं हि रत्नमतुलं स्खलितं वताद्य
मध्यन्दिने दिनपतिः सहसास्तमासः ॥ ५

विद्या ददाति विनय वचनं किलेदं
यस्मिन् जने सफलतां सुतरामुपेतम् ।
पीयूषसोदरमभून्ननु यस्य वाक्यं
मूर्त्तिश्च मारवनितापरिताप-दात्री ॥ ६

यस्याः समुन्नतिविधौ त्रिदिवेशवाची
यत्नादिमा परिषदं बहुचिन्तितोऽपि ।
नानामतोनिह जनान् परिमेलयन् यः
संस्थाप्य वृद्धिमनयद् बहुधा सुबुद्धिः ॥

भाषामिमामशरणां किल कालधर्म्मात्
शिक्षागृहाद् बुधगणैरपनीयमानाम् ।

शात्वेव तत्र भवने ननु रचितुं तां
चेष्टां विवेकवशगो विपुलामकार्षीत् ॥ ८
हा धिक् स मृत्युदिवसेऽप्यखिल स्वकार्य्यं
सम्पाद्य कर्म्मठतमः परिषद्गृहेऽस्मान् ।
रात्रौ गिरा मधुरया परितोष्य तद्वत्
योगीव सुस्थवपुषा प्रगतः समाधिम् ॥ ९
प्रातः परेद्यवि वयं बत मन्दभाग्याः
सुप्तोत्थिताः कुलिशपातसमां त्वदीयाम् ।
वार्त्तां कृतान्तहतकेन कृता निशम्य
शोकाम्बुधिं स्वपुरतः परिदृष्टवन्तः ॥ १०
इत्थं नवे वयसि यद् विमलं यशस्ते
व्याप्तं जगद्दिनपतेः करवत्समन्तात् ।
वृद्धेन कोविदवरेण च तन्न लभ्यं
विश्वस्य विस्मयकरं सुधियां यविष्ठ ॥ ११
पाश्चात्यभावगहना नवजातशिक्षा
त्वन्मानसे कृतवती न तथाधिपत्यम् ।
तेन क्षमार्जवदयादिभिरन्वितस्त्वं
स्वं ब्राह्मणान्वयभवं कृतवान् कृतार्थम् ॥ १२
माताद्य ते तव समेन सुतेन हीना
शोकानलैकनिलयं हृदयं कथं नु ।
ज्येष्ठात्मजस्य मरणाद् बहुधा विदीर्णं
वार्द्धक्यतापमलिना परिसान्त्वयेद्वा ॥ १३
स्वर्गे निसर्गसुलभा सुखसन्ततिस्ते
आरब्धकार्य्यमननादसमाप्तकृत्य ।
विघ्नैर्युता न हि भवेदिति ते सखाय-
स्त्वत्कार्य्यचालनविधौ सुतरां यतन्ते ॥ १४

स्वर्गं गतस्य भवतो हृदयं वताद्य
शान्तिं प्रयातु विमला स्वजनच्युतस्य ।
आशीर्व्वचोभिरिह ते विरहार्त्तबन्धून्
शोकाग्निदग्धहृदयान् कुरु शान्तिभाजः ॥ १५

---

## पशुपतितिरोभावः

[ निबन्धकः—श्रीमदक्षयकुमारशास्त्री ]

शास्तीह जगति साम्प्रतमुदारहृदयो विद्वद्वर्य्यः सुहृद्वरः पशुपतिनाथशास्त्रिमहोदयः। यः खलु महात्मा जन्मनाऽलञ्चकार वङ्गीयदाक्षिणात्यवैदिकब्राह्मणकुलम्। यञ्च लोका रूपेण कन्दर्पमिव बोधेन सुरगुरुमिव गाम्भीर्य्येण महोदधिमिव समुन्नततया नगराजं हिमाद्रिमिव मेनिरे। प्राच्याः प्रतीच्याश्च विविधा विद्या अनुगता इव कान्ता मिथो विरोधिता विहाय यमवलम्ब्याऽऽत्मानं कृतार्थं मत्वा विनयं नाम तनयमसुवत। यस्य वाचि मधुरता, मनसि दयाशीलता, कर्म्मणि कुशलता, बुद्धौ निपुणता च सततमवसन्। अहोवत! स हि नाम महान् संसारस्याऽसारता क्षणभङ्गुरताञ्चावेक्ष्य तं तृणाय मत्वा स्वस्वरूपमाससाद। नूनं भगवान् पशुपतिः पशुपरनामधेयाना जीवाना क्लेशपरम्परामपनेतुं महाभूताना स्थिरांशैः स्वात्मनो मानव तनुमसृजत्। नो चेत् कथंकारमस्मिन् कल्मषबहुले कलियुगे एवंविधानामलोकप्रथिताना गुणग्रामाणां सम्भवः स्यात्। शिष्यया नवजीवनदानेनास्य पशुपतित्वमसहायानां विधवानाञ्च रक्षणेन नाथत्वमधिगतशास्त्रत्वेन शास्त्रित्वमित्येतत् सर्वमस्मिन् पुरुषे सम्यगुपपद्यते। हन्त! सुरपतिमिव तं विहायाऽशीतिवर्षदेशीया जननी पतिव्रता पत्नी शिशवश्च नितरा दीनतामापन्नाः। न केवलं तेन स्वकुलं नवा

दाक्षिणात्यवैदिकब्राह्मणसमाजं न वङ्गभूमिं न वा भारतभूमिमलं-चकार, अपि तु स गुणावलीभिः समस्तामेव जगतीमालोकितवान्।

अथ खलु विवादास्पदेषु विषयेषु कतमस्तावत् पन्थोऽवलम्बनीयो भारतीयैरिति पृच्छायां सर्वथा पशुपतिचरितमालोचनीयमिति सर्वै-रस्माभिरकामैर्वक्तुं शक्यते। साम्प्रतमस्मद्देशीया जना: प्रायेण पाश्चा-त्यानां नवं नवं विज्ञानकौशलमवेक्ष्य मुग्धहृदया भारतीयसभ्यताया हेयतामापादयितुं प्रयतन्ते। केचन वराका भारतगौरवमजानन्तो हन्त! विदेशीयेभ्यो विज्ञानलवमधीयाना आत्मनः कृतकृत्यता मन्य-मानास्तन्मयमेव जगदीक्षमाणाः समाकुलयन्ति सर्वेषां सचेतसां मनांसि, प्रतिपादयन्ति च भारतगौरवभूताना भुवनत्रयगुरूणां महर्षीणां हीनतां तारस्वरेण। यद्यपि तेषां वराकाणां युक्तिनिवहः फल्गुरिति ते सर्वथा प्रेक्षावद्भिरुन्मत्तवदुपेक्ष्येरन्, तथापि पशुपतिमहि-मानमाकलय्य ते सन्मार्गे मतिं निवेशयितुमर्हन्ति।

पशुपतिनाथो वङ्गभाषायां हिन्दीभाषायां तथा संस्कृतभारत्यां सम्यङ्निपुणतामासाद्य आङ्गलभाषायां फरासीभाषायां जर्माणभाषायां चासाधरणीं व्युत्पत्तिमवाप। एतासु का नाम गरिष्ठेति निर्णयावसरे यद्यपीदानीन्तनाः पण्डितम्मन्याः सञ्जीवितानामन्तिमप्रोक्तानां तिसृ-णामेव समुत्कर्षं विदधति, तथापि ते संस्कृतभारतीमसेवमानाः सर्वथा ऽवितथं प्रतिपादयितुं न समुत्सहन्ते। पशुपतिनाथस्तु साम्येन ताः संसेव्य सम्यगुत्कर्षमपकर्षं वैकस्याः प्रतिपादयितुमशक्दिति तन्मतं निष्पक्षपातिभिः सर्वैर्विद्वद्भिरादरणीयम्। विविधविद्यावता तेन ज्ञान-चक्षुषा सर्वासां तासां स्वरूपं पर्यालोच्य गीर्वाणीमेव धुरि समस्थापयत्। अन्यथा कथं स स्वर्गतेन स्यर् आशुतोषेण समाहूतो विश्वविद्यालये संस्कृताध्यापकपदमधिचकार? कथं वा संस्कृतसाहित्यपरिषदः समुन्नतये स्वात्मानं न्ययुङ्क्त? स तु प्रागभिहितानां भाषाणां स्वरूपं सम्यगधिगम्यैवं निर्णयपदवीमधिरुरोह यत् संस्कृतभारत्याः सेवा

मन्तरेण कदापि भारतीयानां समुन्नतिर्न भवितेति । अतः स संस्कृत-भाषायाः समुन्नत्यर्थमान्तिमोच्छ्वासाद् यतमान आसीत् । आलोच्यन्ता प्रसङ्ग परदेशानधिकुर्वतामियोरोपीयाणां भारत्यः परेषां विज्ञान-कौशलं निपुणमधिक्रियताम्, यन्त्रयानादिनिर्माणेन शिल्पवाणिज्यादेः समुन्नतिः समासाद्यता नाम, पर संस्कृतभारतीसेवापराङ्मुखाणां प्राच्यसभ्यतामजानतां महतामपि धनवतां समुन्नतिः सर्वथा न श्रेयसे प्रकल्पते । भारतीयानां सर्वमपि समुन्नतिनिदानं संस्कृत-ग्रन्थेषु सन्निबद्धमिति ताननधीयानाः कथमात्मगरिमाणं प्रकटयितुं शक्नुवन्ति स्वात्मनः समुन्नतये ? स तु महान् तत्सर्वमेवैकान्तेन चेतसा विज्ञाय संस्कृतभारतीप्रचारणाय महतीं शक्तिं प्रायुङ्क्त, प्राद्यर्थयच्च दैवीं वाचमनादृत्य तत्प्रतिकूलता विधाय भारतीयानामार्य्याणांसमुन्नति-परम्परा गगनारविन्दसौरभग्रहणवन्मुधैवेति । इयमेव विंशतिकोटि-सन्तानैर्निगृहीता दीना क्षीणा मलिना संस्कृतभारती जगदम्बेव सहस्रं संवत्सरान् परतन्त्रतानिगडबद्धानां भारतीयानामार्य्यवंशकरी-राणां सनातनत्वं विदधाति । तं विहाय नितरामेषा निरालम्बता-मुपैष्यति, अतस्तद्वियोगव्यथा नितरामस्माकं दुनोति चेतः ।

यद्यपि विश्वविद्यालयस्था विश्वपण्डिता बहुमतामेतां कुलदेवतां पिशाचीमिवाऽपाकर्तुं सर्वथा यतन्ते, तथापि सा भारतगौरवभूता जग-द्वन्द्या जगतीतलवासिभिः सर्वैरनल्पज्ञैरिदानीमपि समाद्रियमाणा न मलिनतामभ्युपैति । ये तु सततं सोपहासमेतस्या मृतभाषात्वमापाद-यन्ति, ध्रुवं ते चिरं परसेवया सदिति असदिति च विवेक्तुमक्षमाः स्वमरणं तत्र सुललितपदोपेतायां रसभावोद्बलितायां समारोप्य साक्षेपमभिलपन्ति—संस्कृतभाषा मृतेति । परं तेऽधन्या मातृसेवा-विरताः पशुपतिप्रसादेन चिरं जीवन्तु पुनन्तु चात्मानम् । संस्कृत-भारतीकृपामलभमानाः परकीयभाषासेवैव समुन्नतिनिदानमिति मन्यमानास्ते स्रगिति विषधरमहिं परिष्वजन्ते, मणिधिया काचं

समाश्लिषन्ति, अशुचिरिति पुरःस्थित मङ्गलकलसं चरणयोर्निपीडयन्ति। पशुपतिचरितं समाकलय्य सर्वथा ते सुमतिं लभन्तामिति भगवत्याः संस्कृतभारत्या अन्तिके बद्धाञ्जलि सम्प्रार्थ्यते। सन्ति च विविधानि साधनानि स्वदेशस्य समुन्नतये, परं तेषु गीर्वाणवाणीपरिशीलनमेव शिरसि वर्त्तते। अन्यानि च साधनानि ततो न्यूनतां भजमानानि साधनाभावतामुपयन्तीत्यत्र प्रेक्षावन्त एव प्रमाणम्। संस्कृतव्याख्यानेन शास्त्रविचारेण, ग्रन्थप्रचारेण, अध्यापनेन, नाटकाभिनयेन च प्राचीनगौरवजातानां सर्वेषामभिमुखीकरणमेवोन्नतेर्मुख्यं निदानमिति तेन सम्यग्विदितं प्रकटितञ्च। अहो तेन विना संस्कृतभाषाजननी नितरां दीनतामुपगता। हा मातः संस्कृतभारति! परिभूतासि, श्लाघ्यतनयविरहेण निरालम्बता गतासि! यच्चिन्तित तद् दूरतरं प्रयाति यच्चाकलित मनसा तदेवाकाङ्क्षतोऽभ्युपैति। सर्वथा त्वं निराश्रया सहृत्तेति महान् खेदोऽस्माकं चेतसि प्रादुर्भवति।

---

## शोकरुदितम्

[ निबन्धकः—श्रीमदुपेन्द्रमोहनसांख्यतीर्थः ]

सहृदयस्य जगत्पितुरक्षमं हतविधेः क्षममप्यदरन्तुदम्।
विदितवान् ननु वृत्तमहर्मुखे पशुपतिर्व्यसुरित्यशनिप्रमम्॥ १
मिलितवान् विगतेऽह्नि निशामुखे सुखमलापिषि येन यथा पुरा।
अशृणवं स गतासुरिति प्रगे धिगधृति सहजां मनुजन्मनाम्॥ २
पशुपते! म्रियमाण इह त्वयि ह्यनवधानतयानुपलक्षितः।
मधुरिमा विधुरेण हृदाद्य स प्रणयिभिः प्रसभादनुभूयते॥ ३
दधदपि प्रबलं क्षतिकौशलं तदनुमानमहोऽनपवर्जयन्।

कथमसाम्प्रतमद्य कृती भवान् समसरत् परलोकपरीक्षया ॥ ४
स्वयमेत्य शिवत्वमञ्जसा चितिशय्यामधितिष्ठता परम् ।
विधुरा परिषन्नता त्वया किमपर्थेव कृता तपस्विनी ॥ ५
प्रियतमा जननी शिशवः सुताः परिजनाः स्वजनाश्च तथापरे ।
त्वदुपजीविन इत्यवधीरिमान् व्यपरतः सुहृदप्यहितो यथा ॥
तव पितृव्यतया य उपस्कृतो व्यगणयन्न वियोगशुचं पितुः ।
शिशुमशोकमशोकमुपेक्ष्य तं तव स्मृतिं सहते न हितव्रता ॥ ७
चतमहो शतयातनमक्षमत प्रणयतस्तव या सुखमीक्षती ।
विसहतां जननी कथमद्य सा तव यवीयस इत्थमपासुताम् ॥ ८
पशुपत्यपयानसम्भ्रमात् परिषन्म्लाननमद्य विप्लुतम् ।
तदतीतदशासमागमे किमु वामाचरणोऽरणः क्षमः ॥ ९
न नगेन्द्रमुखाः सुखाय नो न च चिन्ताहरणाय चिन्त्यते ।
चमतामसरेश्वरोऽपि किं कृतहस्तो ननु दीनबन्धुना ॥ १०

---

## पशुपतिप्रयाणम्

[ निबन्धकः—श्रीगणपतिसरकारविद्यारत्नः ]

तत्रभवता पशुपतिशास्त्रिणा सह प्रथममालापः स्यादस्माकं वासभवन एव। स खलु संस्कृतसाहित्यपरिषदः कृतेऽस्मद्गृहमलंचकार। तद्दिनमारभ्य चावयोः प्रीतिबन्धनमुत्तरोत्तरमवर्धत। परमस्मात् सुबहुदिनानि विभिन्नस्थानेषु यदेव परस्परमावां मिलिताबभवाव तदेव विना कालव्ययमतिक्रम्य संलापश्च विच्छिन्नतां नानुभूताविति बहुशः परीक्षितोऽयं स्निग्धभावः। उत्तमपाण्डित्यपरिपूरितो मनागपि गर्वलेशं न दर्शयामास दर्शकान्। न कदाप्युपलक्षितो मया तस्याहङ्कारभावः। यथैव सुपुरुषः स आसीत् देहसंस्थानेन तथैव सौम्यदर्शनश्च आसीत् प्रभया। गुणिनामुपयुक्तादरे युक्तमनाः स किल

संस्कृतसाहित्यपरिषदः प्राणभूतोऽभवत्। अत्यन्तविनयपरायणो लेशतोऽपि गर्वशून्य एकदा स परिषत्विषयकप्रस्तावे अकथयत् "विधाय वङ्गीयसाहित्यपरिषदमादर्शं वयमीहामहे संस्कृतसाहित्यपरिषदं निर्मातुमिति तस्या एव दर्शनेनास्माकं महती सुविधा जातेति"। भासो-त्वङ्गदेशस्य चिरन्तनी दुर्नामपरम्परा यदस्मद्देशवासिनो विदुषो न शक्नुवन्ति प्रकाशयितुमान्तरं भावमार्य्यभाषया, सभायां तत्काल एव वक्तुं वा किमपि विषय विशदीकृत्य। किन्तु साम्प्रतं परिषदः कृपया बहवो वङ्गदेशीयविपश्चितोऽनर्गलं वक्तु लिखितुञ्च आर्य्यभाषया समर्थाः सञ्जाताः। विना पशुपतिशास्त्रिणोऽक्लान्त-परिश्रमेण परिपुष्टा परिषदिय शङ्केऽनुपयुक्ता स्यादद्यापि कलङ्कभञ्जने वङ्गीयपण्डितानाम्। दिशि चास्यां जातीयाऽङ्कस्खलने प्रामाङ्को देशवासिनां श्रद्धाभाजनतां भेजे शास्त्रिमहाशयः। आसीत् प्राण-सोदरा तस्येय संस्कृतसाहित्यपरिषत्। कथमस्याः सर्वतोमुखी उन्नतिर्भवेदिति ध्यानपरायणोऽभूत् स सर्वदा। यथेयं परिषद काले कालकवलितमेकनिष्ठं सेवकं विहाय दुःखिता एवमह-मौद्दशमित्रवर्यवियुक्तोऽधिकतर क्लिष्टोऽस्मि। गतिस्तु कर्मणोऽलङ्घ-नीया। कर्मणि विनिवृत्ते देहवन्धो विरमेत्। स्मृतिरेव गरीयसी तिष्ठति। पशुपतिशास्त्रिणः स्मृतिरस्माकं मनसि चिरमक्षया भवतु। भगवतः प्रसादात् स्वर्गतस्य तस्यात्मा च तृप्तिं लभतामिति।

---

## पशुपतिस्मृतिः

[ निबन्धकः—श्रीरघुनाथमल्लिकः]

प्रथितयशा वङ्गीयकविसार्वभौमलमधुसूदनदत्तः प्रातःस्मरणीयेश्वर-चन्द्रविद्यासागरस्य सम्बन्धे अवोचत् यदासीत्तस्य प्राचीनमहर्षीणामिव प्रज्ञा, इलण्डवासीना कर्मोत्साहो, वङ्गीयजनन्या इव सुकोमलं हृदय-

मिति। लोकान्तरप्रस्थितानां पशुपतिनाथशास्त्रिपादानां पद्येऽपि तदेव सुप्रयोज्यम्। य एव तत्रभवताम् असामान्यपाण्डित्यं, परिषद उन्नति-कामनया अक्लान्तपरिश्रम, शिष्यान् तथानुजीविन: प्रति सस्नेहव्यवहारं परिजानाति तेनैव कवेरेषा उक्ति: सम्यगवधार्य्यते। संस्कृत-साहित्यपरिषदस्य साधनाया अखण्डं फलमिव वर्त्तते। तत्रभवतां प्रज्ञानात् चरित्रस्य औदार्य्यात् माधुर्य्याच्चाचारस्य परिषद: सभ्य-संख्या प्रतिदिनमेव वृद्धिमाप्नोति। न जाने कति दु:स्था: शिक्षार्थिन: तस्य स्नेहपरतया परिषद्गृहे न केवलमाश्रयं जीविकाञ्च सुशिक्षाम् अपि च पितृस्नेहमप्यलभन्त। अधुना पितृहीना परिषत् पितृहीना च तस्य शिष्यमण्डली।

आसीत्तत्रभवत: प्रधानदोषो यत् स महात्मा साम्प्रतिककालोचिता-'मर्थ एव परमार्थ: सत्य-न्याययोर्नास्ति अपेक्षा अर्थोपार्जने' इति नीतिं बहु नामन्यत। तस्मादेव कारणात् यौवने स्मृतिशास्त्रं व्यवहारशास्त्रञ्च स्वायत्तीकृत्य धर्म्माधिकरणमर्थोपार्जनाय प्रविश्य शान्तिमाप' स आधुनीका धर्म्माधिकरणव्यापारा: केवलमेव अशान्तिकारका अमङ्गलप्रसवा इत्येव संवीक्ष्य कुशाग्रबुद्धिरपि जीविकान्तरं शान्तिपूर्णं शिक्षोपदेशदान-रूपं, देवभाषाया: भारते तथा च जगति पुन: प्रचारार्थं च स्वेच्छया-वालम्बत। स चेत् सत्यधर्म्मस्य शिरसि चरणार्पणं कर्त्तुमशक्ष्यत् तदा संसारे प्रभूतवित्तशाली अभविष्यत्।

सम्प्रति ह्यस्माकं देशे सन्ति बहवो नरा येषामेव मतं संस्कृतज्ञा अकर्म्मण्या: धरित्रीभारवृद्धिकारिण एव, न तु ते मनुष्यपदवाच्या:। अध्यापकधुरन्धरपशुपते: संसर्गात्परं तस्य परमतसहिष्णुतया बुद्धे: प्राखर्य्यात् अदम्यकर्म्मस्पृहया सर्व्वेषामेव एतद्रुचिवागीशाना परिवर्त्तितमेव मतम्। सुसंस्कृतभाषायास्तथा संस्कृतपरिषदश्च श्रीवृद्धि-कामनया तत्रभवत: कठोरसाधनात् अधुना पाश्चात्यविद्याभिमानिनो-ऽपि जना देवभाषां सश्रद्धं द्रष्टुमारभन्त। तस्य वियोगात् न केवलं

देवभाषा परन्तु वरेन्द्रभूमिस्तथा समग्रं भारतमेव तं पुत्ररत्नम् अपहाय शोकनिमग्न, न जाने कदा तस्य अभावपूरण भविष्यति ।

---

## शोकपत्रम्

श्रीमन्तः सम्पादकमहोदयाः !

कलिकातास्थसंस्कृतपरिषत्कार्य्यचालकमूर्धन्यानां प्रकृत्या आकृत्या च मधुराणां परमसौजन्यभाजां विद्वद्गोष्ठीगरिष्ठाना पशुपतिनाथ-शास्त्रिणामसामयिकं स्वर्गारोहण विज्ञाय पञ्चनदीय संस्कृत-साहित्यपरिषत्सदस्या नितान्तं खेद प्रकाशयन्ति, शास्त्रिमहोदयानां कुटुम्बाय च हार्दिकीं समवेदना प्रकटयन्ति ।

श्रीजगदीशशास्त्री

---

## शोकपत्रम्

परिषत्पत्रिकासम्पादकेषु श्रीमत्कालीपदतर्काचार्य्येषु महोदयेषु सत्यदेवपाण्डेयकृता' प्रणामाः सन्तु ।

माननीयाना पशुपतिनाथशास्त्रिणां स्वर्गारोहणसमाचारं विदित्वा मे हृदयेऽतीव दुःखं सञ्जातम् । ते तु सरलस्वभावाः सर्वहितचिन्तका विद्वांस आसन् । तेषामकाल एव परलोकगमनेनास्माकं महती हानि-र्जाता । परन्त्वेश्वरायत्त सर्वं भवतीति परिज्ञाय धृतिं दधामि ।

श्रीसत्यदेवपाण्डेयः

---

## शोकपत्रम्

श्रीमत्सु संस्कृतसाहित्यपरिषत्पत्रिकासम्पादकेषु सविनयं सनमस्यं चेदमावेदनम् ।

अत्रापि वेदनापूर्णं पत्र श्रीमताम्। अनेकविद्वदावलीविभूषितैः पशुपतिनाथशास्त्रिभिः सहाऽसत्यपि वैयक्तिके परिचये श्रीमद्भिर्वर्णितेन तेषां गुणगणगरिम्णा एकीकृतहृदयो नून नितरां खिद्ये। तादृशस्य महापुरुषस्य वियोगेन अशङ्कितोपनतेय महती हानिर्मन्ये समयसापेक्षा रिक्तपूर्तये। आशासे सकलगुणगौरवगुम्फिताः श्रीमन्तस्तदभावपूर्तिं धैर्येण, मनोनियोगेन, सुरभारतीभक्तिप्रभावेण च न चिराय सम्पादयिष्यन्ति। इति

विद्यावाचस्पति-श्रीशालग्रामशास्त्रिणः

---

## शोकप्रकाशपत्रम्

अयि श्रीमन्तः सम्पादकमहोदयाः,

येषामागरानगरेऽखिलभारतवर्षीयसंस्कृतसाहित्यसम्मेलनस्य सप्तमाधिवेशनेऽतीवाऽद्भुता सरलता विलोकिता, तथा निसर्गसुन्दरविलसत्प्रतिभाक सुरभारत्या मनोहरं व्याख्यानं समाकर्णितम्। अहह ते प्राश्चात्यभाषासु लब्धवर्णा विविधोपाधिविभूषिता विद्वद्वृन्दशिरोमणयः पण्डितपशुपतिनाथशर्मशास्त्रिणोऽकाल एव पशुपतिलोकं रुनाथ कृतवन्त इत्येतां वार्तां भवत्पत्रादवगत्य महता शोकावेगेन वा नेत्ररोगवशाद्वा मन्ये मदीयं हृदयं पाषाण इवाऽभूत्कठोरम्। बुद्धेर्वा निश्चयरूपता निर्गतेव, मनसो वा सङ्कल्पविकल्पात्मकता पलायितेव, वाणी वा जडीभूतेव, अतो नाऽऽयाति रोदनमपि, न पारयामि किञ्चित्कथयितु लेखितु वा। इदमेव प्रतिभाति केवलम्, यदेतद्देशस्यास्या भगवत्याः सुरभारत्याश्च दौर्भाग्यमेव। न भविष्यति चिरकालेऽपि तथाविध विद्वद्रत्नमस्यां हतभाग्यायां भारतभूमौ, इति निवेदयति।

श्रीगणेशोलालसारस्वतः साहित्योपाध्यायः

---

# शोकपत्रम्

प्रियसम्पादकमहाभागाः ।

संस्कृतसाहित्यपरिषदन्यतरसम्पादकानां विविधविद्यागुणसम्पन्नानां सुगृहीतनामधेयानां पशुपतिनाथशास्त्रि एम् ए पि एइच् डि-महोदयानामाकालिकपरलोकगमनवार्त्तया नितरामार्त्तोऽस्मि । तेषाञ्च शास्त्रिमहोदयानामसामान्यसौजन्येन अवैमत्यपाण्डित्येन अकार्पण्यदाक्षिण्येन च सर्व्वे एवातितरां मुग्धा आसन् । एवमेतेषां विनयमधुरव्यवहारेण असदृशकर्म्मकुशलतादर्शनेन महता संस्कृतानुरागेण च सर्व्वे एव चमत्कृता अभूवन् । अत्यल्पकालेनैव कृतकल्पसंस्कृतोन्नतिसाधिकाया अपि संस्कृतसाहित्यपरिषदः एतावती समुन्नतिः, प्रधानतस्तेषामेव महात्मनां कर्म्मकुशलताया फलमिति प्रमुक्तकण्ठं वक्तु शक्यते । एतैः-कर्म्मवीरैः असीमोत्साहेन अविश्रमपरिश्रमेण बहुतरस्वार्थातिपातेन च संस्कृतसाहित्यपरिषदो यादृशी तुष्टिप्रदा परिपुष्टिः समसाधि, कुत्रचिदन्यत्रापि तादृशी परिपुष्टिः प्रायो नैव परिलक्ष्यते । तथा च तेषां शास्त्रिमहोदयानामाकालिकपरलोकगमनेन संस्कृतसाहित्यपरिषदो यादृश महदनिष्टमजनिष्ट, कदा कस्य प्रयत्नेन पुनस्तस्य परिपूर्त्तिर्भवेदिति सर्व्वनियन्ता भगवानेव जानाति ।

एते च महात्मानः कलिकाताविश्वविद्यालयस्याप्यन्यतमा' ख्यातनामानः संस्कृताध्यापका आसन् । अध्यापनानैपुण्येन यथोपयुक्तव्यवहारेण यथासम्भवोपकारसाधनेन च तत्रत्यानां विद्यार्थिनामन्येषाञ्च हृदयमेतैरायत्तीकृतमित्येतेषां महाप्रस्थानेन कलिकाताविश्वविद्यालयस्यापि महती क्षतिरभूत् ।

कलिकाता-विश्वविद्यालयसदस्यप्रस्तुत संस्कृतशिक्षाया ऐच्छिकत्वं

निवारयितुमप्येतैर्नानाविधः प्रयत्नः समकारि। केनोपायेन मृतकल्पाया संस्कृतभाषायाः पुनरभ्युदयो भवेदिति तैः सर्व्वात्मना परिचिन्तितमिति बहुधा मया परिज्ञातम्। संस्कृतोन्नतेरेव प्रतिष्ठानं प्रायो नासीद् यत्र तदधिष्ठानं वाञ्छनीयं नाभूत्। सुतरां तेषां संस्कृतपक्षपातिनां महाप्रस्थानेन न केवलं संस्कृतसाहित्यपरिषदो, नापि केवलं कलिकाता-विश्वविद्यालयस्य, परन्तु संस्कृतप्रतिष्ठानमात्रस्यैव महद्दौर्भाग्यमापतितमित्यत्र न कोऽपि सन्देहः।

कलिकातानगरागमनात्प्रभृत्येव नानाविधकार्य्यव्यपदेशेन तत्परिचितोऽहमभवम्, ततश्च तेषामेव सौजन्यातिशयेन तैः सार्द्धं परमसौहार्द्दं मम समवर्त्तत। प्रायश एव तत्साक्षात्कारलाभः सौभाग्यात्मम समजायत, किन्तु प्रतिदिनमेव तद्दर्शनं नूतनमनिर्वचनीयमानन्दमदात्। तेषामेव सुमधुरव्यवहाराभिज्ञतासीत् तत्प्रभावात् कोऽपि तान् प्रति कश्चिदपि विरक्तिभावं पोषयितुं नालमभूत्। तदीयपरलोकप्रयाणपूर्व्वदिवसेऽपि प्रायो घटिकाद्वयं तैः साकमस्माकं समालापो जातः, हा हन्त !! तत्समालाप एव करालकालप्रभावाच्चरमतामुपगतः। अहो तदानीन्तनं तस्य तत्प्रहास्यवदनं स्मृतमद्यापि परम विस्मयमुत्पादयति। वस्तुतस्तेषामभावे संस्कृतभाषा केषाञ्चित् परमबन्धूनामभावमनुभवति। तैः कर्म्मवीरे संस्कृतभाषाया बहूपकारसाधनस्य प्रत्याशाप्यासीत्। किन्तु विधातृविधानस्यालङ्घनीयतया संस्कृतसेविनां परमदुर्भाग्यतया च तत्प्रत्याशा समूलमुन्मूलितेति परमं विषादस्थानम्। सम्प्रति तेषां पारलौकिकमङ्गलकामनैव प्रधानतः कर्त्तव्यतयास्माकं पुरतो वर्त्तते, परन्तु तदीयारब्धकार्य्याणि यथा सुसम्पन्नानि भवेयुस्तत्रापि सर्व्वैः सर्व्वथा यतितव्यमित्यलमनल्पजल्पनेन।

श्रीकृष्णविहारितर्कसिद्धान्तः

---

# हरिश्चन्द्रकथा

[ निबन्धकः—श्रीकालीपदकाव्यतीर्थः सूत्रविशारदः ]

विदितमेव सर्वेषां पारिषदानां पुण्यं नामधेयं खलु महाराजस्य हरिश्चन्द्रस्य। यस्य हि जनहृदयरञ्जिनो कथा आबालवृद्धवनितानां जनानाम् आकुमारहिमालयं भारतवर्षस्य मनांस्यजस्रं करुणामृतवर्षैरभिषिञ्चन्ति। तस्य च पुण्ययशसो नृपस्य कथानुकीर्त्तनात् नास्त्येव सम्भावनालेशोऽपि नूतनकथाश्रावणकृतार्थताया मादृशे खल्वबुद्धौ। तथापि पुराणोक्तिरियम्—

> एतान् सर्वान् नरः शृण्वन् पठन्नपि सभासु च।
> विधूय सर्वपापानि ब्रह्मण्येव लयं व्रजेत्॥ इति

तादृशान् महाजनान् गुणकथया स्तोतुं प्रलोभयतीति किं बहु वचनेन।

स खलु महाराजो हरिश्चन्द्रः सूर्य्यवंशसम्भवोऽयोध्यापतिश्च बभूव। पिता च तस्य त्रारुणिः सत्यव्रत इति बहुपुराणसम्मतम्। परं मत्स्यपुराणे—

> ... .. . त्रय्यारुण इति स्मृतः।
> तस्मात् सत्यव्रतो नाम तस्मात् सत्यरथ स्मृतः॥
> तस्य पुत्रो हरिश्चन्द्रो हरिश्चन्द्राच्च रोहितः॥ इति
>
> (१२।३९-८)

पाठः 'सत्यव्रतस्य पुत्रः सत्यरथ एव राज्ञो हरिश्चन्द्रस्य पिते'ति ज्ञापयति। परं महाभारतीयहरिवंशपर्व्वणि, विष्णुपुराणे चतुर्थेऽंशे त्र्यष्टमाध्याये, वायवीये चाष्टाशीतितमेऽध्याये तथा अन्येषु अपि पुराणेषु हरिश्चन्द्रस्य सत्यव्रतात्मजत्वमेवाङ्गीकृतम्। स च सत्यव्रतः—

अभूदिच्छाचरः कामो मन्दात्मा ह्यतिलोलुपः ।

स पापात्मा विप्रभार्यां हृतवान् काममोहितः ॥ (भा० ७।१०)

अतस्तस्मिन् पितुः क्रोधातिशय्य बभूव, राज्याच्च तं पिता निष्क्रामयामास। अथ कदाचित् दुर्भिक्षव्यट्परीतानां विश्वामित्र-कलत्रापत्यानां पोषणार्थं मांस मृग्यन् अनधिगतमासान्तरो भगवतो ब्रह्मर्षेर्वसिष्ठस्य धेनुं जघान। एवं तथाविधातिघोराचारं पतुषधर्म्माणं सत्यव्रतं दृष्ट्वा सुरासुरार्चिताङ्घ्रियुगो भगवान् वसिष्ठो ज्वलद्गम्भीरया गिरा सत्यव्रतमूचे—

पितुश्चापरितोषेण गुरोर्दोग्ध्रीवधेन च ।

अप्रोक्षितोपयोगाच्च त्रिविधस्ते परिक्रमः ॥ (ह०व० १३।१८)

इत्येवं त्रीन् शङ्कन् तस्मिन्नुपलभमानो गुरुस्तस्मै त्रिशङ्कसंज्ञा दत्तवान्। ततो दुःखितदुःखितस्त्रिशङ्कुर्वनाद्वनान्तरं गुरुणा शप्तो बभ्राम। अथ तावदन्तिमां दशां प्राप्तो राजा अरुणस्त्रिशङ्कुं सादर-माहूय सदाचारान् राजधर्म्मांश्चानुशिष्य तस्मै एव राज्यभारं समर्प्य सुरलोकं प्रतस्थे। ततः प्रभृति स सदाचारमनुसरन्, देवद्विजपरायणो बभूव। किं बहुना शासति च तस्मिन् वसुधामिमां धर्म्मैकशरणे प्रोल्लसदुत्तमकीर्त्तौ महाभागे त्रिशङ्कुभूपतौ दुर्भिक्षं दुर्लभता, व्याधि-रनाश्रयतामकालमरणञ्च मरण प्रापुः। दीर्घकालं सुखमुषित्वा पुत्रानिव प्रकृतिजनान् विभवदानादिभिः सन्तोष्य विराजतस्तस्य यज्ञे मतिर्जज्ञे। सशरीरश्च स्वर्गं गन्तुमना राजा त्रिशङ्कुः कुलगुरुं वसिष्ठं समाहूय स्वमनोगत निवेदयामास। वसिष्ठस्तु महर्षिः सम्यगालोच्य "अशक्योऽयं यज्ञ" इत्यूचे। खिन्नश्च राजा वसिष्ठेन प्रतिषिद्धोऽपि गुरोराश्रमात् निर्गत्य तत्कर्म्मसाधनार्थं वसिष्ठपुत्रान् प्रपेदे। ते चापि "शक्यमशक्यमित्यस्त"मिति श्रुत्वा अशक्यमेवाहुः। ततः—

स राजा पुनरेवैतान् इदं वचनमब्रवीत् ।

प्रत्याख्यातो भगवता गुरुपुत्रैस्तथैव हि ॥

अन्यां गतिं गमिष्यामि स्वस्ति वोऽस्तु तपोधनाः ।
ऋषिपुत्राश्च तच्छ्रुत्वा वाक्यं घोराभिसंहितम् ।
शेपुः परमसंक्रुद्धाश्चण्डालत्वं गमिष्यसि ॥ (रा०बा० ५८।७९)

ततश्चण्डालतामापन्नस्त्रिशङ्कुः राज्य परित्यज्य विश्वामित्रं शरणं गतवान् । स च कौशिको महर्षिर्विश्वामित्र "स्तेनैव मे सुता रक्षिता" इति बुद्ध्वा तपोयज्ञादिभि सशरीरमेव राजान स्वर्गं निनाय ।

त्रिशङ्कुचरितमिदमालम्ब्य पुराणेषु बहूनि मतान्युपलभ्यन्ते । वैष्णवे "असौ त्रिशङ्कुसञ्ज्ञामवाप, चण्डालतामुपगतश्च, द्वादश-वार्षिक्यामनावृष्ट्या विश्वामित्रकलत्रापत्यपोषणार्थं चण्डालप्रतिग्रह-हरणाय च जाह्नवीतीरे न्यग्रोधे मृगमांसमनुदिनं ववन्ध, परितुष्टेन च विश्वामित्रेण सशरीरं स्वर्गमारोपितः।" इति (४।३) प्रमाण त्रिशङ्कु-संज्ञालाभात् परत एव तस्य विश्वामित्रसन्ततिपोषणार्थे प्रयत्नम् अनु-मापयति । परं पुराणान्तरेषु मुनिसुतपोषणार्थमेव तस्य गोहनन त्रिशङ्कुसञ्ज्ञाप्राप्तिश्चेति यद् दृश्यते, तदेव समीचीनतया प्रतिभाति । भवतु प्रकृतमनुसरामः । अवान्तरमेतद्धरिश्चन्द्रकथाया इत्यल प्रप-ञ्चितेन ।

स खलु राजा त्रिशङ्कुः केकयवंशजा सत्यरथां नाम उपयेमे । सेव तत्रभवती श्रीमन्तं हरिश्चन्द्र सुषुवे । महाभारतीये हरिवंश-पर्वणि त्रयोदशाध्याये—

तस्य सत्यरथा नाम पत्नी केकयवंशजा ।
कुमारं जनयामास हरिश्चन्द्रमकल्मषम् ।
स वै राजा हरिश्चन्द्रस्त्रैशङ्कव इति श्रुतः ॥

इति प्रमाणमेतदवगमयति । यत्तु मत्स्यपुराणीयः "तस्मात् सत्य-व्रतो नाम तस्मात् सत्यरथः स्मृतः" इति पाठः पूर्व्वमुक्तः, मन्यते स एवमेव साधीयान् स्यात् यथा 'तस्मात् सत्यव्रतो यस्य पत्नी सत्या स्मृते"ति । तेन हरिवंशीयपाठेन तथा अन्यैरपि पुराणैः सह पाठ-

सङ्गतिः स्यात्। कुम्भकोणीयमहाभारते हरिश्चन्द्रः सत्यव्रतायाः पुत्र इति ज्ञायते।

अथ हरिश्चन्द्रः पितर्युपरते अखिलामेतां वसुधां धर्मतः शशास। राज्यं शासत् स राजसूयेष्टिञ्चकार। तस्य च राज्ञः कथाद्वयं सर्वत्र प्रचरति, एका तावद् हरिश्चन्द्रस्य वरुणेष्टिं विषयीकृत्य, अपरा च तस्यैव विश्वामित्राय सर्वस्वदानमारभ्य वर्त्तते। एतयोः पर्य्यायेण सन्निवेशेन तस्य च राज्ञो दशाविपर्ययानालोच्य किञ्चिद्वक्तुमुत्सहे।

अखिलमेतद्भूमितलं शासतोऽपि धर्म्मात्मनोऽपि भूपतिकुलभूषणस्यापि, कीर्त्या प्रोल्लसितदिगन्तरालस्यापि तस्य हरिश्चन्द्रमहाभागस्य निखिलमपि राज्यमपुत्रतया न सुखमुवाह। यतश्च तस्य राज्ञो हृदयवल्लभा विशुद्धनृपवंशजाः पत्न्योऽभूवन्। पर तासामेकतमापि पुत्रमुख द्रष्टुमनसो भूपतेर्मनोरथं पूरयितुं नालं बभूव।

अथ कदाचित् राजा स्वगृहवर्त्तिनं नारदमृषिं संस्तुत्य प्रोवाच, कथं मे पुत्रो जायेतेति। अत्रेदमवधेयं देवीभागवते तथा ब्रह्मपुराणे राजा कुलगुरवे वसिष्ठायैव अनपत्यतादुःखनिरासोपायस्याकाङ्क्षां निवेदयामास इति गम्यते। परमैतरेयब्राह्मणस्य त्रयस्त्रिंशाध्याये तथा शाङ्खायनश्रौतसूत्रस्य पञ्चदशाध्याये—"तस्य ह पर्वतनारदौ गृहे ऊषतुः। स ह नारदं पप्रच्छ।… …स वै मे ब्रूहि यथा मे पुत्रो जायेतेति।" इति दर्शनात् वेदवाक्यमङ्गीकुर्वता नारदान्तिके जिज्ञासा एवात्र विहिता। स तु ऋषिस्तमुवाच जातेन पुत्रेन त्वां यक्ष्यामीति वरुणं प्रसादय, स ते मानसं विधास्यतीति। राजापि तथेति प्रतिश्रुत्य वरुणमाराधयामास। तपसा तोषितो यादसां पतिर्भूपतिं प्राह—

यदि त्वं तेन पुत्रेण मां यजेथा विशङ्कितः।
पशुवध्येन तेनैव ददामि नृपते वरम्॥ इति (दे॰भा॰ ७।१४।४)

राजापि । देव मे मास्तु वन्ध्यत्वं यजिष्येऽहं जलाधिप ।

पशुं कृत्वा सुतं पुत्रं सत्यमेतद् ब्रवोमि ते ॥ इति

( दे० भा० ७।१४ )

वरुणाय पुत्रं प्रत्यशृणोत् । ततः कियता कालेन राज्ञोऽग्रमहिषी शैव्या गर्भं दधौ, पूर्णे च गर्भे, शुभे दिने ताराग्रहबलोपेते लग्ने रोहितनामानं देवशिशूपमं सुत सुषुवे । सुदुःसहञ्चानपत्यतादुःखं राज्ञो दूरीबभूव । ब्राह्मणेभ्यो बहूनि धनानि दत्त्वा गीतवादित्रमङ्गलादिभी राजा जातकर्म्मादिक सम्पादयामास । आनन्दसरसि प्लवमानो राजा वरुणवृत्तान्तं तावत् सम्यग् विसस्मार । अथैतस्मिन् समये निर्भिन्दन्निव राज्ञो हृदय वरुणस्तं सुतं प्रार्थयाञ्चक्रे । राजा तु मुहूर्त्तं प्रेत इव स्थित्वा प्रबुद्धः सुतस्नेहेनोवाच—“सूतकाशौचानन्तरमेव जीवः शुद्धिं व्रजेत् । अतस्त कालमतोत्य अनेनाह यक्ष्यामोति । अतीते च सूतकाशौचे, वरुणो राजान प्राप्य प्रतिश्रुतं यज्ञं स्मारयामास । ततो राजा पुत्रस्य दन्तोत्पत्त्यनन्तरं यष्टव्यं मयेत्याह । काले तदर्थमपि स्मारितो राजा समावर्त्तनानन्तरं यष्टव्यमित्येवं प्रोवाच । बहुशः प्रत्याख्यातेन वरुणेन समावर्त्तनान्ते स्मारितो राजा हरिश्चन्द्रः कुमार रोहितमाकारयामास । पर यज्ञवधमनोप्सन् कुमारो धनुरादाय अरण्यं ययौ । ब्रह्मपुराणे तु रोहितः पित्रा यज्ञे आमन्त्रितो वरुणमुपहस्य—

अह पूर्वं महाराज । ऋत्विग्भिः स-पुरोहितः ।

विष्णवे लोकनाथाय यक्ष्येहं त्वरितं शुचि· ॥

पशुना वरुणेनैव तदनुज्ञातुमर्हसि ॥ ( ब्र० १०४ अ० )

इत्येवमुक्त्वा अरण्यं ययौ इति अधिकं लभ्यते । अत्र देवीभागवते रोहितो राजानं समावर्त्तनान्ते अत्यर्थं शोकाभिभूतं विह्वलं दृष्ट्वा अमात्येभ्यः कारणमपृच्छत्, मरणभयभीतश्च वरुणस्यागमनात् प्रागेव वनं प्रतस्थे । वरुणेन स्मारितो राजा पुत्रस्य निर्दाहृष्टत्वमेव समा-

चक्री। इत्येवं वैचित्र्यमुपदर्शितम्। वरुणस्तु भृशं राज्ञा प्रत्याख्यातोऽतीव क्रुद्धो हरिश्चन्द्रस्य नृपतेर्जलोदरञ्चिकीर्षन् ऊचे—

नृपतेऽहं त्वया यस्माद् वचसा च प्रवञ्चितः।
तस्माज्जलोदरो व्याधिस्त्वां तुदत्वतिदारुणः॥ इति

( दे० भा० ७।... )

वरुणेन शप्तो राजा भृश दुःखमनुभूय व्याधिना सम्पीडितो बभूव। उदरञ्चास्य भृशं पूर्णं जातम्, राज्ञो भोजनादिकं तथा प्रजापालनादिकञ्च नाममात्रे पर्य्यवसितम्। व्याधिपीडिते च राजनि प्रकृतयो नियन्तृरहिताः स्वकर्म्मविरता बभूवुः। कालेन दुर्भिक्षमनावृष्टिश्च युगपत् नितरा व्यवर्द्धेताम्। वृत्तान्तोऽयं ग्रामादरण्यमपि विसृमरोऽभूत्।

रोहितस्तु तत्प्रवृत्तिमाकर्ण्य पितरं द्रष्टुकामो बभूव। अथ तमिन्द्रः पुरुषरूपेण पर्य्येत्योवाच—

आत्मनो देहरक्षार्थं हत्वा त्वां वल्लभं सुतम्।
हवनं कारयित्वासौ रोगमुक्तो भविष्यति॥
तस्मात्त्वया न गन्तव्यं राजपुत्र पितुर्गृहे।
मृते पितरि गन्तव्य राज्यार्थे सर्वथा पुनः॥ इति

एवं निषेधितो रोहित संवत्सरसप्तकं वने बभ्राम। पूर्णेऽथ सप्तमे वर्षे कुमारः पितुर्दुःखातिशय्यं श्रुत्वा अतीव चिन्तोद्विग्नमना बभूव। अथ कुमारस्तत्र अजीगर्त्त नाम सौयवसिम् ब्राह्मणं क्षुत्पीडितं पुत्रत्रयभरणाकुलं दृष्ट्वाऽमन्यत "हन्ताहमेषाम् अन्यतमेन वरुणसकाशात् आत्मानं निष्क्रीणे" इति। एव मन्वानो राजपुत्रो ब्राह्मणमुपेत्य गोशतविनिमयेन पुत्रमेकं प्रार्थयामास। पिता ज्येष्ठं शुनःपुच्छं, माता च कनिष्ठ शुनोलाङ्गूलं न ददतुः। ततोऽसौ मध्यमं शुनःशेपनामानं पित्रे गत्वा निवेदयामास। राजा च वरुणस्यानुमत्या तेनैव क्रीतपुत्रेण शुन.शेपनाम्ना यज्ञमारेभे।

अत्र भृशं व्याधिपीडितो राजा गुरोरनुमत्या क्रयक्रीतेन पुत्रेण यष्टुमैच्छत्। राजपुरुषैरन्विष्यमाणोऽजीगर्त्तो नाम ब्राह्मण प्राप्तः। स खलु विबुभुक्षोऽजीगर्त्तः गोशतमूल्येन मध्यम शुनःशेपनामानं राज्ञे विसर्जयामास। राज्ञा तेन यज्ञं प्रचक्रमे इति देवीभागवते विशेष।

ब्रह्मपुराणे तु रोहितेन शुनःशेपे निवेदिते हरिश्चन्द्रो ब्राह्मणवध-भिया तं द्विजपुत्रं यज्ञाय हन्तुं नोत्सेहे, कथयामास च—

विष्णोरपि हि ये पूज्या मादृशाः कुत एव हि।
अवज्ञयापि येषां स्यान्नृपाणां स्वकुलक्षयः॥
तान् पशून् कृपणं कृत्वा कथं रक्षितुमुत्सहे।
अहञ्च ब्राह्मणं कुर्य्यां पशुं नैतद्धि युज्यते॥
वरं हि जातु मरणं न कथञ्चिद्द्विज पशुम्॥ (ब्र० १०४।६३-५)

इति परमगुरोरिच्छया वाण्या प्रवोधितो हरिश्चन्द्रो गौतमीतीर्थं प्राप्य तत्र शुनःशेपं हन्तु यूपे ववन्धेति प्राप्यते। परमेतन्मतद्वयं शाङ्खायनश्रौतसूत्रस्य तथा ऐतरेयब्राह्मणस्य अनभिमतमिति विचार्य्यम्।

अथ शुनःशेपः "अमानुषमिव मा हनिष्यती"ति उपलभमानो देवताः शरणं जगाम। ततः स भीत प्रवेपमाणः प्रजापतिमग्निं सवितारं वरुणं विश्वान् देवान् इन्द्रमश्विनौ उपसद्य चतुर्भिः सूक्तैः स्तुष्टाव। तस्य च एकैकस्यामृचि उक्तायां नितरां पाशो मुमुचे, सम्यञ्च नैरुज्यं बभूव। एतत् सूक्तचतुष्टयम् ऋग्वेदे प्रथमेऽष्टके शौनःशेपमिति ख्यायते।

अत्र देवीभागवते वधार्थं यूपे बद्धः शुनःशेपः अमानुषाणि कर्म्माणि भविष्यन्तीति विलोक्य पित्रोर्धनलुब्धत्वं, राज्ञः खड्गधरत्वं, देवताया वलिप्रियत्वं विचार्य्य त्रातारञ्च कमपि अदृष्ट्वा रुदितुं प्रवृत्तः। ततो विश्वामित्रः करुणार्द्रहृदयो हरिश्चन्द्रमुपसंक्रम्य शुनःशेपस्य मोक्षं प्रार्थयामास, उक्तवांश्च —

पिता ते शापयोगेन चाण्डालत्वमुपागतः ।
मयासौ तेन देहेन स्वर्लोकं प्रापितः किल ॥
तेनैव प्रीतियोगेन कुरु मे वचनं नृप ।
मुञ्चैनं बालकं दीनं रुदन्तं भृशमातुरम् ॥ इति

एवंविधैः सकरुणवचोभिर्भृशं प्रार्थितोऽपि राजा व्याधिमुक्तिकामस्तं न मुमोच । तदा विश्वामित्रादिष्टो शुनःशेपः प्रचेतसं तुष्टाव । स्तुतश्च वरुणः—

मुञ्च राजन् शुनःशेपं स्तुवन्तं मां भृशातुरम् ।
यज्ञोऽयं परिपूर्णस्ते रोगमुक्तो भवात्मना ॥ इत्युवाच ।

परं ब्रह्मपुराणे दृश्यते यद् वह्ने तु शुन शेपे विश्वामित्रो देवांस्तुष्टाव, शुनःशेपोऽपि विश्वामित्रोपदेशात् देवानुपससार । तेन देवाः प्रसन्नाः राज्ञो नैरुज्यं शुनःशेपस्य च पाशमोचं विदधुरिति तु ऐतरेयब्राह्मणसम्मतमपि ।

विश्वामित्रोऽपि शुनःशेप गृहीत्वा आत्मनः पुत्रत्वे प्रतिष्ठापयामास, देवरातसंज्ञाञ्चास्मै प्रददौ । इत्येषा प्रथमा कथा ।

अत्रेदं प्रसज्यते । महाभारते वेदसंहिताब्राह्मणश्रौतसूत्रादिष्वपि अजीगर्त्तस्य मध्यमपुत्रः खलु शुनःशेपनामा इति पठ्यते, परं रामायणे पुराणेष्वपि शुनःशेफनामानं तं लभामहे । एतयोरेकतराश्रये साधकबाधकानि सुधियो विचारयन्तु ।

अपरञ्चावधेयम् । रामायणेऽपि शतानन्दरामसंवादे विश्वामित्रतपोवर्णनप्रसङ्गे शुन शेपकथा प्रसक्ता । पर यागकर्त्ता न तत्र हरिश्चन्द्रः परमम्बरीषनामा कश्चिदैक्ष्वाकः कोशलपतिः । तस्य च यजमानस्य यज्ञसम्पद्भिया परसम्पदमसहमानो देवराजो यज्ञीयं पशुं जहार । तस्य च कुलगुरुः पशुप्रतिनिधीभूतेन केनचित् द्विजसूनुना यजनमादिशत् । राजानुचरैर्गोशतमूल्येन शुनःशेपनामा ब्रह्मबटुः क्रीतो राज्ञे च विसृष्टः । राजा तेनैव यष्टुं प्राक्रमत । विश्वा-

मित्रस्तु आत्मविनिमयेनापि तं मोचितुकामो बभूव, स्वयञ्च यूपे ग्रीवां स्थापयामास। कृतनिश्चयं तु मुनिं विलोक्य देवराजः पशुमम्बरीषाय ददौ। राजापि शुनःशेपं मुमोचेति। मनोहारिणी कथेयमालोचनीया। रामायणे बालकाण्डे एकोनषष्टितमे सर्गे विश्वामित्रमाहात्म्यकीर्त्तनप्रसङ्गे अयोध्याधिपतेस्त्रिशङ्कोः स्वर्गप्राप्तिः। षष्टितमे तु सर्गे तमेव प्रसङ्गमधिकृत्य—

एतस्मिन्नेव काले तु अयोध्याधिपतिर्महान्।
अम्बरीष इति ख्यातो यष्टुं समुपचक्रमे॥

इत्युक्तं त्रिशङ्कोरनन्तरमेव अम्बरीषस्य राज्यप्राप्तिं सूचयति। परं हरिश्चन्द्रस्यैव त्रिशङ्कोरनन्तरं राज्यप्राप्तिः सम्भवति, भारतपुराणवचनैरेकवाक्यत्वसम्भवात्। अतो हरिश्चन्द्रस्यैव अम्बरीष इति नामान्तरमासीदिति मन्यते। रोहितं खलु देवराजो यज्ञभूमेर्दूरञ्चकार, अम्बरीषस्य यागपशुमपि स एव देवराजो हृतवानिति विदुषां विचारणीयम्। सर्वत्र शुनःशेप एव बलिप्रतिनिधीकृतः। हरिश्चन्द्राम्बरीषयोरैकत्वे एतदपि अनुकूलयत्येव। परं मैत्र्युपनिषदादिषु अम्बरीषहरिश्चन्द्रेति एवं पृथङ्नामनिर्देशात्, तथा केषुचित् पुराणेषु नाभागस्य पुत्रोऽम्बरीष इति तयोः पार्थक्यं सूच्यते। अथ एवं वा भवितुमर्हति यत् त्रिशङ्कुपुत्रोऽम्बरीषो हरिश्चन्द्रश्च एक एव, परं नाभागपुत्रोऽम्बरीषः अस्मात् पृथगिति।

अपरञ्च सर्वत्रैव अजीगर्त्तस्य पुत्रः शुनःशेप इति उपलभ्यते। परं महाभारते अनुशासनपर्वणि विश्वामित्रोपाख्याने—

ऋचीकस्यात्मजश्चैव शुनःशेपो महातपाः।
विमोक्षितो महासत्रात् पशुतामप्युपागतः॥

हरिश्चन्द्रक्रतौ देवांस्तोषयित्वात्मतेजसा।
पुत्रतामनुसम्प्राप्तो विश्वामित्रस्य धीमतः॥

इत्यत्र ऋचीकस्यात्मजत्वं शुनःशेपे उपन्यस्तम्। परमेतद्विरोध-

निरसनार्थं तत्रैव नीलकण्ठीयटीकायाम्—ऋचीकस्यात्मज इति अत्रा-जीगर्त्तात्मज इति बोध्यम्। 'सोऽजीगर्त्तं सौयवसिमृषिं अशनाया' परीतम्। तस्य ह पुत्राः आसुः शुनःपुच्छः शुन शेपः शुनोलाङ्गूल' इति श्रुतेः। शुनःशेपस्य पिताजीगर्त्तं इत्यवगमात्, व्याख्यान्तराभि-प्रायो वेद शेयमिति नीलकण्ठोक्तमेव बहु मन्यामहे।

---

## गुरुशिष्यसंवादः

( पूर्वतोऽनुवृत्तः )

[निबन्धकः—श्रीशरत्कमलन्यायस्मृतितीर्थः]

द्वितीयशिष्यः। स्यादेतत्—गर्भाधाने विहितमन्यादि श्रोतुमिच्छामः।

गुरुः। श्रूयतां, तत्रैतदुक्तम्—

"वृषसिंहधनुर्मीनकुम्भवृश्चिकभेषु च।
शुभेषु शुभदृष्टेषु गर्भाधानं शुभावहम्॥"

शुभयुक्तदृष्टेषु वृषादिलग्नेषु तथा जीवग्रहस्वधनुर्मीनलग्नयोश्च गर्भाधानं शुभावहमिति। अपि च गर्भाधाने विशेषलग्न-ज्ञानमाह सत्कृत्यमुक्तावल्याम्, यथा—

पापासंयुतमध्यगेषु दिनकृल्लग्नचपास्वामिषु
तद्वद्‌यूनेष्वशुभोज्झितेषु विकुजे च्छिद्रे विपापे सुखे।
सद्युक्तेषु त्रिकोणकण्टकविधुष्वायत्रिषष्ठान्विते
पापे युग्मनिशास्वगण्डसमये पुंशब्दितः सङ्गमः॥

अयमर्थः—गर्भाधानकालीनाश्चन्द्ररविलग्नाश्चेदपापयुक्ताः (गर्भाधान-कालीनचन्द्रो रविर्लग्नश्चाऽपापयुक्तश्चेदित्यर्थः) तथा अपाप-मध्यगताः स्युः, अपि च तेषां सप्तमस्थानं यदि पापग्रहाऽनधि-ष्ठितं भवेत्, तथा लग्नादष्टमे मङ्गलश्चतुर्थे चेत् पापग्रहो न वर्त्तेत, केन्द्रे त्रिकोणे च शुभग्रहाधिष्ठिते, शुभयुक्ते चन्द्रे पाप

ग्रहाऽनधिष्ठितेषु तृतीयषष्ठेकादशस्थानेषु, अगण्डसमये षोडश-
दिनाभ्यन्तरे पुसश्चन्द्रताराशुद्धौ न गर्भाधानं शुभं विशेष-
मावहतीति ।

तृतीयशिष्यः । गण्डसमयः कीदृश इत्यवगन्तुमिच्छाम ।

गुरुः । कथ्यते—तथाहि गर्भाधानमुपक्रम्य पठितम्—

"मूलामघाऽश्विनीनामाद्यं ज्येष्ठागण्डसर्पाणाम् ।
अन्त्यं गण्डपदं त्यक्त्वा षोडशाहे ऋतौ व्रजेत् ॥" इति

मूलाया मघायास्तथा अश्विन्याश्चाद्य' पादः, ज्येष्ठाया रेवत्या अश्ले-
षायाश्च शेषः पादो गण्डसमय' कीर्त्तित इत्यर्थः । पापाऽसंयु-
तेति पूर्व्वोक्तसमयपालनमशक्नुवता पुरुषेण खलु गण्डसमय
एतादृशोऽवश्यं वर्जनीय इति तात्पर्य्यम् । अत्राप्यशक्तौ विशेष-
माह भुजवलभीमे । यथा—

अन्त्यं पौष्णेन्द्रसर्पाणामाद्यं पित्र्यऽश्विमूलगम् ।
गण्ड दण्डत्रयं ख्यातं सर्व्वकार्य्येषु कल्पितम् ॥

ज्येष्ठाश्लेषारेवतीनामन्त्यं दण्डत्रयं मघाश्विनीमूलानामाद्यं दण्डत्रय-
मवश्यं परिहरणीयमित्यर्थः । अत्र प्रतिप्रसवमाह व्यवहार-
चमत्कारे गर्गो यथा—

"लग्नस्थो वा सुतस्थो वा धर्म्मस्थो वा वली गुरुः ।
प्रोक्तर्क्षे शुभवारे च धारयेद् गर्भमुत्तमम् ॥
लग्नात्मजेशौ संयुक्तावन्योन्यञ्चापि वोक्षितौ ।
चेत्रे परस्परस्थौ वा पुत्रयोगा इमे स्मृताः ॥"

अयमर्थः—गर्भाधानलग्ने, अथवा लग्नात् पञ्चमे नवमे वा स्थाने यदि
वलवान् वृहस्पतिस्तदा गर्भाधानविहिते नक्षत्रे शुभवारे कृतं
गर्भाधानं शुभमावहति । अपि च गर्भाधानलग्नाधिपतिस्तत्-
पञ्चमाधिपतिश्चेदुभावेकराशिगतौ परस्परं वीक्षितौ परस्पर
क्षेत्रविनिमयभावमुपगतौ वा स्यातां तदानीं कृतं गर्भाधानं

पुत्रफलकमित्यर्थः। ततश्चैवमवस्थायां पूर्वोक्तविशेषशुद्रादि न तादृशमपेक्षणीयमित्यर्थोऽयं प्रतिप्रसव इत्यभिप्रायः।

---

## मासिकसभा

फाल्गुनस्य सप्तविंशदिवसे रविवासरे सायम् अष्टमघटिकायां परिषदो पौषमाघयोरधिवेशनद्वय सुसम्पादितमभूत्। तत्र च श्रीमन्तो महामहोपाध्याया गुरुचरणतर्कदर्शनतीर्थमहोदया. सभापतिपदमशून्यता समनयन्। सम्पादिते च नवीनसम्पादकैस्तत्रभवद्भिरमरेश्वठाकुरमहोदयैर्नूतनसभ्यनामप्रचारे, श्रीमद्भिः कालीपदतर्काचार्य्यैः स्वर्गतानां पण्डितप्रवराणां शशधरतर्कचूडामणिमहोदयानां, लर्ड इत्याङ्गलपदवीमारूढाना सत्येन्द्रप्रसन्नसिंहमहाशयाना, रायवाहादुर-पङ्कजकुमारचट्टोपाध्यायमहोदयानाञ्च कृते कृतः शोकप्रकाशः।

समनन्तरञ्च श्रीयुक्तोपेन्द्रमोहनसांख्यतीर्थमहोदयो ग्रहविलसितमिति नामधेयं प्रबन्धं, श्रीयुक्तरामकृष्णचक्रवर्त्ती एम् ए महाशयश्च 'आर्य्याणां धर्मग्रन्थाः' इति शीर्षकं प्रबन्धं स्वयं विरचय्य अवाचयताम्। श्रीमद्भिरच्चयकुमारशास्त्रिमहोदयैः प्रबन्धयोर्विशेषेण समालोचनं कृतम्। प्रायेण रात्रेर्दशमघटिकाया प्रकटीभूते सभापतेर्धन्यवादे सभाभङ्गो जातः।

---